---

ज्येष्ठेऽसितेऽर्चिततिथौ दिवसे तदीये
एषा कृतिर्मम सुपूर्तिमगादनल्पा ।
वाराणसीपुरपतेरपिचान्नपूर्णा-
देव्या अजस्रकृपया नगरे तदीये ॥ १ ॥
कृतिरेषा मम श्रीश्रीभवानीविश्वनाथयोः ।
कण्ठे समर्पिता भूयान्नित्यं प्रीतिकरी तयोः ॥ २ ॥

---


विविधपुस्तकप्राप्तिस्थानम्
श्रीहरिकृष्णदास
मालिक—"गुप्तबुक्‌डीपो"
कचौरीगली, बनारस सिटी ।

॥ श्रीदुर्गामाधवगणेशा विजयन्तेतराम् । ॥

श्रीर्विजयते ।

# फक्किकारत्नमञ्जूषा ।



विश्वनाथं प्रणम्याथ ध्यात्वा गुरुपदाम्बुजम् ।
फक्किकारत्नमञ्जूषा क्रियते छात्रहेतवे ॥ १ ॥

## अथ संज्ञाप्रकरणम् ।

ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलमाचरणीयमिति शिष्टाचारान्मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषकाणि च भवन्तीत्यादिभाष्यप्रामाण्याच्च मङ्गलमवश्यं कर्त्तव्यमित्यवधार्य्य प्रत्यवायप्रशमनाय समुचितमुनित्रयनमस्काररूपमङ्गलमारचयति—मुनित्रयमिति । ननु १'नमःस्वस्ती'त्यनेन नमःशब्दयोगे चतुर्थीविधानेन मुनित्रयं नमस्कृत्येत्यनुपपन्नमिति चेन्न । २(उपपदविभक्तेः कारकविभक्तिर्बलीयसी)ति परिभाषया द्वितीयाया

---

श्रीगणेशाय नमः ।

एव प्राबल्यबोधनेन तदुपपत्तेः । पदमाश्रित्योत्पन्ना विभक्तिरुपपद-विभक्तिः क्रियामाश्रित्योत्पन्ना विभक्तिः कारकविभक्तिः । उत्कृष्टनिष्ठं स्वनिष्ठापकृष्टत्वबोधनं तदनुकूलव्यापारो नमश्शब्दार्थः ॥

तदुक्तीरिति । मुनित्रयाणामुक्तीरित्यर्थः । परिभाव्येति । विचार्य्येत्यर्थः धातूनामनेकार्थत्वात् अत्र ज्ञापकं 'परौ भुवोऽवज्ञाने' इत्यत्रावज्ञानग्रहणमेव, तथाहि सर्वत्र परिसमभिव्याहारे भूधातोर-वज्ञानार्थस्यैव सम्भवाद्व्यावर्त्याभावेन व्यर्थमवज्ञानग्रहणं ज्ञापयति धातूनामनेकार्थत्वमिति ज्ञापिते तु तस्मिन्नर्थे भूधातोरवज्ञानातिरि-क्तार्थस्यापि सम्भवादन्यस्मिन्नर्थे प्रत्ययव्यावृत्त्यर्थमवज्ञानग्रहणस्य सार्थक्यमिति भावः । अनादरः परिभवः परीभावस्तिरस्क्रियेति-कोशप्रमाणेन परिसमभिव्याहारे भूधातोस्तिरस्कारार्थत्वात्परिभाव्ये-त्यस्य तिरस्कृत्येत्यर्थ।भ्युपगमे प्राचामुक्तीस्तिरस्कृत्येत्यर्थो व्या-ख्येयः । उक्तकोशस्य तत्रोक्तानुपूर्वीविशिष्टे एव शक्तिग्राहकत्वेन घञन्ताद्यन्तस्यैवानादरार्थबोधकत्वादिह विचारार्थकत्वे न कापि-बाधा दृष्टिपथे पथिकायते इति केचित् ॥

मोदते इति मुदः, 'इगुपधेति' कः कौमुदः कुमुदश्चन्द्रस्तस्य कौमुदीव चन्द्रिकेव, इयं कौमुदी सिद्धान्तभूतसकालार्थप्रकाशज-निकेत्यर्थः । ग्रन्थरूपाया अस्याः कौमुद्या अर्थप्रकाशकत्वधर्मेण

---

विवक्षायां चतुर्थ्याश्च प्रवृत्त्या भिन्नविषयादुक्तपरिभाषया द्वितीया-प्राबल्यबोधनमसङ्गतमिति चेन्न । नमः शब्दस्य निपातत्वेन द्योतक-तया द्योतकवाचकसमभिव्याहारे विनिगमनाविरहेण विषयतायामुभ-यप्रयोज्यत्वस्य सिद्धान्ततया नमःपदप्रयोज्यविषयतानिरूपितविषय-ताप्रयोजकत्वेन तात्पर्यविषयीभूतात्प्रातिपदिकाच्चतुर्थीति सूत्रार्थेन कृधात्वर्थफलेऽन्वयविवक्षायामुभयोः प्राप्त्या तत्सङ्गतेरिति भावः । नच नमस्कृत्येत्यस्य समस्तत्वेन जहत्स्वार्थायां नमःपदपर्याप्तप्रयो-जकतानिरूपितविषयताया अभावाच्चतुर्थ्यप्रसक्त्या तदवस्थ ए-[illegible]ष इति वाच्यं [illegible]हत्स्वार्था तु तत्रैव रूढिर्यत्र विरोधि[illegible] [illegible]हत्स्वार्थोपगमादित्यलम् ।

चन्द्रिकया साम्यमिति भावः, इयमिति प्रत्यक्षविषयकेनेदमा निर्देशो १भाविनोऽपि वस्तुनो बुद्ध्या विषयीकरणात् ॥

विषयश्चाधिकारश्च सम्बन्धश्च प्रयोजनम् । विनाऽनुबन्धं ग्रन्थादौ मङ्गलं नैव शस्यते इत्यभियुक्तोक्तेर्वैयाकरणेत्यादिना २ऽनुबन्धचतुष्टयस्य ग्रन्थादावावश्यकत्वं प्रदर्शयति तच्च विषयप्रयोजनाधिकारिसम्बन्धरूपम्बोध्यम् तथा च वैयाकरणसिद्धान्ता विषयाः, तज्ज्ञानं प्रयोजनं तज्जिज्ञासुरधिकारी,प्रतिपाद्यप्रतिपादकभावस्संबन्ध इति सूचितम् ॥

३ननु संज्ञा च परिभाषा चेत्यादिषड्विधसूत्रलक्षणस्य वृद्धैर्व्यवहृतत्वात् अइउणित्यादीनां कथं सूत्रत्वमुपपन्नमिति चेन्न । एषामकारादिक्रमबोधकत्वेऽपि प्रत्याहारविधायकाऽऽदिरन्त्येन सहेतेत्यनेनैकवाक्यत्वात् संज्ञासूत्रत्वे बाधकाभावेन तदुपपत्तेः, तथाहि-आदिरकारादिरन्त्येनेता सदृशेन णकारादिना सहोच्चार्य्यमाण आद्यन्ताक्षिप्तानां संज्ञेतिभावः, एवं प्रत्याहारविधायकोक्तसूत्रेण सहैकवाक्यतया स्वौजसमौडित्यादीनामपि सुबादिसंज्ञासूत्रत्वं स्वादिविधायकत्वञ्च बोध्यम् ॥

अइउणित्यादिचतुर्षु सूत्रेषु ४सन्धिकार्य्यं न भवति ५संहितायाः

---

१ भाविन इति । यथा भाविघटविषयेऽयं घटो भविष्यतीति व्यवहारस्तथेयमिति निर्देशः । सत्कार्यवादसिद्धान्ताश्रयणाद्वेयमिति निर्देश इति भावः । उपमानकौमुदीगतलिङ्गस्यारोपाद्ग्रन्थे स्त्रीलिङ्गनिर्देशोऽप्युपपद्यत एव । बुद्धिसत्तासमाविष्टस्य शाब्दबोधविषयत्वमिति सिद्धान्त इतिभावः ।

२ अनुबन्धचतुष्टयस्येति । ग्रन्थाध्ययनप्रवृत्तिप्रयोजकज्ञानविषयत्वमनुबन्धसामान्यलक्षणम् ।

३ ननु संज्ञा चेति । संज्ञा च परिभाषा च विधिर्नियम एव च । अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम् । इति स्वरूपम् ।

४ सन्धिकार्यमिति । अकारेकारयोर्गुणस्तस्याऽयादेशः । ऋकारस्य यण । एकारस्याऽय् । ऐकारस्याऽऽयूरूप सन्धि[illegible]

५ संहितायाः अविवक्षणादिति । ननु संहितैकपदे [illegible] धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥[illegible]

अविवक्षणात्। अकारादिवर्णेभ्यः १कारप्रत्ययः कुतोनेति नाऽऽश-ङ्क्यम्। बाहुलकात्। ननु कथमकारादिवर्णेभ्यो न विभक्तिरिति चेन्न। २अनुकरणत्वात्सौत्रत्वाच्चेति दिक्॥

ननु पाणिन्युक्तायां चतुर्दशसूत्र्यामक्षरसमाम्नाय इतिव्यवहारस्य कथमुपपत्तिराम्नायसमाम्नायेतिशब्दद्वयस्य श्रुतावेव प्रसिद्धत्वादि-त्याह—माहेश्वराणीति। महेश्वरादागतानीति तदर्थः महेश्वरप्रसा-दाल्लब्धानीति फलितम्। एवञ्चास्याश्श्रुतित्वेनोक्तव्यवहारोपपत्तिः सुलभेति बोध्यम्। अत्र प्रमाणं येनाक्षरसमाम्नायमधिगम्य महेश्व-रात्। कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नम इति शिक्षावचनम्। अत एव नृत्तावसाने नटराजराजो ननाद ढक्कां नव पञ्च १४ वारम्। उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालमिति संगच्छते संगच्छते च अत्र सर्वत्र सूत्रेषु अन्त्यं वर्णचतुर्दशम्। धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये॥ इति शिक्षावचनमिति दिक्॥

अइउण इत्यादि चतुर्दशसूत्रघटकाऽन्त्यवर्णैर्णकारादिभिरणादि-संज्ञोपपत्तये आह—एषामन्त्या इत इति॥

---

सुप्तिङ्चयरूपवाक्य एव संहिताया विवक्षाधीनत्वप्रतीत्या प्रकृते सुप्तिङ्चयरूपवाक्याभावात्कथमविवक्षेति चेदुच्यते यत्र कारकान्वि-तक्रियायाः प्रतीतिस्तत्रैव तादृशवाक्यत्वाङ्गीकारः प्रकृते तु शक्तपद-समुदायस्य वाक्यपदेन ग्रहणम् यथा गवित्ययमाहेत्यस्य वाक्यत्वा-त्समासग्रहणनिवर्त्यत्वोपपत्तिः। नचैतादृशवाक्यत्वस्य वाक्ये तु सेत्यत्र ग्रहणे चक्रतुरित्यत्र कदाचिद्यण् रहितः प्रयोगोऽपि स्यादिति वाच्यम्। संहितैकपदे इत्यनेन तत्र संहिताया नित्यत्वबोधनादिति।

१ कारप्रत्यय इति। वर्णात्कार इत्यनेनेति भावः। बाहुलकादिति। रोगाख्यायां ण्वुल् बहुलमित्यतोऽनुवृत्तबहुलग्रहणसामर्थ्यादित्यर्थः।

२ अनुकरणत्वादिति। अनुकार्यानुकरणयोरभेदविवक्षयामनुकरण-शब्दे शक्त्याऽर्थबोधकत्वरूपाऽर्थवत्त्वाभावेनाऽप्रातिपदिकत्वादिति भावः। सौत्रत्वाच्चेति। अनुकार्यानुकरणयोर्भेदविवक्षायामनुकरणशब्दस्य शक्त्याऽर्थबोधकत्वरूपाऽर्थवत्त्वेन प्रातिपदिकत्वात्सौत्रत्वाद्विभक्त्यनुत्प-त्तिरिति भावः।

ननु 'उरण्रपरः' इत्यत्र लपरत्वसिद्ध्यर्थं रप्रत्याहारोपपत्तिरावश्यिका सा च 'लण्' सूत्रस्थाकारस्येत्संज्ञां विना न सम्भवतीति तत्सिद्धिप्रकारं प्रदर्शयति—लण्सूत्रेऽकारश्चेति । अत्र प्रमाणञ्च 'तुल्यास्य'सूत्रस्थं क्वचिदनन्त्येनापि प्रत्याहार इति कैयटीयव्याख्यानशालि लपरत्वं वक्ष्यामीति भाष्यमेव । 'अतो लून्तस्ये'त्यत्र पाणिनिकृतलकारोच्चारणेनानित्योऽयं प्रत्याहारः । अन्यथा प्रत्याहारेणैव निर्वाहात्तत्र लकारोच्चारणं स्पष्टमेव व्यर्थं स्यात् । प्रफुल्त इत्यत्र 'रदाभ्यामि'त्यनेन निष्ठातकारस्य नत्वाभावोऽनित्यत्वफलम्बोध्यमिति प्राञ्चः ॥

नव्यास्तु 'लण्' सूत्रस्थाकारो नानुनासिकः प्रत्याहारेणैव निर्वाहे पाणिनिकृतस्य 'अतोलून्ते'त्यत्र लकारोच्चारणस्य वैयर्थ्यापत्तेः । अर्द्धमात्रालाघवाय यप्रत्याहारेणैव व्यवहारस्य समुचितत्वाद्यण्प्रत्याहाराश्रयणस्य वैयर्थ्यापत्तेश्च, आचारादप्रधानत्वाल्लोपश्च बलवत्तर इति भाष्योक्ततृतीयहेतोरव्यापकत्वापत्तेश्च । तथाहि, अनुबन्धाः प्रत्याहारजन्यबोधविषयत्वाभाववन्तः लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वात् । अत्र प्रथमः पक्षो द्वितीयः साध्यस्तृतीयो हेतुः पक्षतावच्छेदकावच्छेदेन हेतोः पक्षतावच्छेदकव्यापकत्वनियमः प्रकृते 'लण्' सूत्राकारस्यानुबन्धत्वेन पक्षत्वसत्वेऽपि पूर्वोक्तसाध्यासत्वात् हल्प्रत्याहारसिद्धेः प्रागच्पदार्थासिद्ध्योपदेशेऽजित्यस्य वाक्यार्थाभावेन तस्येत्संज्ञालोपयोरभावाल्लोपरूपहेतोरसत्त्वेन तस्याऽव्यापकत्वापत्तिः तयोरभावे भाष्यकृता प्रत्याहारे [1]जातिग्रहणपक्षस्यैव सिद्धान्तितत्वेन हल्प्रत्याहारे लणित्यकारप्रवेशात्तस्य हल्त्वेन [2]मामाँस्त्रायस्वेत्यत्रानुनासिकपक्षेऽनुस्वारापत्तिः

१ जातिग्रहणपक्षस्यैवेति । ननु हल्प्रत्याहारसिद्धेः प्राक् उपदेशेऽजित्यस्य वाक्यार्थबोधाऽभावेऽप्यणप्रत्याहारकाले लणित्यकारस्येत्संज्ञालोपाभ्यामपहारसम्भवेनाक्षरसमाम्नायिकानामेव ग्राहकशास्त्रेऽणपदेन ग्रहणेन साऽनुनासिकारस्याऽनणत्वात्तेन दीर्घस्यानुनासिस्य न ग्रहणसम्भव इत्याशङ्कामुत्तरयति—जातिग्रहणपक्षस्यैवेति ।

२ मामाँस्त्रायस्वेति । माम् आन् त्रायस्वेति पदत्रयम् । अत्राऽऽनिति अनितेः क्विबन्तस्य सम्बुद्धौ रूपम् । जातिग्रहणपक्षाश्रयणेन दीर्घस्यानुनासिकत्वसमानाधिकरणात्त्वावच्छिन्नस्य हल्त्वादिह दोषः ।

[१]सोऽस्तीत्यादौ सुलोपाद्यापत्तिश्च स्यात् तस्मादप्रामाणिकत्वं स्यात् अनुनासिकत्वम् ऋ लृ वर्णयोः सावर्ण्यवत् 'उरण् रपर' इत्यत्र लकारग्रहणमावश्यकमेवेति वदन्ति इति दिक् ॥

ननु हयवरेत्यादावकारोच्चारणेन तस्य हल्त्वप्रसङ्गापत्त्या पूर्वोक्तस्य मामाँ‌स्त्रायस्वेत्यत्रानुस्वारापत्तिरूपस्य सोऽस्तीत्यादौ सुलोपाद्यापत्तिरूपस्य च दूषणस्य दुर्वारत्वमित्यत आह—हकारादिष्वकार उच्चारणार्थ इति। अयम्भावः न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवतीति भाष्यात्तस्योच्चारणार्थत्वमेव न ग्रहणार्थत्वमिति, एषा ह्याचार्य्यस्य शैली लक्ष्यते यत्तुल्यजातीयाँस्तुल्यजातीयेषूपदिशति अचोऽच्षु हलोहल्ष्विति प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु ग्रहणन्नेति वार्त्तिके भाष्याच्च तस्योच्चारणार्थत्वमेवेति दिक् ॥

ननु वाक्यार्थबोधे पदार्थज्ञानस्य कारणत्वमपेक्षितमेवञ्च 'हलन्त्यम्' इत्यस्य वाक्यार्थबोधे हल्पदार्थज्ञानमावश्यकं तच्च 'आदिरन्त्येन सहेता' इत्यस्य वाक्यार्थबोधमन्तरा न संभवतीति हलन्त्यसूत्रस्य वाक्यार्थबोधे आदिरन्त्येनेत्यस्य वाक्यार्थबोधोऽपेक्षितः, एवमादिरन्त्येनेत्यस्य वाक्यार्थबोध इत्पदार्थज्ञानमावश्यकं तच्च हलन्त्यसूत्रवाक्यार्थबोधाधीनमित्युभयोर्वाक्यार्थबोधे उभयसूत्रवाक्यार्थबोधस्यापेक्षितत्वेन परस्परापेक्षितत्वरूपान्योन्याश्रयस्य प्रादुर्भावादेकस्यापि वाक्यार्थबोधो न स्यादन्योन्याश्रयाणि कार्य्याणि न प्रकल्पन्ते यथा नौर्नावि बद्धा नेतरत्राणाय भवतीति भाष्यादित्यावृत्त्या तत्परिहरति—हलन्त्यमिति। आवृत्त्योभयहलन्त्य सूत्रस्य कल्पनात् पूर्वत्र सम्बन्धसामान्ये षष्ठ्या समासे हल्सूत्रस्यान्त्यं यत्तदित्संज्ञमित्यर्थः परत्रः राहोः शिर इतिवदभेदे षष्ठ्या समासे हल्रूपान्त्य-

१ ननूक्तस्थलीयदोषवारणाय ह्रस्वत्वनिरनुनासिकत्वसमानाधिकरणाच्त्वजात्यवच्छिन्नस्यैव हल्त्वमास्तामित्यत आह सोऽस्तीति। नच एतत्तदोरिति सूत्रारम्भसामर्थ्यादकारस्य हल्त्वाभावज्ञापनान्न दोषः अन्यथा एष विष्णुः स शम्भुरित्यादौ हलः परत्वेन हल्ङ्यादिसूत्रेणैव लोपसिद्धेः सूत्रवैयर्थ्यस्य स्पष्टत्वादिति वाच्यम्। उक्तसूत्रारम्भसामर्थ्यात् लघुसूत्राऽकारस्यैवाऽनुनासिकत्वाप्रामाण्यज्ञापने लाघवादिति भावः।

मिदित्यर्थः । एवञ्च पूर्वं हलन्त्यसूत्रवाक्यार्थबोधस्य आत्त्वेनेत्पदार्थज्ञानस्य सुलभत्वादादिरन्त्येनेत्यस्य वाक्यार्थबोधे जाते हल्पदार्थप्रसिद्धौ द्वितीयहलन्त्यसूत्रवाक्यार्थबोधे कस्याप्यपेक्षाविरहात् नान्योन्याश्रयशङ्काकलङ्कलेशोऽपीति भावः । आवृत्तौ न विभक्ताविति सूत्रमेवं प्रमाणमन्यथा हलन्त्यमित्यस्य वाक्यार्थाऽनिष्पत्त्यत्वाप्रवृत्तौ निषेधो व्यर्थ एवेति दिक् ॥

ननु रट्लानामिति वक्तव्ये रलयोरिति मूलोक्तिर्न युक्ता टकारस्यापि मध्यवर्त्तित्वादित्याह—प्रत्याहारेष्वितां न ग्रहणमिति । अनुबन्धानां तत्र ग्रहणाभावे 'अनुनासिक'इतिनिर्देश एव ज्ञापकः तथाहि ककारस्याप्यच्प्रत्याहारमध्यगतत्वेन तत्वात्तस्मिन्निकारस्य यणि निर्देशासङ्गतिः ज्ञापिते तूक्तार्थे ककारस्याच्त्वाभावेन यणोऽप्राप्त्या निर्देशस्सूपपन्नः । नचेकारविधानसामर्थ्याद्यणोऽप्राप्तिरिति वाच्यम् । शास्त्रस्य साक्षाद्बाधकल्पनाऽपेक्षया प्रत्याहारेऽनुबन्धानां न ग्रहणमित्यत्रैवेत्त्वविधानस्य ज्ञापकत्वे लाघवात् । नच तत्र 'इकोऽसवर्णे शाकल्यस्ये'तिप्रकृतिभावेन नोक्तदोषोदय इति वाच्यम् । तस्य वैकल्पिकत्वेन दोषस्य दुर्वारत्वात् । प्रत्याहारेऽनुबन्धानां ग्रहणन्नेति ज्ञापनात्प्राक् ककारेऽच्त्वस्य सत्त्वेन तस्मिन्भसंज्ञाप्रवृत्तेश्च । नच यणं बाधित्वा परत्वात् 'यस्येति च' इतीकारलोपे यणोऽप्राप्त्या निर्देशाद्यणभावः सिद्ध इतिशेखरोक्तं कथं सङ्गतमिति वाच्यम् । इकारस्याचि परे यद्यत्प्राप्नोति तत्सर्वस्योपलक्षकत्वे तस्य तात्पर्य्यादिति दिक् ।

ननु प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु ग्रहणन्नेति वार्त्तिके प्रत्याहारशब्दस्य वर्णसमाम्नाये प्रसिद्ध्या प्रत्याहारेष्वितामित्यनुपपन्नमित्याह—आदिरन्त्येनेतीति । वार्त्तिके तादर्थ्यात्ताच्छब्द्यमस्योध्यम् एवञ्च प्रत्याह्रियन्ते वर्णा एकत्रीक्रियन्ते यत्रासौ प्रत्याहार इति योगरूढिबलात्कृत्रिमाकृत्रिमन्यायाच्चैतस्यैव ग्रहणमिति भावः ॥

आये इति । अत्र 'निपाता आद्युदात्ता' इत्यनेन निपातस्याऽऽकारस्याद्युदात्तत्वम् यच्छब्दस्य तु प्रातिपदिकं फिट् तस्यान्त उदात्त इत्यर्थकेन 'फिषोऽन्त उदात्त'इत्यनेनाऽन्तोदात्तत्वम् । असः सुप्त्वात् 'अनुदात्तौ सुप्पितौ' इत्यनेनाऽनुदात्तत्वम् । एकारस्य उदात्तेन

सहैकादेश उदात्त इत्यर्थकेन, 'एकादेश उदात्तेनोदात्त'इत्यनेनो-दात्तत्वम् ॥

अर्वाङिति । अभिमुखवाच्यव्युत्पन्नं प्रातिपदिकमिदम् 'फिषोऽन्त उदात्त'इत्यनेन तस्यान्त उदात्तः प्रथमस्य-यस्मिन्पदे यस्योदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा शेषं तत्पदमनुदात्ताच्कं स्यादित्यर्थकेन, 'अनुदात्तं पदमेकवर्जम्'इत्यनेनानुदात्तत्वम् अर्वन्त-मञ्चतीत्यर्थे कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम् ॥

अतन्त्रमिति । स्वशास्त्रसंकेतितरूपेण नार्थबोधजनकमित्यर्थः किन्त्वर्द्धमात्रारूपार्थबोधजनकमिति बोध्यम् । एवञ्च दीर्घादावप्यर्द्ध-मात्राया एवोदात्तत्वमिति नागेशाः । दीक्षितास्तु—एकाक्षरसमावेशे पूर्वयोः स्वरितः स्वरः । तस्योदात्ततरोदात्तादर्द्धमात्रार्द्धमेव वा ॥ इति प्रमाणबलेन दीर्घेऽप्यर्द्धस्यैवोदात्तत्वमित्यभ्युपगच्छन्ति उदात्ता-नुदात्तयोरेकस्मिन्समावेशे स्वरितो भवति तस्योदात्तापेक्षयोदात्त-तराऽर्द्धमात्राऽर्द्धमेवोदात्तस्वेत्युक्तकारिकाऽर्थात् ॥

ह्रस्वस्वरितोदाहरणम् क्वेति । अत्र 'किमोऽत्'इत्यत' 'क्वाती'ति कादेशे 'तित्स्वरितम्'इति स्वरितः, व इति । 'अनुदात्तं सर्व्वम-पादादौ' इत्यनेन व इत्यस्यापदादौ विद्यमानस्यानुदात्तत्वम् । दीर्घस्वरितोदाहरणम् रथानामिति, येरा इति । 'स्वरितो वाऽनु-दात्ते पदादौ'इत्यनेनैकारस्य स्वरितत्वम् । ननु 'नोदात्तस्वरितो-दयम्'इत्यनेन निषेधे कथमेकारस्योक्तसूत्रेण स्वरितत्वमिति चेन्न १(अनन्तरस्येति) न्यायबलेन 'उदात्तादनुदात्तस्य स्वरित'इत्यस्यैव तेन निषेधकरणात् ॥

स्वरितपरमुदाहरति—शतचक्रमिति । अहेरित्यर्थेऽह्यः वृत्रस्ये-त्यर्थः । नात्र गुणश्शङ्कनीयः 'छन्दसि वा वचनं प्राङ्णौ चङ्युपधायाः' इति वचनस्य जागरूकत्वात् उदात्तस्वरितयोः'इत्यनेन स्वरितत्वम् 'उदात्तयणो हल्पूर्वात्'इत्यनेन न सः छान्दसत्वात् यच्छब्दस्य 'फिषोऽन्त उदात्त' इत्यनेनान्तोदात्तत्वं तदेकादेशस्य वा स्वरितत्व-मिति दिक् ॥

---

१ अनन्तरस्येति । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति न्यायस्वरूपम् ।

ननु दण्डाढकमित्यादौ संवृतस्य ह्रस्वाकारस्य विवृतेन दीर्घाकारेण सह प्रयत्नभेदात् 'अकः सवर्णे दीर्घः' इति दीर्घो न स्यादित्यत आह—प्रक्रियादशायां तु विवृतमेवेति । साधनावस्थायां तस्य विवृतत्वं प्रतिज्ञेयमिति तदर्थः । एवञ्च तत्र दीर्घसिद्धिः सुलभेति भावः । ह्रस्वस्य प्रयोगे संवृतमित्यत्र प्रमाणमाह—अ अ इति । 'सुपां सुलुगिति' विभक्त्योर्लुक् आद्योऽकारो विवृतः परश्च संवृतः प्रयत्नभेदात्तत्र सन्धिर्नेति बोध्यम् ॥

ननु अ अ इति सूत्रेणाकारस्य संवृतत्वविधाने दण्डाढकमित्यादौ कथं दीर्घ इत्याह—अस्य चाष्टाध्यायीमित्यादि । उक्तसूत्रस्य संपूर्णाष्टाध्याय्यामन्तिमत्वेनासिद्धत्वादुक्तप्रयोगे दीर्घसिद्धिरिति भावः ॥

पूर्वत्रासिद्धमित्यस्याधिकारत्वे फलमाह—त्रिपाद्यामपीति । अस्य त्रैपादिकशास्त्राणामादिभूतस्याधिकारत्वं विना स्वोत्तरदेशगमनासम्भवेन त्रिपाद्यामपि पूर्वं प्रति परशास्त्रमसिद्धमित्यर्थालाभात्पूर्वपदेन सापादिकस्यैव ग्रहणेन गोधुङ्मानित्यत्र परत्वात्कृतेषु जश्त्वानुनासिकेषु भष्भावानापत्तिः, अधिकारत्वे तूक्तार्थलाभेन परयोरपि जश्त्वानुनासिकयोर्भष्भावदृष्ट्याऽसिद्धत्वात्पूर्वं भष्भावे ततस्ताविति इष्टसिद्धिः । वस्तुतस्तु घत्वे कृते 'झय' इति वत्वापत्तिर्दोषो बोध्यः । नच परत्वाज्जश्त्वानुनासिकत्वयोः कृतयोर्न वत्वप्राप्तिरिति वाच्यम् । 'विप्रतिषेधे परम्' इत्यस्य यथोद्देशत्वेन त्रिपाद्यामप्रवृत्त्या पूर्वमुक्तकार्य्यद्वयस्याप्राप्त्या वत्वस्यैव प्रवृत्तेरिति भावः ॥

अनेन शास्त्रासिद्धत्वमेव विधीयते न कार्य्यासिद्धत्वम् तथासति अमू इति न सिद्ध्येत् तथाहि—अद अ औ इतिस्थितौ परत्वात्कृतस्य मुत्वस्य सापादिककार्य्यदृष्ट्याऽसिद्धत्वेऽपि देवदत्तहन्तृहतन्यायेनाकाराभावेन पररूपाद्यनापत्तेः शास्त्रासिद्धत्वे नोक्तदोषः, अन्तरङ्गत्वात्प्रागप्रवृत्ते शास्त्र एवानेनासिद्धत्वबोधनात्पूर्वं जातस्यापि मुत्वस्य पररूपदृष्ट्याऽसिद्धत्वात्प्राग्पररूपे ततो वृद्धौ ततो मुत्वे च [illegible]सिद्धिरिति दिक् ॥

[illegible] अणप्रत्याहारस्य पूर्वणकारेण परणकारेण चोपपत्तिसम्भ[illegible] परेण पूर्वेण वोक्तप्रत्याहारग्रहणमितिसन्देहप्राद[ुर्]भावे [illegible] परेण णकारेणेति । 'ऋत उत्' इत्यत्र तपरकार[illegible] [illegible]हि पूर्वणकारेणोक्तप्रत्याहाराङ्गीकारे

ऋकारस्याण्त्वाभावादणुदित्सूत्रेण सवर्णग्राहकताऽप्रसक्तौ तद्व्यावृत्त्यर्थं तत्र कृतं तपरकरणं व्यर्थं सदुक्तार्थं ज्ञापकम्। परेण तदभ्युपगमे तु ऋकारस्याणत्वेन ग्राहकशास्त्रप्रवृत्त्या प्राप्तसवर्णग्रहणव्यावृत्तये तपरकरणस्य सार्थक्यमिति तदाशयः॥ वस्तुतस्तु नोक्तसूत्रघटकऋत इत्यत्र तपरकरणमुक्तार्थं ज्ञापकम्, तस्य तपरसूत्रेण लृकारग्रहणार्थमावश्यकत्वात्। एवञ्च 'उरृत्'इत्यत्रत्यतपरकरणस्योक्ताऽर्थे ज्ञापकत्वं बोध्यम्, तथाहि, चुरादिण्यन्तात्कृत संशब्दने इत्यस्माद्धातोर्लुङि अचीकृतदित्यत्र दीर्घऋकारस्थाने ह्रस्व ऋकार एव यथा स्यादित्येतदर्थं तत्र तपरकरणं क्रियते, अत्र पूर्वणकारेणाऽण्ग्रहणे तु उद्देश्येन विधेयेन च ऋकारस्याऽणभिन्नत्वेन भिन्नकालस्याऽग्रहणान्न तस्य स्थानित्वस्य न वाऽऽदेशत्वस्य प्रसक्तिरिति व्यर्थमेव तत्, ज्ञापिते तूक्तार्थे ऋकारस्याऽण्त्वाद्ग्राहकशास्त्रेण सवर्णत्वबोधनाद्दीर्घादेशापत्तिरिति तद्व्यावृत्त्यर्थं तपरकरणं स्वांशे चरितार्थमिति भावः॥

ननु कण्ठतालुस्थानिनोर्विवृतप्रयत्नवतोरैकारैकारयोरेवं कण्ठौष्ठस्थानिनोर्विवृतप्रयत्नवतोरौकारौकारयोस्तुल्यत्वेन'तुल्यास्य प्रयत्नं सवर्णम्'इत्यनेन परस्परं सावर्ण्यं स्यादित्याह—ऐ औजिति सूत्रारम्भसामर्थ्यादिति। उक्तवर्णद्वयस्य मिथः सवर्णत्वे एकारेणैकारस्यैवमोकारेणौकारस्य ग्रहणे सिद्धे पृथगैऔजिति सूत्रं व्यर्थं सत्तयोः सवर्णाभावत्वं ज्ञापयतीति तदाशयः। 'एचोऽयवायावः' इत्यत्र प्रत्याहारार्थमुक्तसूत्रस्य चारितार्थ्यमिति नाशङ्कनीयम् 'एङोऽयवायाव' इतिन्यासे 'स्थानेऽन्तरतम'इत्यनेनैव निर्वाहसम्भवात्। नच 'वृद्धिरादैच्' इत्यत्र प्रत्याहाराय तदिति वाच्यम्। अत्राप्यैङित्येव पठितव्यं तत्र गुणसूत्रे च मिथः सवर्णसंज्ञावादिनये चतुर्णां ग्रहणेन दोषाभावात्। नच १'नज्वाभ्यां पदान्ताभ्याम्' इत्यत्र २तदर्थं ३तदिति वाच्यम्। अत्राप्यै औ इति स्वरूपेण पाठकरणेनैव निर्वा-

१ नज्वाभ्यामिति। नज्वाभ्यां पदान्ताभ्यां पूर्वौतु ताभ्यामैच् इति सूत्रस्वरूपम्।

२ तदर्थमिति। ऐच्प्रत्याहारार्थमित्यर्थः।

३ तदिति। ऐ औजितिसूत्रमित्यर्थः।

ह्यादित्युक्तसूत्रस्योक्तार्थे ज्ञापकत्वं सुस्थमेव। [1]विवृततरविवृततमेति प्रयत्नद्वयेनैङोरैचोश्च भेदप्रतिपादने तु नोक्तसूत्रस्य वैयर्थ्यमिति दिक्॥

ननु कण्ठस्थानित्वेन विवृतप्रयत्नवत्त्वेन च तुल्यत्वादकारहकारयोः सवर्णसंज्ञायां विश्ववाभिरित्यादौ हकारसवर्णाकारस्य 'होढ' इति ढत्वं कुतो नेति चेन्मैवम्। नाज्झलाविति सावर्ण्यप्रतिषेधात्। नचात्राच्पदेन ह्रस्वस्यैवाकारस्य ग्रहणं वर्णसमाम्नाये हि ह्रस्व एवाकारः पठितः, दीर्घादेरपाठेन ग्रहणं न स्यात्। नचाच्पदे ग्रहणकशास्त्रप्रवृत्त्या दीर्घादीनां ग्रहणेन न निषेधानुपपत्तिरिति वाच्यम्। प्रथमं वर्णानामुपदेश [2]इत्यादि 'नाज्झलावि'तिसूत्रभाष्योक्तवाक्यापरिसमाप्तिन्यायादणुदित्सूत्रवाक्यार्थबोधस्य 'नाज्झलावि'त्यतः प्रागनिष्पत्तेरिति दीर्घाकारहकारयोः सावर्ण्यनिषेधो न स्यादिति वाच्यम्। 'नाज्झलावि' त्यात्राचः प्रागाकारस्य प्रश्लिष्टत्वादाकारसहिताज्झलोः सवर्णसंज्ञानिषेधादिति भावः। प्रश्लेषे प्रमाणं 'कालसमयवेलासु'तिसूत्रमेव अन्यथाऽऽकारस्य हकारसवर्णत्वेनेण्त्वात् 'आदेशप्रत्यययोरि'ति षत्वापत्त्या निर्देशासङ्गतिः। नन्वेवमपि हे यियाउ सो हे पिपा३ सो इति भाष्यप्रयोगानुपपत्तिरुक्तरीत्या षत्वापत्तेरिति चेन्न। उक्तभाष्यप्रयोगप्रामाण्येन तत्र प्लुताऽऽकारस्यापि प्रश्लेषेण तस्यापि हकारेण सवर्णत्वनिषेधात्। ईषद्विवृतमुष्मणां विवृतं स्वराणामिति रीत्या सावर्ण्याभावमुपपाद्य 'नाज्झलावि'ति सूत्रं प्रत्याचख्यौ भाष्यकार इति दिक्॥

इति संज्ञाप्रकरणम्।

---

[1] विवृततरेति। एङो विवृततरप्रयत्नवत्त्वमैचश्च विवृततमप्रयत्नवत्त्वमित्येवंरूपेण तयोः प्रयत्नभेदात्सावर्ण्याभावोपपत्तौ तदर्थमै औजिति सूत्रवैयर्थ्यद्वारा तयोः सावर्ण्याभावसाधनप्रयासो न करणीयः स्यादिति भावः।

[2] पूर्वं वर्णानामुपदेशस्तदुत्तरमित्संज्ञा तदुत्तरमादिरन्त्येनेति प्रत्याहारसिद्धिस्तदुत्तरकाला सवर्णसंज्ञा तदुत्तरकालमणुदिति एतेन सर्वेण समुदितेन अन्यत्र सवर्णानां ग्रहणम्भवति न स्वस्मिन्नापि स्वाङ्गे नचात्रेकारः शकारं गृह्णातीत्येतत्सर्वमादिपदेन बोध्यम्।

## अथ परिभाषाप्रकरणम् ।

ननु 'आदेःपरस्ये'ति परग्रहणघटितसूत्रकरणे योगविभागाङ्गीकारे च गौरवबाहुल्येन 'तस्मादित्युत्तरस्यादेरि'त्येव न्यासः करणीय इति शङ्कोत्थितौ समाधत्ते—अष्टाभ्य औशित्यादाविति । अयमभिप्रायः, परग्रहणयोगविभागाकरणलाघवायोक्तन्यासाभ्युपगमेऽष्टन्शब्दाज्जसि आत्वे अष्टा अस् इति स्थितौ 'अनेकाल् शिदि'त्यनेन 'आदेः परस्ये'त्यस्य परत्वाद्बाधानापत्त्याऽऽदेरेवादेशापत्त्या विभक्तिसकारस्य रुत्वे विसर्गे च कृतेऽष्टावितीष्टरूपस्य सिद्धिर्नस्यात् । राद्धान्ते 'आदेः परस्ये'त्यपेक्षया अनेकाल् शिदि' त्यस्य परत्वादनेन तस्य बाधे जस औशादेशे रूपमिष्टं सिद्ध्यतीति । नचोक्तन्यासस्य 'अनेकाल् शिदि'त्यतः प्राग् पाठे नोक्तदोषोद्धोष इति वाच्यम्। 'तस्मादित्युत्तरस्ये'ति वत् 'आदेः परस्ये' त्यस्याप्यागमविषये प्रवृत्त्या 'आज्जसेरसुगि'त्यनेनाकारस्यासुगागमे परसकारस्य संयोगान्तलोपे पूर्वस्य रुत्वे विसर्गे च देवासः ब्राह्मणास इत्यसिद्धेः । नच तत्र 'असुटी'ति न्यासे न दोष इति वाच्यम् 'अश्वक्षीरवृषलवणानामि'त्यनेनासुडापत्त्याऽश्वस्यतीत्यस्य सिद्ध्यनापत्तेः । नचात्र क्यचोऽसुङ्विधाने न दोष इति वाच्यम् । तथा सति 'क्यचि चे'त्यनेनेत्वस्य दुर्वारत्वात् । नच 'क्यच्यसुगि'तिन्यासे नोक्तदोष इति वाच्यम् । बहुलाग्रवाभावादिति संक्षेपः ॥

इति परिभाषाप्रकरणम् ।

---

## अथाच्सन्धिप्रकरणम् ।

ननु व्यक्तिपक्षे उच्चारित एव शब्दः प्रत्यायको नानुच्चारित इत्यणुदित्सूत्रभाष्योक्तेः वर्णसमाम्नाये ह्रस्वानामेव पाठादिक्पदोपलक्ष्येकारादिभिर्दीर्घादीनामग्रहणात्सुधी उपास्य इत्यादौ 'इको यणची'ति यणादेशो न स्यादतः प्रत्याहारग्रहणेषु तद्वाच्यवाच्ये निरूढा लक्षणा बोध्या। प्रत्याहारवाच्याकारादेः स्ववाच्ये दीर्घादौ लक्षणेति तदर्थः। अत्र प्रमाणम् 'दीर्घाज्जसिच' 'ल्वादिभ्य' इत्यादिनिर्देश एव । एवञ्चकपदेन पदपदेर्ग्रहणं यण्पदेन च सस्तागामिति न यथा संख्य-

सम्भवः। नच लक्ष्यार्थबोधात्प्राग्भाविनं शक्यार्थबोधमादाय यथा संख्यमस्त्विति वाच्यम्। ऋकारलृकारयोर्मिथः सवर्णत्वेन ताभ्यां प्रत्येकं त्रिंशदुपस्थितौ लृवर्णस्थाने रेफस्य ऋवर्णस्थाने लकारस्य च प्रसङ्गापत्तेर्यथासंख्यसूत्रेण निर्वाहो नास्ति किन्तु 'स्थानेऽन्तरतम'इति सूत्रेणैवेत्याशयेनाह—स्थानत आन्तर्य्यादिति। जातिपक्षे यथा संख्यसूत्रेणापि निर्वाह इति स्पष्टं 'स्थानेऽन्तरतम' इत्यत्र भाष्ये। १भाव्यमानपरिभाषया यणा सवर्णग्रहणाऽप्रसक्त्याऽनुनासिकस्थाने निरनुनासिक एव यणिति बोद्धव्यम्। अणुदित्सूत्रेण जातिपक्षेण गुणानामभेदकत्वेन च प्राप्तस्यापि सवर्णग्रहणस्योक्तपरिभाषया निषेधकरणाद् गुणा अभेदका इति पक्षेऽपि न यणा सवर्णग्रहणमिति दिक्॥

ननु सुधी उपास्य इत्यत्र यणादेशे कृते 'अनचि च'ति धकारस्य द्वित्वन्न स्याद्यकारस्य स्थानिवत्त्वेनाच्परत्वादनचीति निषेधप्रवृत्तेरिति चेन्न। अनल्विधाविति स्थानिवत्त्वनिषेधात्। तथाहि अनल्विधावित्यस्य द्विविधोऽर्थः अलत्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशतावद्धर्मिकारोपप्रकारीभूतधर्मावच्छिन्नोद्देश्यतानिरूपकविधौ स्थानिवत्त्वन्नेत्येको नव्यमतसिद्धः। स्थान्यवयवाल्वृत्ती योऽल्वव्याप्यो धर्मस्तदाश्रयविधौ न स्थानिवदिति द्वितीयः प्राचीनसम्मतः। नच'अचः परस्मिन्नि'ति स्थानिवत्त्वेऽच्परत्वस्य तादवस्थ्येन कथं द्वित्वमिति वाच्यम्। 'न पदान्त'सूत्रेण धकारस्य द्विर्वचने कर्त्तव्ये स्थानिवत्त्वस्य निषेधकरणादित्याशयेनाह—इति धकारस्य द्वित्वमिति। ननु सकारविसर्गाणां द्वित्वे कृतेऽधिकरूपस्य सम्भवाच्चत्वारीति कथनमयुक्तमिति चेन्न। धकारयकारयोर्द्वित्वविकल्पाच्चत्वारीति ग्रन्थकर्त्तुराशयादित्याह—द्वित्वविकल्पाच्चत्वारि रूपाणीति। नचा-

१ भाव्यमानेति। भाव्यमानेन सवर्णानां न ग्रहणमिति परिभाषास्वरूपम्। अणुदित्सूत्रेऽप्रत्यय इत्यनेन सामर्थ्यात्सूत्रप्राप्तं जातिपक्षेण प्राप्तं गुणाभेदकत्वेन च प्राप्तं सवर्णग्रहणं विधीयमानेन न भवतीत्यर्थः। अप्रत्ययं इति प्रतिषेध इमां परिभाषां ज्ञापयति। ज्याद् ईयस इत्येनान्तर्यतो दीर्घे सिद्धे ज्यादिति दीर्घोच्चारणमपि ज्ञापयतीति बोध्यम्।

न्तरङ्गद्वित्वदृष्ट्या बहिरङ्गयणोऽसिद्धत्वेन द्वित्वं दुर्लभमिति वाच्यम् । अन्तरङ्गपरिभाषायास्त्रिपाद्यामप्रवृत्तेः । नच कार्य्यकालपक्षे त्रिपाद्यामपि तत्प्रवृत्तिरिति वाच्यम् । एकतरपक्षेण लक्ष्यसिद्धौ पक्षान्तरमवलम्ब्य दोषदानस्य भाष्ये क्वाप्यदृष्टत्वात् । अत एव भाष्ये दध्यत्रेत्युदाहरणं यणो मयो द्वे वाच्ये इत्यस्य दत्तमित्याहुः प्राञ्चः । अन्तरङ्गपरिभाषाया 'वाह ऊठि'ति सूत्रस्थोठ्ग्रहणज्ञापकसिद्धत्वात्सपादसप्ताध्यायीस्थत्वेन तद्दृष्ट्या त्रिपाद्या असिद्धत्वेन नात्र कार्य्यकालपक्षेपि तत्प्रवृत्तिः । अत एव तस्य शेषः संयोगादिति वार्त्तिकस्य साफल्यम् । अन्यथाऽन्तरङ्गसंयोगादिलोपदृष्ट्या बहिरङ्गयणादेरसिद्धत्वेनैव चक्री अत्रेत्यादिसिद्धौ वार्त्तिकं स्पष्टमेव निष्फलं स्यादिति नव्याः ॥

सुद्ध्युपास्य इति । ननु 'इकोऽसवर्णे शाकल्यस्येति' प्रकृतिभावे कथं यणिति चेन्न । न समासे इत्यनेन समासे तन्निषेधात् । नच नित्यसमास एव तन्निषेध इति वाच्यम् । भाष्यकृता नित्यग्रहणस्य प्रत्याख्यातत्वात् यथोत्तरं मुनीनां प्रामाण्यात् ।

ननु ध्यायतेः सम्प्रसारणेन सुधीशब्दस्य निष्पन्नत्वात् 'सम्प्रसारणाच्चे'ति पूर्वरूपापत्त्या सर्वथा यणो दुर्लभत्वमेव तत्रेति चेन्न । सम्प्रसारणपूर्वत्वे समानाङ्गग्रहणमिति वार्त्तिकेन तदप्राप्तेः सम्प्रसारणस्थानिकादेशस्यासम्प्रसारणत्वाच्चेति भावः ॥

ननु 'न भूसुधियोरि'ति निषेधस्य जागरूकत्वात्सुद्ध्युपास्य इत्यत्र कथमिको यणचीत्यस्य प्रवृत्तिरिति चेन्न । अन्तरङ्गत्वेन प्रत्यये परत एवोक्तनिषेधप्रवृत्तेः । १ (अनन्तरस्ये)ति न्यायेन 'एरनेकाच' 'ओस्सुपी'त्यनयोरेव निषेधकरणाच्चेति दिक्—धात्त्रंश इति । अत्र 'दीर्घादाचार्य्याणामि'त्यनेन तकारस्य द्वित्वम् । यत्तूक्तसूत्रे आचार्य्यग्रहणस्य पूजार्थकत्वान्नित्य एव निषेध एवञ्च द्वित्वन्नेति तन्न । पूजार्थतायाः प्रामाणिकैरनुक्तत्वात् । 'त्रिप्रभृतिषु शाकटायनस्ये'त्यत्र शाकटायनग्रहणस्यापि पूजार्थकत्वापत्तेश्च । नचेष्टापत्तिः । संस्कर्त्तेति त्रिसकारपरकैयटहरदत्तादिग्रन्थविरोधात् । अत एव

१ अनन्तरस्येति । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति न्यायस्वरूपम् ।

आत्वा रथमिति मन्त्रे सकारस्य द्वित्ववैकल्पिकत्वमुदाहृतम्भाष्ये। एवञ्च धात्रंश इत्यत्र द्वित्वन्न भवतीति कस्यचिदुक्तिरतीवासंगतेति बोध्यम्। नच निषेधविकल्पे विधिविकल्पो भवतीत्यस्य फलितत्वादनचि चेति सूत्रेणैव सर्वत्र द्वित्वसिद्धौ व्यर्थं सूत्रत्रयोपादानमिति वाच्यम्। मतभेदप्राप्तव्यवस्थासूचनार्थमावश्यकत्वादिति दिक्॥

ननु वा हतजग्धयोरिति व्यर्थं द्वित्वस्यानचि चेत्यनेनैव सिद्धत्वादिति चेन्न। पुत्रस्य द्वित्वं क्रान्ते चेद्धतजग्धयोरेवाक्रोश एवेति नियमार्थमावश्यकत्वात्। तत्फलन्तु पुत्रधित्तीत्यादौ द्वित्वाभावरूपम्बोध्यम्। नच पुत्रहतीत्यादौ हतशब्दपरत्वाभावेन द्वित्वं न स्यादिति वाच्यम्। १लिङ्गविशिष्टपरिभाषया हतशब्दपरत्वेन द्वित्वप्रवृत्तेरिति भावः॥

आदित्यो देवतेति। अदितेरादित्यस्य वाऽपत्यमादित्यः आदित्यशब्दाद्देवतार्थे 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्य इति'ण्यप्रत्ययः 'यस्येति चे'त्यकारलोपे 'हलो यमामि'ति यलोपे आदित्यमित्येकयकारकं रूपं सिध्यतीति भावः॥

ननु गव्यूति रित्यादौ 'लोपःशाकल्यस्ये' त्यनेन 'हलिसर्वेषामि' त्यनेन वा वलोपः स्यादित्याह——वान्त इत्यत्रेति। अयम्भावः लुप्तनिर्दिष्टो वकार इति भाष्यात्सूत्रे 'लोपो व्योर्वली'ति लोपेन वकारः प्रश्लिष्यते तस्य प्रश्लिष्टलुप्तवकारस्य वार्त्तिकेऽनुवृत्त्या यूतिशब्दे परे श्रूयमाणवकारान्त आदेशः स्यादिति तदर्थः सम्पन्न एवञ्च नोक्तप्रयोगे वकारलोपप्रसक्तिः। नच गव्यं नान्यमित्यादौ वलोपाभावाय सूत्रेऽपि

---

१ लिङ्गविशिष्टपरिभाषयेति। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्। इति परिभाषास्वरूपम्। सामान्यरूपेण विशेषरूपेण वा प्रातिपादिकबोधकशब्दग्रहणे सति लिङ्गबोधकप्रत्ययविशिष्टस्यापि तेन ग्रहणं बोध्यम्। अपिना केवलास्यापीति तदर्थः। समानाधिकरणाधिकारस्थे कुमार श्रमणादिभिरिति सूत्रे स्त्रीलिङ्गश्रमणादिशब्दपाठोऽस्या ज्ञापको बोध्यः। तथाहि, स्त्रीप्रत्ययविशिष्टश्रमणादिभिश्च कुमारीशब्दस्यैव सामानाधिकरण्यं नतु कुमारशब्दस्येति व्यर्थः श्रमणादिशब्दो ज्ञापकः।

प्रश्लेषस्यावश्यकत्वमिति वाच्यम्। तत्र यकारे पूर्वस्य भत्वात्पदत्वाभावेन सुतरां लोपाप्राप्तेः। नच गव्यमिच्छति गव्यतीत्यादौ लोपाभावार्थमस्तु सूत्रे प्रश्लेष इति वाच्यम्। नः क्ये इति नियमेन तत्र पदत्वासम्भवात्, एवं तर्हि वार्त्तिके एव प्रश्लेषफलमित्याशयेनाह—छ्कारादिति। नच 'लोपो व्योरि'ति सूत्रे वकारस्य भाष्यकृता प्रत्याख्यातत्वाल्लोपाप्राप्त्या प्रश्लेषो नावश्यक इति वाच्यम्। वलोपस्य लौकिकोदाहरणविषयत्वन्नास्तीति भाष्याभिप्रायवर्णनेनादोषात्। अत एव 'इको गुणे'तिसूत्रे 'अतोलृान्ते'त्यत्र लुप्तनिर्दिष्टो वकार इति भाष्योक्तं सङ्गतमिति। नचैवं गव्यूतौ वकारोच्चारणस्य चरितार्थत्वेन घिष्णवे इत्यत्र [1]वकारलोपः कुतोनेति चेन्मैवम् छन्दसि दृष्टस्यैवानुविधानेन गव्यूतिरित्यत्र लोपाप्राप्त्या तत्रोच्चारणसामर्थ्यादेव लोपाप्राप्तेः। अध्वपरिमाणेपि गव्यूतौ न वलोपस्तस्य संज्ञाशब्दत्वेन संज्ञात्वभङ्गापत्तेः। संज्ञाभङ्गभियैव रघुनाथेति संज्ञाशब्दे नित्यमपि णत्वन्न भवतीति भावः॥

ननु [2]लव्यमित्यादौ 'वान्तोयी'त्यनेनैव वान्तादेशे सिद्धे धातोस्तन्निमित्तस्यैवे'ति सूत्रं व्यर्थमित्यभिप्रायेण शङ्कते—तन्निमित्तस्यैवेति किमिति। अवयवद्वारा समुदाये प्रश्नः। अर्थात्सूत्रमेव किमर्थमिति प्रष्टुराशयः, समाधत्ते, ओयत इति। आङ्पूर्वकाद्वेञः कर्मणि लटि यकि संप्रसारणे पूर्वरूपे आङा सहाद्गुणे च रूपसिद्धिः अत्र धातोरित्यस्याभावे वान्तोयीति वान्तादेशे रूपासिद्धिः धातोरित्यस्य सत्त्वे तु न वान्तादेशप्राप्तिः यादौ प्रत्यये परे धातोरेचश्चेद्वान्तादेशस्तर्हि यादिप्रत्ययनिमित्तस्यैव धातोरेच इति नियमेन तद्व्यावृत्तेः,। नन्वन्तरङ्गवान्तादेशदृष्ट्या वहिरङ्गगुणस्यासिद्धत्वेन वान्तादेशाप्राप्त्या नावश्यकं तत्सूत्रमित्याह—औयत इति। वेञः कर्मणि लङि यकि सम्प्रसारणे पूर्वरूपे आडागमे आटश्चेति वृद्धौ रूपसिद्धिः अत्र वान्तादेशे तदसिद्धिरिति कर्त्तव्यमेव सूत्रमिति भावः॥

१ 'तस्य लोप' इति सूत्रेण।

२ लव्यमिति। लुनाते रचो यत्। सार्वधातुकार्द्धधातुकयोरिति गुणः। आदिपदेनाऽवश्यलाव्यमित्यस्य संग्रहः अत्र लुनातेः ओरावश्यक इति ण्यत्।

ननु शब्दशास्त्रे पक्षद्वयं पदसंस्कारपक्षो वाक्यसंस्कारपक्षश्च तत्र परस्परनिरपेक्षाणि पदानि संस्क्रियन्ते यत्रासौ पदसंस्कारपक्षः बाहुलकादधिकरणे घञ्। एवं वाक्यात्सुप्तिङन्तचयरूपादुद्धृत्य पदानि संस्क्रियन्ते यत्रासौ वाक्यसंस्कारपक्षः। उक्तञ्च भाष्ये वाक्यादुद्धृत्य पदान्यन्वाख्यायन्त इति तथा च पदसंस्कारपक्षे कानि सन्तीत्यनयोः पृथङ् निष्पन्नत्वात् 'अचः परस्मिन्नि' त्यस्याप्राप्त्या यणः शङ्का नोदयते वाक्यसंस्कारपक्षे तु कानि सन्तीति वाक्ये प्रक्रियाक्रमेण पूर्वं किम् शब्दस्तदुत्तरं जस् ततोऽस्धातुस्तदुत्तरं झीति किमः कादेशे जसः श्यादेशे नुमि दीर्घे च कानीत्यस्य सिद्धिः अस् धातोः 'श्नसोरल्लोप' इत्यल्लोपे 'झोऽन्त' इति झेरन्तादेशे सन्तीत्यस्य सिद्धिः एवञ्च स्थानिभूतादकारात्परत्वेन दृष्टस्येकारस्य यणि कर्त्तव्येऽचः परस्मिन्निति स्थानिवत्त्वेनाकारस्य सद्भावादस्त्येव यणः प्रसक्तिः। नचात्र पक्षेऽपि विनिगमकाभावात्पूर्वं सन्तीत्येव संसाध्य पश्चात्कानीत्यस्य संसाधने इकारस्याचः पूर्वत्वेन दृष्टत्वाभावात्स्थानिवत्त्वाप्रसक्त्या नोक्तदोष इति वाच्यम्। पूर्वोपस्थितनिमित्तरूपान्तरङ्गत्वमादायान्तरङ्गाणां पूर्वं प्रवृत्तिरिति कानीत्यस्यैव प्राक् साधनादुक्तदोषस्य तादवस्थ्यादित्याशयेनाह—कानि सन्तीत्यादि। 'न पदान्त'सूत्रेण पदान्तविधौ स्थानिवत्त्वनिषेधान्न यणापत्तिरूपोक्तदोष इति भावः॥

ननु 'उरण् रपर' इत्यस्याद्गुण इत्यनेन सहैकवाक्यत्वेनान्वयादवर्णादृकारेऽचि परे पूर्वपरयोः स्थाने प्रसज्यमान एव गुणोऽकारो रपरो भवतीत्यर्थे स्थान्यादेशयोरान्तरतम्याभावाद्रपरत्वाप्रसक्तौ कृष्णर्द्धिरित्यादि न सिद्ध्येदत आह—तत्रान्तरतम्यादिति। अरित्यस्य रेफशिरस्कस्य रेफद्वारा ऋकारेण स्थानसाम्यादिति तदर्थः। एतयोरनान्तर्य्यमेवान्तर्य्यमिति भाष्याच्च स्थानसाम्यस्बोध्यम्। नच कृष्णर्द्धिरित्यादौ पूर्वपरयोः स्थानित्वेन ऋकारस्यैव स्थानित्वाभावाद्रपरत्वं न स्यादिति वाच्यम्। पूर्वपरयोरिति द्विर्वचननिर्देशेन सहितयोरवयवयोरेव स्थानित्वात्। उक्तं हि भाष्ये-योहि उभयोः स्थाने भवति लभतेऽसावन्यतरतोव्यपदेशमिति। अत एव द्वयोः स्थानिनोर्द्वावादेशौ मा भूतामित्येकग्रहणं कृतम्। वस्तुतस्तु गुणरुपविधेयगतैकत्वसंख्याविवक्षणात्पूर्वपरयोरुभयोरेकवाक्यतयैव विधेयान्वयादनयोः पुलयोः कटं कुर्वित्यादाविवोभयसम्बन्ध्येकविधेयस्य प्रतीतेरेकग्रहणं

स्पष्टार्थमित्यन्यत्। नच रलपराणामादेशानाम्विधाने सूत्रं व्यर्थमिति वाच्यम्। 'आप् ज्ञपृधामित्' 'भृज्ञामिदि'त्यादौ दोषापत्तेर्दुर्वारत्वादिति दिक्॥

ननु अव पद्यीति स्थितौ पूर्वान्तवद्भावेनाऽऽङ्त्वात् 'ओमाङोश्च', 'एत्येधत्यूठ्सु'–'एङि पररूपमि'त्येतेषु प्राप्तेषु वृद्धेर्बाधकत्वादेङि पररूपमित्यस्य तया बाधे बाध्यसामान्यचिन्ताश्रयणादोमाङोश्चेत्यस्यापि बाधः स्यादित्याह—पुरस्तादिति। (पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरानि)ति न्यायाकारः अवश्यं स्वपरस्मिन्बाधनीये प्रथमोपस्थितानन्तरबाधेन चारितार्थ्ये पश्चादुपस्थितस्य परस्य बाधे मानाभावः आकांक्षाया निवृत्तेर्विप्रतिषेधशास्त्रबाधे बीजाभावाच्चेत्येतस्य बीजम्। प्राग्वर्त्तिनोऽपवादा अव्यवहितोत्तरवर्त्तिनो विधीन्बाधन्ते न व्यवहितवर्त्तिन इति तदर्थः तथाच प्रकृते एत्येधत्यूठ्स्वित्यनेन एङि पररुपमित्यस्यैव बाधो नत्वोमाङोश्चेत्यस्येति वृद्धेर्बाधकत्वादेङिपररूपमित्यस्य बाधेन लब्धावकाशायास्तस्याः सामर्थ्यविरहात्परेण पररूपेण बाधादिति भावः॥

ननु प्रौढ इत्यत्रेव प्रोढवानित्यत्राप्यूढशब्दपरत्वाद्वृद्धिः स्यादित्याशंक्य समाधत्ते—अर्थवद्ग्रहणे नानर्थकस्येति। शाब्दिकनये वृत्तिविषये समुदायशक्त्यङ्गीकारेण भूतकालिकवहनकर्तृत्वरूपार्थस्योढवानिति समुदायवृत्तित्वादूढवत एकदेशस्योढस्यार्थवाचकत्वाभावान्न तस्मिन्वृद्धिः वक्ष्यमाणज्ञापकज्ञापिताऽर्थवत्परिभाषयाऽर्थवदूढशब्दावयवेऽचि परे तद्विधानादिति भावः। 'व्रश्चेति' सूत्रे राजेः पृथक् भ्राजिग्रहणमत्र ज्ञापकम्। तथाहि परिभाषाऽभावेऽर्थवदनर्थकोभयविभ्राजशब्दस्य ग्रहणे बाधकाभावाद् भ्राजौ राजेरपि सत्त्वेन राजिग्रहणेनैव भ्राजेरपि षत्वसिद्धौ व्यर्थं भ्राजिग्रहणमर्थवत्परिभाषां ज्ञापयतीति। नच भ्राजिग्रहणसत्त्वे फणादिराजिना साहचर्य्येण फणादेरेव भ्राजेर्ग्रहणात्षत्वं सिद्ध्यति तदभावे राजिना फणादेस्तदतिरिक्तस्य च भ्राजतेर्ग्रहणापत्तौ षत्वं स्यादिति फणादेर्भ्राजेर्ग्रहणाय तदतिरिक्तस्य तस्याग्रहणाय च भ्राजिग्रहणस्यावश्यकत्वेन तस्य ज्ञाकत्वमयुक्तमिति वाच्यम्। 'भ्रस्जादिसूत्रे' राजृ इति पाठकरणादृकारानुबन्धकस्य राजः षत्वविधानसाहचर्य्यादृकानुबन्धकस्यव फणादेर्भ्राजतेर्ग्रहणात्पक्षे तदतिरिक्तभ्राजेः प्राक्

ऋकारमनुबध्य ऋभ्राज इति पाठेन 'भ्राजभासेति' विकल्पस्य वाच-निकत्वादृकारस्यात्मनेपदमात्रफलकत्वेन तत्स्थानेऽकारमनुबध्य भ्राज इति पाठेन वा राजिना तस्याग्रहणात्कुत्वे च विभ्राट् विभ्रागिति रूपद्वयलाभुत्वस्य सुलभत्वेन भ्राजिग्रहणज्ञापकत्वस्य युक्तत्वादिति केचित्। वस्तुतस्तु भ्राजादिसाहचर्य्येण धातुसंज्ञकराजेर्ग्रहणेन न भ्राजघटकराजो ग्रहणं तस्य धातुसंज्ञकत्वाभावात् साहचर्य्यपरि-भाषाया अनित्यत्वेपि ऋकारानुबन्धकस्य राजतेर्ग्रहणेन भ्राजघटक-राज्शब्दस्योक्तानुबन्धकत्वाभावाद्राजिनाऽस्य ग्रहणं न स्यादृकारस्य समुदायानुबन्धत्वात् एवञ्च भ्राजिग्रहणस्यावश्यकत्वे परिभाषायां किं ज्ञापकमिति चेदत्र, भाष्यतत्त्वविदः, उपस्थितार्थस्य शब्दं प्रति विशेषणत्वेनान्वयसम्भवे तत्यागे मानाभावोऽस्या ज्ञापकः किञ्च 'स्वं रूपमि'ति सूत्रे स्वशब्देनात्मीयवाच्विनार्थो गृह्यते रूपशब्देन स्वरूपं तेन तदुभयं शब्दस्य संज्ञीति सूत्रार्थः सम्पन्नः तत्रार्थो न विशेष्यस्तत्र शास्त्रीयकार्य्यासम्भवात्किन्तु शब्दस्य विशेषणम् एव-ञ्चार्थविशिष्टश्शब्दः संज्ञीति फलितं तेनाऽर्थवत्परिभाषा सिद्धेति भाष्ये स्पष्टमिति दिक् ॥

ननु रपरश्रुतेरन्यत्र चारितार्थ्येन प्र ऋच्छतीत्यत्र वृद्धौ कृतायां रपरत्वे च कृते पूर्वान्तवद्भावेन रेफस्य पदान्तत्वाश्रयणात्तस्य 'खर-वसानयोरि'ति विसर्गःस्यादित्यत आह—इह पूर्वान्तवद्भावेन पदा-न्तरेफस्य न विसर्ग इति । अत्र प्रमाणमाह उभयथर्क्ष्विति । अयम्भावः यद्येकादेशस्थले रेफस्य पदान्तत्वाश्रयणेन विसर्गः स्यात्त-दा उभयथर्क्ष्वित्यादावपि तदापत्या निर्देशासङ्गतिस्स्यादित्येतन्निर्देशा-दुक्तस्थले रेफस्य तत्त्वाश्रयणेन विसर्गो न भवतीति कल्पनादुक्त-प्रयोगे न काप्यनुपपत्तिरिति। नचोक्तनिर्देशे गुणस्य पदद्वयसम्ब-न्धिवर्णद्वयाश्रितत्वाद्बहिरङ्गत्वेनासिद्धत्वाद्रेफाभावेन विसर्गो नेति वाच्यम्। विसर्गस्यापि रेफषकारात्मकवर्णद्वयाश्रितत्वेन बहिरङ्ग-त्वात्। नच गुणस्य परनिमित्तकत्वरूपबहिरङ्गत्वसत्वाद्विसर्गदृष्ट्या-ऽसिद्धत्वेन रेफाभावान्न विसर्ग इति वाच्यम्। उक्तरूपबहिरङ्गत्वस्यो-भयोस्तुल्यत्वादिति । वस्तुतस्तु नात्र १बहिरङ्गपरिभाषाप्रवृत्तिः

---

१ बहिरङ्गपरिभाषेति। (असिद्धं बहिरङ्गमन्तरङ्गे) इति परिभा-

सम्भावनीया त्रिपादीस्थेऽन्तरङ्गे कर्त्तव्ये कार्य्यकालपक्षेऽप्युक्तपरिभाषाया अप्रवृत्तेः। अत एव 'उरण् रपर' इति सूत्रे नार्कुटो नार्कलिपरित्यादौ रेफस्य विसर्गाभावाय रेफस्य पूर्वान्तवत्त्वे विसर्जनीयप्रतिषेधो वक्तव्य इत्यपूर्ववचनमङ्गीचकार भगवाञ्छ्लीपतञ्जलिः अन्यथा बहिरङ्गपरिभाषया विसर्गदृष्ट्या वृद्धेरसिद्धत्वेन विसर्गाप्राप्त्या भगवताऽङ्गीकृतमपूर्ववचनमसंगतं स्यादिति दिक् ॥

ननु (येन विना यदनुपपन्नं तत्तेनाक्षिप्यते) यथाऽऽकृतिः पदार्थ इति नये घटमानयेत्यादौ जातेरमूर्त्तत्वादानयनासम्भवेन जात्या व्यक्तेराक्षेपस्तथोपसर्गसंज्ञा क्रियाम्विना नोपपद्यते इत्युपसर्गेण क्रियाक्षेपः क्रिया च धात्वर्थस्तस्याश्चाक्षेपो न सम्भवतीति तद्वाचिनो धातोरेवाक्षेपात्सिद्धे धाताविति व्यर्थमेवेत्याशयेन शङ्कते—उपसर्गेणैवेति। पुनर्वृद्धीति। योगविभागसामर्थ्याद्वृद्धिरेव न कदाचिदपि वृद्ध्यभाव इति भावः। नचोपसर्गेणाक्षिप्तेऽपि धातौ प्रगत ऋद्धः प्रर्द्ध इत्यत्र प्रस्योपसर्गत्वादृद्धस्य ऋकारादिधातुनिष्पन्नत्वाच्च प्राप्तवृद्धिवारणायोपसर्गताप्रयोजकधातुत्वलाभार्थं धातुग्रहणस्यावश्यकत्वेन तस्य कथं पुनर्वृद्धिविधानार्थत्वमिति वाच्यम्। प्रशब्दस्य गमनिरूपितोपसर्गत्वेऽपि ऋकारादिधातुनिरूपितोपसर्गत्वाभावाद्वृद्ध्यप्राप्त्या धातुग्रहणस्योक्तार्थत्वात्ततः। उक्तं हि यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञे भवत इति। नच लाघवादुपसर्गपदं तिरस्कृत्य तत्स्थाने गतेरित्येवास्त्विति वाच्यम्। 'अच्छगत्यर्थवदेष्वि'ति गतिसंज्ञत्वादच्छर्च्छतीत्यादौ वृद्ध्यापत्तेरिति दिक् ॥

ननु नाज्झलावित्यज्झलोः सावर्ण्यनिषेधादकः सवर्णस्याच एव प्रसिद्धत्वेन सवर्णेऽच्येव दीर्घप्रवृत्तावचीति व्यर्थमेवेत्यभिप्रायेण

---

षास्वरूपम्। अन्तरङ्गे कर्तव्ये जातं तत्कालप्राप्तिकं च बहिरङ्गमसिद्धमित्यर्थः। वाह ऊठ् एतत्सूत्रस्थोठ्ग्रहणज्ञापितेयं परिभाषा इत्थं हि ज्ञापनप्रकारः, ऊठग्रहणाभावे सम्प्रसारणमात्रविधानेन लघूपधगुणे वृद्धि रेचीति वृद्धौ विश्वौह इत्यादिसिद्धावूठ् ग्रहणं व्यर्थं सत्परिभाषां ज्ञापयति. ज्ञापितायामस्यां तु लघूपधगुणदृष्ट्या सम्प्रसारणस्यासिद्धत्वाल्लघूपधगुणाप्राप्त्या वृद्ध्यभावेन रूपासिद्धेः स्वांशे चरितार्थमूठ्ग्रहणमिति बोध्यम्।

शङ्कते—अचि किमिति । पूर्वं वर्णानामुपदेश इत्यादिभाष्योक्तरीत्या 'तुल्यास्यप्रयत्नं सवर्णं' 'नाज्झलावि'त्येताभ्यां प्राक् ग्रहणकशास्त्रस्यासिद्ध्या नाज्झलावित्यस्य वाक्यार्थबोधावसरेऽच्पदेन वर्णसमाम्नायस्थानां ह्रस्वानामेव ग्रहणात्तेषामेव सवर्णसंज्ञानिषेधेन दीर्घाणां हल्भिः सावर्ण्यं स्यादेवेत्याशयेनाह—कुमारी शेते । इति भावः ।

ननु 'अकः सवर्णे दीर्घ' इत्यनेन ॠ ॡ एतयोर्द्विमात्रिकयोर्विधानेनोपपत्तौ वार्तिकद्वयं व्यर्थमिति चेन्न । दीर्घशब्देन विधीयमानापेक्षया वार्त्तिकद्वयेन विहितस्य विलक्षणत्वात् । किन्तद्वैलक्षण्यमिति दर्शयति, आद्यस्य मध्ये द्वौ रेफौ तयोरेका मात्राऽभितोऽज्भक्तेरपरा मात्रा एवं द्वितीयस्य मध्ये द्वौ लकारौ तयोरेका मात्राऽभितोऽज्भक्तेरपरा मात्रा इत्थम्भूतयोः ॠॡवर्णयोरकः सवर्णे दीर्घ इत्यनेनोपपत्त्यभावाद्वार्त्तिकद्वयमावश्यकमित्यत आह—ॠति सवर्णे ॠ वेति । नच वार्त्तिकद्वयस्यावश्यकत्वेऽपि संज्ञाशब्दस्यार्द्धमात्रिकत्वाद्दति सवर्णे लोपो वेतिन्यासेनैव सिद्धौ ॠकारविधानं निष्फलमिति वाच्यम् । लोपेन प्रयोगसिद्धावपि वार्तिकद्वयविहितविधेययोरनिष्पत्त्या ॠकारविधानस्य साफल्यात् । तुल्यास्यसूत्रस्थभाष्ये तु सूत्रेणैव ॠकारद्वयस्य स्थाने रेफद्वयवत्तारूपगुणकृतान्तर्य्येण कदाचिद्रेफद्वयगर्भस्य विवृतत्वान्तर्य्येण कदाचिद्विवृतस्य ऌकारे लकारवत्तान्तर्य्येण कदाचिद्द्विलकारस्य कदाचिद्विवृतत्वसाम्येन रेफवत्तासाम्येन च तादृशस्य ॠकारस्य च विधानेन विकल्पफलमाश्रित्य वार्त्तिकद्वयं प्रत्याचख्यौ । वार्त्तिकद्वयविहितविधेययोरच्त्वं तु अइउणसूत्रानन्तरं पाठाद्बोध्यमित्यलम् । अभितोऽज्भक्तेरिति । ए ओङ् सूत्रे भाष्ये यथा मातॄणामित्यादौ णत्वाद्युपपत्तयेऽङ्गीक्रियमाणे वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते इति पक्षे खट्वाभिर्मालाभिः वाचा तरतीत्यादौ प्राप्ताः तुगैस् ह्यज्लक्षणष्ठनः 'दीर्घादि'ति तुग्विधानसामर्थ्यतपरकरणसामर्थ्यनौड्यच इति सूत्रस्थनौग्रहणसार्थ्यैरभेदेन प्रतिभासमानेषु अवयवसदृशस्वतन्त्रवर्णाश्रयकार्य्याभावज्ञापनेन वारिताः तथा प्रातर्ॠतमित्यत्र 'रोरी'ति लोपस्य तद्लृकार इत्यत्र 'तोर्लि'त्यस्य च शङ्कासमाधानाकरणेन यत्तद्रेफात्परं भक्तेरिति 'हयवरट्' सूत्रस्थभाष्येण च वार्त्तिकद्वयविधेययोः ॠॡवर्णयोरभितोऽज्भागस्य समुचितत्वमिति भावः ॥

ननु अचङ् स्फोटायनस्येत्यत्र १धाराप्रवाहन्यायेनातीत्यस्य सम्बन्ध आहोस्वित् मण्डूकप्लुत्याऽतीत्यस्येति शङ्कां समाधत्ते—अतीति निवृत्तमिति। इत्थं हि समाधातुराशयः 'प्लुतप्रगृह्या' इत्यत्र नित्यग्रहणं किमर्थमिन्द्रेचेत्यारम्भसामर्थ्यादेव नित्यत्वलाभादिति भाष्योक्तमेव मण्डूकानुवृत्तौ ज्ञापकम्। अन्यथा गवेन्द्र इत्यादावत्परत्वाभावादवङोऽप्राप्त्या तदर्थं सूत्रस्यावश्यकत्वादारम्भसामर्थ्यान्नित्यत्वलाभ इति भगवदुक्तिरसंगता स्यात्। मण्डूकानुवृत्तिस्वीकारे तु पूर्वसूत्रेणैव तत्रावङ्सिद्धाविन्द्रे चेत्यस्य वैयर्थ्येन तत्सामर्थ्यान्नित्यत्वलाभसम्भवान्नित्यमिति किमिति तदुक्तेः सामञ्जस्यमेवेति। एतदुत्तरन्तु हरी एतावित्यादावयमेव प्रकृतिभावो यथा स्यादिति मूले एव स्फुटमस्तीति दिक्॥

ननु यो ऽग्रमित्यादाविव गवाक्ष इत्यत्रापि प्रकृतिभावो दुर्वार इत्यत आह—व्यवस्थितविभाषयेति। विगताऽवस्था विकल्परूपा जाताऽस्यामिति व्यवस्थिता सा चासौ विभाषा चेति व्यवस्थितविभाषा तया नैमित्तिकप्रवृत्त्येत्यर्थः। विभाषारूपे विकल्पे सामान्येन विधिनिषेधरूपांशद्वयमुपस्थितम् प्रकृते विशेषविधिरूपा व्यवस्थिता क्वचिन्निषेधरूपा व्यवस्थिता यथा क्वचिन्न पापेऽभिनिवेश इत्यादि तदुदाहरणं मूले एव वक्ष्यति। देवत्रातो गलो ग्राह इतियोगे च सद्विधिः। मिथस्तेन विभाष्यन्ते गवाक्षः संशितव्रतस्तेन प्राण्यवयवे नेति शाश्वोरित्यत्र भाष्ये स्पष्टमिति न गवाक्ष इत्यत्रोक्तदोषः 'अग्नीत्प्रेषणे परस्य चे'ति सूत्रेणाग्नीदग्नीन्विहर इत्यत्र प्राप्तप्लुतवा-

---

१ धाराप्रवाहेति। यथाऽविच्छिन्नेन धारा वहति तथाविच्छिन्नेन यत्किञ्चित्सूत्रस्थपदानामुत्तरोत्तरं सूत्रान्तरेषु सम्बन्धो भवति। इयमेव धाराप्रवाहन्यायेनानुवृत्तिरित्यभिधीयते। यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तथा सूत्रस्थपदान्यपि व्यवधानेनोत्तरोत्तरं सूत्रान्तरेषु सम्बद्धानि भवन्ति। मण्डूकोत्प्लुतौ मध्ये कियत्स्थानं परित्यज्योत्तरस्थानेन सम्बन्धो भवति। तथा सूत्रस्थपदानां मध्ये कियत्सूत्रं परित्यज्योत्तरसूत्रसम्बन्धो भवति। इयमेव मण्डूकप्लुति न्यायेनानुवृत्तिरित्यभिधीयते।

रणाय तत्र वार्तिककृता कृतस्य बहुलग्रहणस्य प्रत्याख्यानाय भाष्यकृता कृतेन विभाषा पृष्टप्रतिवचने हे रित्यत्र विभाषेति योगविभागेन विभाषेत्यस्य व्यवस्थितविभाषात्वध्वननात् । नच व्यवस्थितविभाषयैवेन्द्रे नित्यावङः सिद्धाविन्द्रेचेनिं व्यर्थमिति वाच्यम् । भाष्योक्तातिरिक्तानां व्यवस्थितविभाषाणामप्रामाणिकत्वबोधनाय तस्य सत्त्वादिति भावः ॥

ननु 'नान्तः पादमव्यपरे' इत्थमेव सूत्रं लाघवाद्विधेयम् एतस्मान्नकारानुवृत्त्या गोशब्दस्य यत्प्राप्नोति तन्नेति 'सर्व्वत्र विभाषा गोः' इत्यस्यार्थकरणेऽपि न कश्चिद्दोष इति चेन्न । तथा सति 'प्लुतप्रगृह्या अचि नित्यमि'त्यत्रापि नकारानुवृत्त्याऽचि परे प्लुतप्रगृह्ययोरेव निषेधेन दोषस्य दुर्व्वारत्वात् । एवञ्च 'प्रकृत्यान्तः पादमव्यपरे' इत्येव सूत्रपाठः समुचित इत्यत आह -- अथ प्रकृति भावं इति ।

ननु 'प्लुतप्रगृह्या अचि नित्यमि'त्येतद्घटकप्लुतादिपदार्थज्ञानाय तत्संज्ञाविधायकसूत्रानन्तरमेवोक्तसूत्रपाठस्य समुचितत्वात्तथाऽकरणेन प्राचीनपठितेन्द्रे च नित्यमित्यत्र नित्यग्रहणस्य प्रामादिकत्वज्ञापनान्नित्यस्यानुवृत्त्यभावेऽपि वाग्रहणनिवृत्त्यैव नित्यत्वलाभात्प्लुतप्रगृह्या इत्यत्र नित्यग्रहणं व्यर्थमित्यत आह—नित्यमिति किमिति । अयम्भावः' नित्यग्रहणाभावे हरी ईशावित्यत्र लब्धावकाशस्य प्लुतप्रगृह्या अचि नित्यमित्यस्य चक्रि अत्रेत्यत्र सावकाशेन 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्चे'त्यनेन हरी एतावित्यादावुभयोःप्राप्तौ विप्रतिषेधेन परत्वाद्बाधे विकल्परूपो दोषःस्यात् । कृते तु नित्यग्रहणे नोक्तदोषः नित्यग्रहणसामर्थ्यात्परस्यापीकोऽसवर्णे इत्यस्य प्लुतप्रगृह्या इत्यनेन बाधादिति । नच प्रकृतिभावदृष्ट्या प्लुतत्वासिद्धत्वेन कथं प्रकृतिभाव इति वाच्यम् । प्रकृतिभावविधानसामर्थ्यात्तस्य सिद्धत्वकल्पनादिति दिक् ॥

ननु 'अवङ् स्फोटायनस्ये' त्यतोऽचीत्यनुवृत्त्यैव सिद्धे 'प्लुतप्रगृह्या अचि नित्यमि' त्यत्राचीति व्यर्थमिति चेन्न । तस्य सामर्थ्यात्प्रत्यासत्त्या यस्मिन्नचि प्लुतप्रगृह्ययोः प्रकृतिभावस्तदज्निमित्तकार्यस्यैव तेनाभाव इत्यर्थज्ञापनेन साफल्यात् । तेन जानु उ अस्य रुजतीत्यादावुञः प्रगृह्यत्वेपि जानू अस्य रुजतीत्यत्र सवर्णदीर्घरूपसन्धिर्भवत्येवेत्यलम् ॥

ननु चकारेण प्रकृतिभावोऽनुकृष्यते तस्य च ह्रस्वविधानसामर्थ्येनैव सिद्धिरित्यत आह—ह्रस्वविधिसामर्थ्यादेवेति । नच ह्रस्वयणोर्विधानसामर्थ्याद्विकल्पसिद्धिरूपफलस्य सत्त्वेन ह्रस्वविधेः सफलत्वान्मूलोक्तमसङ्गतमिति वाच्यम् १अपदान्तादौ यणश्चारितार्थ्येन सामर्थ्यविरहादुभयोर्विधानसामर्थ्याद्विकल्पासिद्ध्या ह्रस्वविधेर्वैयर्थ्यस्य स्पष्टत्वेन तस्मात्प्रकृतिभावसिद्धिः सुलभैवेतिभावः॥

चकारो न कर्तव्य इति । इत्थं हि तत्खण्डनप्रकारः प्रकृतिभावस्य चकारेणानुकर्षणेऽपि तस्य चानुकृष्टत्वेन चानुकृष्टं नोत्तरत्रेति परिभाषया 'ऋत्यक' इत्यत्र सम्बन्धाभावात्तदर्थं ह्रस्वविधानस्यावश्यकत्वमिति तेनैव प्रकृतिभावसिद्धौ तदनुकर्षणार्थश्चकारो व्यर्थ एवेति । 'अव्यये यथाभिप्रेताख्याने क्त्वाणमुलाविति' सूत्रे णमुलग्रहणमेवोक्तपरिभाषायां ज्ञापकं बोध्यम् । तथा हि परिभाषाऽसत्त्वे क्त्वा चेत्येव सूत्रमस्तु चकारेण 'स्वादुमि णमुलि'त्यतो णमुलोऽनुकर्षणादेव सिद्धौ तत्सूत्रस्थं णमुलग्रहणं व्यर्थं सज्ज्ञापयति चानुकृष्टं नोत्तरत्रेति । ज्ञापितायामस्यां तु उत्तरत्र 'तिर्य्यच्यपवर्गे' इत्यादौ णमुलः सम्बन्धो न स्यात्तस्य चानुकृष्टत्वादिति । तदर्थं णमुलग्रहणमावश्यकमिति तस्य स्वांशे चारितार्थ्यं जातमिति भावः—भाष्ये स्थितमिति । प्रकृतसूत्रस्थभाष्ये पूर्वोक्तो भावः स्थित इति तदर्थः । ननु ह्रस्वाभावपक्षे प्रकृतिभावाय चकारस्यावश्यकत्वेन चक्री अत्र चक्रि अत्र चक्र्यत्रेति रूपत्रयसिद्धिरिति चेन्न । चकारस्य समुच्चायकत्वे तत्प्रत्याख्यानपरभाष्यविरोधात् । संहिताया अविवक्षयैव त्वदुक्तरूपस्य निष्पत्तेश्च । चक्र्यत्रेत्यत्र न 'स्कोःसंयोगाद्योरि'ति लोपप्राप्तिः, 'अचः परस्मिन्नि'ति । यणःस्थानिवत्त्वात् । नच (पूर्वत्रासिद्धे न स्थानिवदि)ति शङ्क्यः । तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति तन्निषेधात् । ननु ऋत्यक इति पृथक् पाठाकरणरूपलाघवादकोऽसवर्णे शाकल्यस्येत्येव सूत्रमस्त्विति वाच्यम् । होतृऋकारो ब्रह्मर्षिरित्यादौ सवर्णार्थमनिगर्थश्च तस्य पृथक् पाठावश्यकत्वादित्यलम् ॥

ननु अप्लुत इत्युक्ते प्लुतस्याध्याहार आवश्यकस्तथा च प्लुतोऽप्लुतो भवतीत्यर्थेनैव सिद्धौ तत्करणं व्यर्थमित्याशयेन शंकते—

१ गौर्य्यौ गौर्य्य इत्यादावित्यर्थः ।

वदिकमिति। इत्थं हि समाधातुराशयः, वद्ग्रहणसत्त्वे चन्द्रवन्मुख-मित्यादौ मुखे चन्द्रगताऽऽह्लादकत्ववत्प्लुतेऽप्लुतगतसन्ध्यादिरूप-कार्य्यमतिदिश्यते न तु प्लुतस्य निवृत्तिः क्रियतेऽतिदेशानां स्वभावात् तथा च अग्नी इतीत्यादावग्नीति प्रेषणे परस्य चेत्येतद्विहितप्लुता-श्रयः प्रकृतिभावः प्राप्नोति परश्च प्लुतस्यासिद्धत्वादीदूदेद्द्विवचन-मित्यनेन कृते प्रगृह्यत्वे तदाश्रये प्रकृतिभावेऽपि प्लुतः श्रूयेत वद्-ग्रहणाभावे प्लुतो नैव श्रूयेत प्लुतस्याप्लुतत्वविधानादतो वद्ग्रहण-मावश्यकमिति। नच सत्यपि वद्ग्रहणे प्रसज्यप्रतिषेधाश्रयणात्प्लु-तवन्नेत्यर्थस्यैव सम्भव इति वाच्यम्। तदाश्रयणे गौरवात्। नचा-प्लुतवदित्यत्र पर्य्युदासेऽग्नी इतीत्यादौ प्रगृह्याश्रयं प्रकृतिभावं बाधित्वा परत्वादप्लुतवद्भावे दीर्घादिकं स्यादिति वाच्यम्। इति शब्दसापेक्षाप्लुतवद्भावापेक्षया वर्णमात्रापेक्षप्रकृतिभावस्यान्तरङ्ग-त्वात्। नचाप्लुतवदित्यस्य प्लुतकार्य्यं नेत्येवार्थः कुतोनेति वाच्यम्। शब्दमर्य्यादया तदलाभात् शब्दतः प्लुतेऽप्लुतशास्त्रस्व-विधानस्यैव लाभात्। नच भाष्ये प्लुतकार्य्यं नेत्यर्थस्यैव दर्शना-त्कथं तद्विरुद्धार्थस्वीकार इति वाच्यम्। तस्य फलितार्थाभिप्राय-कत्वादिति दिक्॥

ननु क्लीवे स्त्रीलिङ्गे वा अमू आसाते इत्यत्र मुत्वस्यासिद्धत्वादे-कारान्तत्वेन ईदूदेद्द्विवचनमित्यनेनैव प्रगृह्यत्वे सिद्धेऽदसोमादि-त्यस्य तदुदाहरणमयुक्तमित्याशंक्य समाधत्ते—रामकृष्णावमू आसाते इति। अयम्भावः क्लीवस्त्रीलिङ्गयोः प्रगृह्यत्वे सिद्धेपि पुल्लिङ्गे न तेन प्रगृह्यत्वसिद्धिर्मुत्वस्यासिद्धत्वेन तत्रोकारान्तत्वात्। अदसोमादित्येतत्प्रति न मुत्वस्यासिद्धत्वम् आरम्भसामर्थ्यादिति।

ननु मय उञो वो वेति वत्वविधानस्य प्रकृतिभावबाधनानुस्वा-रव्यावृत्तिरूपफलद्वयस्य सत्त्वात्प्रकृते किमित्याकांक्षायामाह—वत्वस्यासिद्धत्वान्नानुस्वार इति। 'मय उञो वो वे'त्यस्य त्रैपादि-कत्वादनुस्वारदृष्ट्याऽसिद्धत्वेन हल्परत्वाभावादनुस्वाराप्राप्तिः। [1]अन्यथा इको यणचीत्यस्यानन्तरमस्य पाठेन यणोऽनुवृत्त्यैव सिद्धे वत्वविधानस्य वैयर्थ्यं स्यात्। वस्तुतस्तु न त्रिपाद्यां पाठस्यानुस्वा-

१ वत्वविधानस्य प्रकृतिभावमात्रबाधमार्थत्वे।

राभावः फलं किन्तु वत्वस्यासिद्धत्वादुकाररूपेऽचि परे प्रत्यङ्ङु-पास्ते प्रत्यङ्ङुपकरोतीत्यादौ ङमुडसिद्धिरूपं तत् अनुस्वारवार-णन्तु सन्निपातपरिभाषयैव सिद्धमिति भावः॥

ननु 'ईदूतौ सप्तमी'त्येवं लाघवात्सूत्रमस्तु सप्तम्याः प्रत्ययत्वेन प्रत्ययग्रहणपरिभाषया तदन्तविधानादीदूदन्तं यत्सप्तम्यन्तं तत्प्र-गृह्यसंज्ञमित्यर्थेनैव सोमो गौरी अधिश्रित इत्यादौ प्रत्ययलक्षणेन सप्तम्यन्तत्वात् प्रगृह्यत्वे सिद्धेऽर्थग्रहणं व्यर्थमित्याशयेन शंकते— अर्थग्रहणं किमिति। इत्थं समाधातुराशयः, अर्थग्रहणाभावे संज्ञा-विधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्तीत्यनया परिभाषया तदन्तविधि-निषेधादीदूदेद्द्विवचनमिति वदीदूदन्ता या सप्तमीत्यर्थापत्तावेकादे-शस्य परादिवद्भावात्सप्तमीत्वेन ययी आस्ते इत्यादावेव प्रगृह्यसंज्ञा स्यात्सोमौगौरी अधिश्रित इत्यादौ सप्तम्या लुकापहारेणाभावात्सा न

---

१ सन्निपातपरिभाषयेति। सन्निपातलक्षणो विधिरनिमित्तं तद्वि-घातस्येति परिभाषास्वरूपम्। द्वयोः सम्बन्धः सन्निपातस्तल्लक्षण-जायमानो विधिः स्वातिरिक्तसम्बन्धविघातकशास्त्रेऽनिमित्तं भवती-त्यर्थः। प्रकृते किमु उक्तमित्यनयोः उकाराव्यवहितोत्तरत्वरूपोऽज-व्यवहितपूर्वत्वरूपश्च सम्बन्ध एव सन्निपातस्तल्लक्षणजायमानो वत्व-विधिःस्वातिरिक्तसम्बन्धाविघातकेऽनुस्वारे निमित्तं न स्यादित्थमनु-स्वारवारणमवधेयम्।

२ प्रत्ययग्रहणेति। प्रत्ययग्रहणे यस्मात्सविहितस्तदादेस्तदन्तस्य ग्रहणम् इति परिभाषास्वरूपम्। प्रत्ययग्रहणे शास्त्रे प्रत्ययबोधकं पदं विशेष्यान्तरासत्त्वे तदादिविशेष्यमादाय तदन्तोपस्थापकमिति तदर्थः।

३ संज्ञाविधाविति। संज्ञाविधायकशास्त्रे प्रत्ययबोधकं पदं तदन्तबोधकं नेत्यर्थः। सुप्तिङन्तं पदमित्यत्रान्तग्रहणमस्यां ज्ञापकम्। तथाहि, सुपस्तिङश्च प्रत्ययत्वात्प्रत्ययग्रहणपरिभाषया तदादिपदोप-स्थापनेन तदन्तविधिना मूलोक्तार्थलाभे व्यर्थमन्तग्रहणं परिभाषां ज्ञापयति।

स्यादिति तदर्थमावश्यकमर्थग्रहणमिति। नच यथोक्त.देरर्न ाधाना-
तिकञ्चेकारांशे चारितार्थ्येप्यूकारांशे वैयर्थ्यस्य सद्भावेन सूत्रारम्भ-
सामर्थ्यात् ईदूतौ सप्तमी प्रगृह्यम् अदस. एच्च द्विवचनमिति लघु-
भूतन्यासेनैव निर्वाहे गुरुभूतन्यासकरणाच्च संज्ञाविधावितयस्या
अप्रवृत्तौ तदन्तविधिसत्त्वे ईदूदन्तं यत्सप्तम्यन्तमित्यर्थे सोमो गौरी
अधिश्रित इत्यत्र प्रगृह्यत्वे सिद्धे व्यर्थमेवार्थग्रहणमिति वाच्यम्।
तस्य सामर्थ्यात्सप्तम्यर्थमात्रबोधकत्वे एवेदूदन्तस्य संज्ञा यथा स्यान्न
तदधिकार्थबोधकत्वे इत्यर्थज्ञापनेन साफल्यात्। तेन वाप्यामश्वो
वाप्यश्व इत्यत्र न प्रगृह्यसंज्ञा। अत्र वापीशब्दस्य वापीनिष्ठाधिक-
रणतानिरूपिताधेयताश्रयबोधकत्वेन सप्तम्यर्थमात्रवृत्तित्वाभावादि-
त्येवाह मूले—वृत्तावर्थान्तरोपसंक्रान्ते माभूदिति। तथा चायं
निष्कर्षः कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपासां वृत्तावनयवा-
र्थान्वितसमुदायार्थोपसर्जने सति प्रगृह्यसंज्ञा मा भूदिति। तत्र
समासवृत्तिमुदाहरति वाप्यश्व इति। अत्र सुप्सुपेत्यनेन संज्ञाया-
मित्यनेन वा समासः। समर्थः पदविधिरिति सूत्रात् वृत्तौ विशिष्ट-
विषयकशक्त्यैकोपस्थितिजनकत्वरूप एकार्थीभावः स्वीक्रियते स च
राजपुरुष इतिवृत्तावेव न तु वाक्ये राज्ञः पुरुष इत्यत्र, वाक्ये पृथ-
गर्थानि पदानि वृत्तावेकार्थानीति समर्थसूत्रभाष्यात्। एवञ्च
वाप्यश्व इत्यादौ अवयवार्थसम्वलितसमुदायेन वाप्यधिकरणकद्रव्य-
रूपार्थ एव समुचित इति। अर्थग्रहणं समर्थ्यात् आधेयासंसृष्टा-
धारबोधकत्वं समभिव्याहृतपदान्तरार्थानन्वयित्वेनोपस्थितिविषयत्व-
रूपं वा सप्तम्यर्थपर्यवसन्नत्वं बोधयति। वाप्यश्व इत्यत्राधेयेऽश्व-
रूपे द्रव्ये सप्तम्यर्थस्याधारस्य संसृष्टत्वेन प्रगृह्यसंज्ञा न भवति
सोमो गौरी अधिश्रित इत्यत्राधेये सोमे सप्तम्यर्थस्याधिकरणरूप-
स्यासंसृष्टत्वेन भवत्येव प्रगृह्यसंज्ञा। न च कारकाणां क्रियान्वय-
सिद्धान्तात् अधिश्रयणक्रियायां गौरीपदबोध्याधिकरणत्वस्य विशेष-
णत्वेनान्वयादाधारस्य कुतो नाधेयसंसृष्टत्वमिति वाच्यम्। समु-
दायार्थमन्तरा यस्यावयवार्थस्य नोपस्थितिस्तस्यैवात्रोक्तलक्षणकोटि-
प्रविष्टैकार्थीभावविषयत्वात्। अत्र तु अवयवार्थस्य पार्थक्येनाप्युप-
स्थितिरित्यदोषादित्यलम्। 'अल्पाचतरमि'ति सौत्रप्रयोगेण सिद्ध-
मनच्त्वादिति वार्त्तिकप्रयोगेण कथमनच्त्वमिति भाष्यप्रयोगेण च

वृत्तिघटकाच्पदे पदान्तकार्य्यस्य तत्सन्निधानेन श्चुत्वस्य चाभाव-कल्पनादच्सन्धिरित्यत्र न कुत्वाद्याशङ्काकलङ्कलेशोऽपीति भावः ॥

इत्यच्सन्धिप्रकरणम् ॥

---

## अथ हल्सन्धिप्रकरणम् ।

ननु १परस्परान्वितार्थकपदानां सहैव प्रवृत्तिर्निवृत्तिश्च भवतीत्यर्थिकाया २एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिरिति परिभाषायाः सद्भावेन 'न पदान्ताट्टोरनामि'त्यस्मात्प्राग्वर्त्तिनः ष्टुनाष्टुरित्यतष्टोरनुवृत्त्या पदान्तात्षकारटवर्गात्परयोः स्तोः ष्टुर्नेत्यर्थेऽपि पदान्तषकारस्य जश्त्वेन डकारस्यैव सम्भवात्ततः परस्य ष्टुत्वनिषेधस्येष्टत्वादतिप्रसङ्गाभावेन सूत्रे टोरिति व्यर्थमेवेत्याशयेन शङ्कते—टोः किमिति । नैवं सर्वत्रेति समाधत्ते—सर्पिष्टममिति । अत्र 'ह्रस्वात्तादौ तद्धिते'इत्यनेन विहितस्य षत्वस्यासिद्धत्वेन जश्त्वाप्रवृत्तौ पदान्तषकारादपि ष्टुत्वनिषेधापत्तेरावश्यकमेव सूत्रे टोर्ग्रहणमिति तदाशयः । यदा ३क्वचिदेकदेशोऽप्यनुवर्तते

---

१ परस्परान्वितार्थकपदानामिति । स्वप्रयोज्यविषतया साक्षात्परम्परया वा निरूपिता या विषयता तत्प्रयोजकानां पदानां युगपत्प्रवृत्तिनिवृत्ती भवत इत्यर्थः ।

२ एकयोगेति । अत्र ज्ञापकं तु ईदूदेद्द्विवचनमित्यत ईदूदित्येतन्मात्रानुवृत्त्यैव सिद्धावेकारानुवृत्त्यर्थं क्रियमाणम् अदसो मादित्यत्र माद्ग्रहणमेव, ज्ञापितायान्त्वस्यां तत्रैकारानुवृत्तिनिरासाय माद्ग्रहणं चरितार्थम् । लिङ्सिचावित्यतः सिज्ग्रहणानुवृत्त्यैव सिद्धौ हनः सिच इत्यत्र सिज्ग्रहणञ्च ज्ञापकं बोध्यम् ।

३ क्वचिदेकेति । एकयोगनिर्दिष्टानां क्वचिदेकदेशोऽप्यनुवर्तते इति परिभाषास्वरूपम् । अत्र ज्ञापकं तु दामहायनान्ताच्चेति सूत्रे संख्यादेरिति वक्तव्यमितिवार्त्तिकप्रत्याख्यानपरभाष्यमेव, तत्र संख्याऽव्ययादेर्ङीबित्यत एकदेशस्यापि संख्यादेरित्यनुवृत्त्या प्रत्याख्यातं वार्त्तिकम्, एतत्परिभाषाऽसत्त्वेऽव्ययस्याननुवृत्तये संख्यादेरित्यस्याप्यननुवृत्तेः प्रत्याख्यानमसङ्गतं स्यादिति ।

इतिपरिभाषया ष्टुनेत्येकदेशस्य टोरित्यस्यैवानुवृत्त्या किञ्च ष्टुने-त्यसमस्तमेव तस्मादपि टोरेवानुवृत्त्या पदान्ताट्टवर्गादित्यर्थस्यैव लाभात्सर्पिष्टममित्यादौ न दोष इत्युच्यते तदा मास्तु टोर्ग्रहण-मिति दिक्॥

ननु 'स्थानेऽन्तरतम' 'उरण्पर' इति संहितापाठस्तत्र प्रथमान्त-पाठपक्षे आदेशस्यान्तरतमो यः स्थानी तत्रैव षष्ठी उपसंहर्त्तव्या यत्रैव षष्ठी तत्रैवादेश इति सूत्रार्थेन प्रकृतिर्नियम्यते तथा च स्थानि-नामन्तरतम आदेशो भवतीत्यर्थस्य फलितत्वात् १यत्रानेकविध-मान्तर्यं तत्र स्थानत आन्तर्य्यं बलीय इति परिभाषयाऽन्यान्तर्य्या-पेक्षया स्थानकृतान्तर्य्यस्य बलवत्त्वबोधनेन चतुर्मुख इत्यादौ मूर्द्ध-स्थानजन्यरेफस्थानेऽन्याऽऽदेशापेक्षया मूर्द्धस्थानजन्यत्वसमानाधिकर-णनासिकास्थानजन्यत्वेन सादृश्यात्तादृशणकाररूपोऽनुनासिकः स्या-दित्याशङ्कां सप्तम्यन्तपाठेन निराचष्टे—स्थानप्रयत्नाभ्यामिति। अयम्भावः सप्तम्यन्तपाठपक्षे आदेशानां येऽन्तरतमास्तत्र षष्ठी यत्र षष्ठी तत्रादेशा भवन्तीति सूत्रार्थेनादेशो नियम्यते तथा च आदे-शानामन्तरतमे स्थानिनि सति आदेशो भवतीत्यर्थस्य फलितत्वेन तालवादिस्थानजन्यत्वसमानाधिकरणनासिकास्थानजन्यत्ववतां ञम-ङणनमामादेशभूतानामनुनासिकानां विधेः स्थानप्रयत्नोभयान्तरतम्येन

---

१ यत्रानेकविधमान्तर्यमिति। स्थानार्थगुणप्रमाणकृताऽऽन्तर्य-मध्ये स्थानकृतान्तर्यस्यैव बलवत्त्वमित्यर्थबोधिकेयं परिभाषा। इत्थमस्याः सिद्धिप्रकारः, स्थानेन्तरतम इति सूत्रे अन्तरतम इत्येकं वाक्यं पूर्वं पठनीयं स्थाने इत्यपरं तत्र पूर्वस्मिन्वाक्ये स्थाने इत्यनु-वर्तते प्रसङ्ग इति तस्यार्थः, तथाच प्रसङ्गे सति सदृशतमो भवती-त्यर्थः। द्वितीये स्थाने इति वाक्ये पूर्ववाक्यादनुवृत्तं स्थाने इति अन्तरतम इति च पदद्वयमनुवर्तते सूत्रस्थं स्थाने इति स्थानेनेत्यर्थ-कम्, तथा च प्रसङ्गे सति स्थानेन स्थानघटितधर्मेण शदृशतमो भवतीत्यर्थः। पूर्ववाक्येनैव स्थानघटितधर्मेण सदृशस्यापि विधान-सम्भवाद्व्यर्थमिदं द्वितीयवाक्यं स्थानेनैव सदृशतमो भवतीति नियमार्थं तथा च फलितैवेयं परिभाषा यत्रानेकविधमान्तर्यमिति।

स्पर्शे परेणाम् एतन्मुरारिः स्यादौ चरितार्थतया चतुर्मुख इत्यत्र स्थानमात्रेणान्तर्य्येवति रेफे न प्रवृत्तिः। नच सप्तम्यन्तपाठपक्षे आदेशानां यणामर्द्धमात्रिकत्वेन तेषां मात्राद्वयन्यूनकालिकत्वरूपान्तरतम्येन स्थानिनोऽपि मात्रिकह्रस्वस्यैव समुचितत्वात्तत्र यणश्चरितार्थतया दीर्घे यणादेशाप्राप्त्या सप्तम्यन्तपाठस्य भाष्यकृता दूषितत्वेन चतुर्मुख इत्यत्रोक्तदोषस्तदवस्थ एवेति वाच्यम्। 'अनुस्वारस्य ययि परसवर्णः' इत्यतः परसवर्णघटकसवर्णपदापकर्षणेन सवर्णोऽनुनासिको भवतीत्यर्थे रेफस्य सावर्ण्याभावादनुनासिकाप्राप्तेः रेफोष्मणां सवर्णा न सन्तीति भाष्यात्। अत एव स्वर्नयति प्रातर्नयतीत्यादौ नानुनासिकः। नचैवमपि व्यक्तिपक्षे प्रतिलक्ष्यं लक्षणोपप्लवाङ्गीकारात् चतुर्मुख एतल्लक्ष्यविषयकस्य 'यरोऽनुनासिकेऽनुनासिको वेत्यस्याचारितार्थ्यात्तत्रत्योक्तदोषस्तदवस्थ एवेति वाच्यम्। लक्ष्यानुरोधाज्जातिपक्षाश्रयणेन लक्ष्यत्वजातेरैक्यादेतल्लक्ष्यविषयकस्याप्युक्तसूत्रस्य चरितार्थत्वेनादोषात्। वस्तुतस्तु व्यक्तिपक्षेऽपि नैव दोषः तादृशव्यक्तौ चरितार्थस्योक्तशास्त्रस्यैतद्व्यक्तिविषयत्वेनानुपप्लवादिति॥

ननु ककुदन्त इत्यत्र प्रत्यये भाषायामित्यनेन कुतोनाऽनुनासिक इत्यभिप्रायेण शङ्कते—कथन्तर्हीति। समाधानमाह—दकारनिपातनादिति। अयम्भावः, तत्रानुनासिकस्येष्टत्वे प्रक्रियालाघवाय गणेऽनुनासिकविशिष्ट एव पठितव्ये प्रकृतिप्रत्ययविशिष्टपाठसामर्थ्यात्तदभावकल्पनेन नानुनासिकः। किञ्च यद्वि अन्तसौ मत्वर्थे इतिसंहितापाठे तकारात्प्राक् चर्त्वेन दकारप्रश्लेषाङ्गत्वेन पदत्वाभावादनुनासिकस्य न प्राप्तिः पदान्तस्यैव यरस्तेनानुनासिकत्वविधानादिति। तसाविति द्विर्वचनोपपत्तिस्तु तसयोर्द्वन्द्वोत्तरं दकारेण सहेतरेतरयोगाद्बोध्या। दकारेण समाहारद्वन्द्वोत्तरं सकारेण सहेतरेतरयोगेन तत्र द्विवचनं नोपपादनीयं सकारस्याल्पाच्तरत्वेन तस्य पूर्वनिपातापत्तेरित्यलम्॥

ननु उद्‌ स्थानमित्यत्र 'तस्मादित्युत्तरस्येत्येतद्बाधकेन 'आदेः परस्ये'त्यनेन सकारस्याने प्राप्तेषु 'उदः स्थास्तम्भोः पूर्वस्ये' तद्विहितदकारसवर्णेषु तथदेषु युगपदेकस्थानिकानेकादेशासम्भवात्तेषामध्ये क इहादेशस्स्यादिति सन्देहोत्थितौ समाधानमाह—अत्राघो-

पस्येति। अयम्भावः। सकारथकारयोर्दन्तस्थानजन्यत्वेन विवारश्वासाघोषमहाप्राणप्रयत्नवत्त्वेन च सादृश्यात् 'स्थानेऽन्तरतमः' इत्यनेन सकारस्थाने थकार एवादेशो जातः तस्य 'झरोझरी'ति लोपे दकारस्य 'खरि चे' ति चर्त्वं उत्थानमिति सिद्ध्यति। लोपाभावपक्षे न थस्य चर्त्वम्। तस्य चर्त्वदृष्ट्याऽसिद्धत्वात्। एवञ्च थकारद्वयघटितमुक्तरूपम्बोध्यम्। १हलो यमामिति सूत्रोक्तभाष्यसम्मताष्टाध्यायीपाठे तु थस्यासिद्धत्वाभावेन चर्त्वम्भवत्येव। अत एव उत्पूर्वस्कन्दे रोगे उपसंख्यानम् उत्कन्दो रोग इति भाष्यं संगच्छते। न चोक्तसूत्रीयभाष्यरीत्या थस्य सिद्धत्वकल्पनाच्चर्त्वोपपादने लोपाभावपक्षे तु थकारस्यैव श्रवणमित्यादिमूलोक्तस्यासङ्गतिरूपदोषप्रादुर्भाव इति वाच्यम्। प्राचामनुरोधेन तदित्यदोषात्। नच 'झलो झली' त्यनेन सलोपे इष्टप्रयोगसिद्धौ सूत्रमिदं व्यर्थमिति वाच्यम्। झलादौ प्रत्यये तेन लोप इत्यर्थज्ञापनेन तस्य चारितार्थ्यादिति॥

ननु 'मोऽनुस्वार' इत्यस्य मकारस्यानुस्वारः स्याज्झलीत्यर्थेनैव हरिं वन्दे इत्यादावनुस्वारसिद्धावलं पदग्रहणेनेत्याशयेन शङ्कते—पदस्येति किमिति। अयम्भावः, तत्र सूत्रे पदग्रहणाभावेऽपदान्तमकारस्याप्यनुस्वारापत्तिरतस्तद्ग्रहणमावश्यकम्। नचापदान्तमकारस्याप्यनेनैवानुस्वारस्येष्टत्वे यशांसीत्यादावपि तेनैव तत्सिद्धौ 'नश्चापदान्तस्य झलि' त्यस्य सामर्थ्यादपदान्तमस्य चेदनुस्वारस्तर्हि झल्येवेति नियमार्थकत्वेनोक्तस्थलीयदोषव्यावृत्तौ व्यर्थमेव पदग्रहणमिति वाच्यम्। तस्य 'नश्च' शि तुगि' त्याद्युत्तरत्रार्थत्वेन साफल्यादिति॥

ननु कुर्वन्तीत्यत्र 'रषाभ्यामि'त्यनेन णत्वं कुतो नेत्याशंक्य समाधत्ते-कुर्वन्तीत्यत्रेति। कृञो लटि तत्स्थाने झौ, 'तनादिकृञ्भ्य उः' त्यनेन उप्रत्यये 'सार्वधातुकार्द्धधातुकयोरि'त्यनेन गुणे 'अत उत्सार्वधातुके' इत्यनेनोदादेशे 'झोऽन्त' इत्यनेन झेरन्तादेशे यणादेशे

---

१ तत्सूत्रोक्तभाष्यसम्मतपाठक्रमः अनुस्वारस्य ययि; वा पदा, तोर्लि, उदःस्था, झयो हो, शश्छोटि, एतत्षट्सूत्र्यनन्तरं झलां जश् अभ्यासे चर्च, खरि च वावसाने, अणोऽप्रगृह्यस्येति।

च कृते प्राप्तस्योक्तणत्वविधायकशास्त्रस्य 'नश्चापदान्तस्ये'त्येतद्दृष्ट्याऽसिद्धत्वात्पूर्वं कृतेऽनुस्वारे तस्य 'अनुस्वारस्य ययी'त्यनेन नकारे परसवर्णे तस्य णत्वदृष्ट्याऽसिद्धत्वान्नकाराभावेन न णत्वप्राप्तिरिति भावः ॥

सम् स्कर्त्तेत्यत्र 'समः सुटी'ति समो मकारस्य रुत्वे 'अत्रानुनासिकः पूर्वस्ये'ति पाक्षिकानुनासिके तदभावे 'अनुनासिकात्पर' इति अनुस्वारे च कृते 'खरवसानयोरि'ति विसर्गे तस्य संपुंकानामिति सत्वे सँस्स्कर्त्ता, संस्स्कर्त्ता इति सकारद्वयघटितं रूपद्वयम्। समो वा लोपमेके इति भाष्येण सकारस्य पाक्षिके लोपे तस्यापि रुप्रकरणस्थत्वेनानुस्वाराऽनुनासिकाभ्यामेकसकारघटितं रूपद्वयं संस्कर्त्ता, सँस्कर्त्तेति। नच लोपपक्ष एव द्वित्वेन द्विसकारकरूपसिद्धावलं समः सुटीत्यनेनेत्यत आह—त्रिसकारकमपीति। सकारत्रयघटितरूपसिद्ध्यर्थमावश्यकत्वादिति भावः। नच 'स्कोरि'ति सलोपः कुतो नेति वाच्यम्। समो वा लोपमेक एतद्विहितसलोपस्यासिद्धत्वेन तस्य संयोगादित्वाभावात्। ननु अनुस्वारस्यानच्त्वेन ततः परस्य सकारस्य द्वित्वासम्भवादनुस्वारपक्षे कथं त्रिसकारकरूपसिद्धिरित्यत आह—अनुस्वारविसर्गेत्यादि। द्वित्वपक्षे अयोगवाहानामट्सूपसंख्यानं शर्षु चेति [1]इयवरट्सूत्रभाष्योक्तेरनुस्वारस्याप्यच्त्वात्ततः परस्य सकारस्य द्वित्वे संस्स्स्कर्त्ता सँस्स्कर्त्तेति त्रिसकारकं रूपं सिद्ध्यति। न चानुस्वारादीनामच्त्वे हरिं स्मरेत् हरिः कर्त्ता रामः पातु इत्यादौ [2]यणाद्यापत्तिरिति वाच्यम्। यणादिदृष्ट्या विसर्गादीनां त्रिपादीस्थत्वेनासिद्धत्वादिति भावः। अनुनासिकपक्षे त्रीणि। त्रीणि चानुस्वारपक्षे। एवं कृत्वा षड्रूपाणि। अनुनासिकपक्षे रूपत्रयघटकककारस्य 'शरः खय' इति द्वित्वे षट्। अनुस्वारपक्षे चानुस्वारस्य ककारस्य च द्वित्वे द्वादश इत्थं कृत्वाऽष्टादश रूपाणि।

---

१ तत्र हि भाष्ये इमे अयोगवाहा न क्वचिदुपदिश्यन्ते श्रूयन्ते च। तेषां कार्य्यार्थ उपदेशः कर्त्तव्यः। के पुनरयोगवाहाः विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वारयमाः। एषां क्वोपदेशः कर्त्तव्य इत्युक्त्वा अयोगवाहानामित्याद्युक्तम्।

२ यणाद्यापत्तिरित्यत्रादिपदेन सवर्णदीर्घो बोध्यः।

एषां तकारस्य 'अचो रहाभ्याम्' इति द्वित्वे यणो मयो द्वे इति वचनान्तरेण च द्वित्वे एकतं द्वितं त्रितमिति चतुष्पञ्चाशद्रूपाणि। 'अणोऽप्रगृह्यस्ये'ति वैकल्पिकानुनासिकविधानादष्टोत्तरशतरूपाणि बोध्यानीत्यलम्॥

व्युत्पत्तिपक्षेऽप्रत्ययस्येति षत्वपर्य्युदासादिति। अयम्भावः पुम् कोकिल इति स्थितौ 'पुमः खय्यम्परे' इत्यनेन रुत्वे उक्तसूत्रद्वयेन अनुनासिकेऽनुस्वारे च विसर्गे व्युत्पत्तिपक्षे 'पूञो डुम्सुन्नि'त्यौणादिक सूत्रेण निष्पत्त्या प्रकृतिप्रत्ययविभागज्ञानादप्रत्ययस्येतिपर्य्युदासादिदुदुपधस्येत्यस्याप्राप्त्या ${\asymp}$क${\asymp}$पयोः प्राप्तौ संपुंकानामिति सत्वम्। अव्युत्पत्तिपक्षे प्रकृति प्रत्ययविभागज्ञानाभावादुक्तपर्य्युदासाप्राप्त्याऽनुनासिकपक्षे इदुदुपधस्येति प्राप्तषत्वमनुस्वारपक्षे च तेन व्यवधानादुदुपधत्वाभावात्षत्वाप्राप्त्या प्राप्तौ ${\asymp}$क${\asymp}$पौ च बाधित्वा सत्वमेवेति। पुँस्कोकिल इति सिद्ध्यतीति॥

ननु चक्षिङो ल्युटि ख्शादिरयमादेश इति प्रकृतसूत्रस्थभाष्यात् चक्षिङः ख्याञ् इत्यनेन ख्शाञादेशे शस्य योवेत्यनेन शस्य यत्वे तस्यासिद्धप्रकरणस्थणत्वविधायकशास्त्रानन्तरपाठेन 'पुमः खय्यम्परे' इत्येतद्दृष्ट्याऽसिद्धत्वादम्परकत्वाभावेनोक्तसूत्राप्राप्त्या न रुत्वमित्याशयेनाह—ख्याञादेशे न पुंख्यानमिति। नच वर्जनाऽर्थेशन्नयोश्चेति निषेधात्कथमादेश इति वाच्यम्। बहुलन्तणव्यन्नबधकशात्रविचक्षणाजिराद्यर्थेष्विति वार्त्तिकस्थबहुलग्रहणादुक्तनिषेधाप्रवृत्त्याऽऽदेशस्य सौलभ्यादिति भावः॥

येन नाप्राप्ताविति। येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवतीति न्यायाकारः १यत्कर्तृकावश्यप्राप्तौ यस्य विधेरारम्भः स तस्य बाधक इति तदर्थः। तथा च, विसर्जनीयस्य स एतत्कर्तृकावश्यप्राप्तौ कुप्वो ${\asymp}$क${\asymp}$'पौ चेत्ये'तस्य विधेरारम्भात्तस्यैवा-

---

१ विशेषशास्त्रोद्देश्यविशेषधर्मावच्छिन्नवृत्तिसामान्यधर्मावच्छिन्नोद्देश्यकशास्त्रस्य विशेषशास्त्रेण बाध इति फलितम्। उत्सर्गशास्त्राऽप्राप्तियोग्येऽचारितार्थ्यं ह्यपवादशास्त्रस्य बाधकत्वे बीजम्। शास्त्रस्वीयोद्देश्यतावच्छेदक व्यापक धर्मावच्छिन्नोद्देश्यताक शास्त्रस्य बाधकमिति ततोऽपि फलितम्।

नेन बाधो न तु शर्परे विसर्जनीय इत्यस्य तद्विषये एतत्कर्तृकावश्य-प्राप्तेरभावात् । नच खरवसानयोरित्येतद्विहितविसर्गस्य कुप्वोः ≍क≍पौ चेत्येतद्दृष्ट्याऽसिद्धत्वात्तस्य सत्वमेव शर्परे विसर्जनीय इत्येतद्विहितविसर्गस्य तु ≍क≍पौ दुर्वाराविति वाच्यम् । शर्परे इति सूत्रस्य कुप्वोरित्यत्रानुवृत्त्या शर्परयोः कुप्वो ≍क≍पयोरपवादो विसर्गस्य विसर्ग इति वाक्यभेदेन व्याख्यानेनादोषात् । तेन वासः क्षौममित्यादौ विसर्ग एव न सत्वमिति दिक् ॥

ननु उभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति परिभाषया तस्मिन्निति तस्मादित्युत्तरस्येत्यस्य प्राबल्यबोधनात्तदुपस्थित्या दीर्घादिति पञ्चम्या छे इति सप्तम्याः षष्ठीप्रकल्पनेन दीर्घात्परीभूतस्य छस्य तुगित्यर्थे छस्य तुगागमे छकारोपरि चकारश्रवणापत्तिर्दुर्वारेत्याशङ्कां समाधत्ते—दीर्घस्यायं तुगिति । उक्तरीत्या छकारस्य तुगागमे सेना सुराच्छायेति निर्देशासङ्गतिः स्यादत उक्तज्ञापकाद्याख्यानाच्च दीर्घादिति षष्ठ्यर्थे पञ्चमी एवञ्च दीर्घस्यैव तुग् भवति न तु छस्येति नोक्तदोष इति भावः ॥ इति हल्सन्धिप्रकरणम् ॥

---

## अथ विसर्गसन्धिप्रकरणम् ।

अप्रत्ययस्य किमिति । तदभावेऽग्निः करोतीत्यादौ प्रत्ययसम्बन्धिविसर्गस्य षत्वापत्तिरतस्तद्ग्रहणमावश्यकम् । नच विसर्गे प्रत्ययत्वं स्थानिवद्भावेन लभ्यं तच्च न सम्भवति स्थानिवत्सूत्रदृष्ट्या विसर्गविधायकस्य त्रिपादीस्थत्वेनासिद्धतया पदान्तत्वाभावात्प्रत्ययत्वाभावाच्च विसर्गषत्वयोर्भावाभावस्योपपादनस्याशक्यत्वात्प्रत्ययग्रहणस्योक्तप्रत्युदाहरणदानमयुक्तमिति वाच्यम् । अप्रत्ययग्रहणसामर्थ्याद्वतिघटितातिदेशानां त्रिपाद्यामपि प्रवृत्तिरिति ज्ञापनेन स्थानिवत्सूत्रस्य त्रिपाद्यां प्रवृत्त्या प्रत्ययत्वस्य सुलभत्वेन प्रत्युदाहरणदानस्य युक्तत्वादिति । तत्र षत्वव्यावृत्तयेऽप्रत्ययग्रहणमावश्यकमिति । नच दाधातोर्डुर्प्रत्ययेन निष्पन्नत्वात् दुःकरोतीत्यादौ प्रत्ययसम्बन्धिविसर्गस्य षत्वाभावायाप्रत्ययग्रहणस्य साफल्याज्ज्ञापकत्वमयुक्तमिति वाच्यम् । तथा सति द्विर्वचनादिग्रहणस्यैवोक्तार्थे ज्ञापकत्वादिति भावः ।

ननु 'इदुदुपधस्ये'त्यनेन मातुः कृपेत्यत्र षत्वं स्यादित्याशङ्क्य समाधत्ते—एकादेशशास्त्रनिमित्तकस्येति । एकादेशशास्त्रं 'ऋत उदिति' तन्निमित्तकस्य विसर्गस्य न षत्वमित्यर्थः । प्रमाणञ्चात्र कस्कादिगणे भ्रातुष्पुत्रशब्दस्य पाठः । अन्यथाऽनेनैव षत्वे सिद्धे तत्रोक्तशब्दपाठस्य वैयर्थ्यं स्यात् । नच ऋत उदित्यनेन कृते एकादेशे रपरत्वे च मातुरित्यस्य निष्पन्नत्वादेकादेशनिमित्तकत्वं रेफस्यैव न तु विसर्गस्येति कथं निषेध इति वाच्यम् । एकादेशनिमित्तनिमित्तकस्य न षत्वमिति तदर्थेनादोषात् । नच 'षत्वतुकोरसिद्ध'इत्यस्य सत्वेन षत्वे कर्त्तव्ये एकादेशस्यासिद्धत्वान्न षत्वमिति वाच्यम् । पदान्तपदाद्योरेवैकादेशोऽसिद्धो नान्यत्रेति वार्तिकेनोक्तदोषाभावात् । १अन्यथा शकहूष्वित्यत्र षत्वं न स्यात् 'षत्वतुकोरि'त्यनेन षत्वे कर्त्तव्ये सम्प्रसारणाच्चेति पूर्वरूपैकादेशस्यासिद्धत्वेनाऽऽकारेण व्यवधानात् । उक्तवार्त्तिकोदाहरणन्तु कोऽसिचत् सोऽसिचदिति भावः॥

ननु सुजन्तद्विस्त्रिशब्दसाहचर्य्येण सुजन्तस्यैव चतुश्शब्दस्य ग्रहणात्तस्यैव षत्ववैकल्पिकत्वेन चतुष्कपाल इत्यत्रत्यचतुश्शब्दस्य सुजन्तत्वाभावेन दोषाभावात्कृत्वोऽर्थग्रहणं व्यर्थमित्यत आह—कृत्वोऽर्थे किमिति । समाधानमाह—चतुष्कपाल इति । अयम्भावः व्यर्थं सज्ज्ञापयति कृत्वोऽर्थग्रहणं २साहचर्य्यपरिभाषाऽनित्येति । एवञ्च सुजन्तातिरिक्तस्यापि चतुश्शब्दस्य वैकल्पिकषत्वापत्तिरतस्तद्ग्रहणमावश्यकमिति । दीधीवेवीटामित्यत्र धातुसाहचर्य्येण्या-गमस्येटो ग्रहणमुक्तपरिभाषाऽनित्यत्वफलं बोध्यमिति दिक् ॥

ननु 'इसुसोः सामर्थ्ये' अत्र सूत्रे सामर्थ्यपदेनैकार्थीभावस्य ग्रहणात्सर्पिष्करोतीत्यादौ तदभावादुक्तसूत्राप्रवृत्ताविदुदुपधस्येति नित्यमेव षत्वं परमसर्पिः कुण्डिकेत्यादावेकार्थीभावरूपसमासेऽप्येतत्प्रवृत्त्या वैकल्पिकषत्वञ्च स्यादित्यत आह—सामर्थ्य मिह व्यपेक्षेति । इहैव न त्वन्यत्रेति तदर्थः पूर्वयोगे सामर्थ्यं व्यपेक्षारूपम् न चात्र व्यपेक्षा सामर्थ्यमित्युत्तरसूत्रे भाष्योक्तेः । नच परमसर्पिः

---

१ उक्तवार्त्तिकानङ्गीकारे ।

२ साहचर्यपरिभाषेति । सहचरितासहचरितयोः सहचरितस्यैव ग्रहणमिति तत्स्वरूपम् ।

कुण्डिकेत्यादौ नित्यं समास इति षत्वापत्तिरिति वाच्यम्। अनुत्तरपदस्थस्येति निषेधात्। व्यपेक्षा च पृथगर्थानां पदानामाकांक्षादिवशाद्यः परस्परसम्बन्धः सा। स्वार्थपर्य्यवसायिनां पदानामेकार्थोपस्थिति जनकत्वमेकार्थीभावरूपसामर्थ्यम्। व्यपेक्षारूपसामर्थ्यग्रहणे नित्यं समासेऽत्र सूत्रे समासग्रहणमेव प्रमाणम्। अन्यथा सामर्थ्यग्रहणानुवर्तनादेकार्थीभावस्य समासरूपत्वेन समासलाभे तद्ग्रहणं व्यर्थमेवेति दिक्॥

ननु अतः कृकमीत्यनेनैव सत्वसिद्धौ कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठो व्यर्थ इत्यत आह—कस्कादिष्विति। व्यपेक्षा विरहेऽपीति। आनय सर्पिः कुण्डिका तिष्ठत्वित्यादौ। व्यपेक्षायामिति। इदं सर्पिः कुण्डिकाया इत्यादौ। यत्तु-उत्तरपदस्थत्वेऽपि परमसर्पिः कुण्डिकाया इत्यत्रत्यषत्वार्थः कस्कादिषुपाठ इत्याहुस्तन्न। नित्यं समास इत्यत्रानुत्तरपदग्रहणवैयर्थ्यापत्तेः। अव्युत्पत्तिपक्षे इदुदुपधस्येत्यनेन सिद्धेश्च, प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेः सिद्धमिति भाष्येण व्युत्पत्तिपक्षस्यैवाङ्गीकारादेतस्मिन्पक्षेऽपि न दोष इतिभावः।

नन्वतः कृकमीत्यत्र तपरकरणेन भास्कर इत्यत्र सत्वं न स्यादत आह—कस्कादिषु भास्कर इति। इति विसर्गसन्धिः।

---

## अथ स्वादिसन्धिप्रकरणम्।

ननु स्वौजसमौडित्यत्र सुस्थाने रुरेव विधेयः सर्वत्र सकारस्थाने रुत्वस्यैव विधानेन प्रक्रियागौरवात्। तस्मात् वौजसित्येव सूत्रं न्याय्यमिति यत्तदयुक्तमिति ध्वनयन्नाह—स्वौजसमौडिति सुप्रत्यये कृते शिवस् अर्च्य इति स्थित इति। अयम्भावः, तथा सति उत्वविधानस्य शिवोऽर्च्य इत्यादौ चारितार्थ्ये यशोऽत्रेत्यादावुत्वं प्रति रुत्वस्यासिद्धत्वेन यशोऽत्रेत्याद्यसिद्ध्यापत्तिरिति भावः॥

[1]ननु स्वौजसमौडित्यत्र सुस्थाने रुरेव विधेयः। सर्वत्र सकारस्थाने रुत्वस्यैव विधानेन प्रक्रियागौरवात्। नचैवं 'सुपि चे'त्यस्य स्थाने 'रुपिचे'ति सूत्रस्य कर्त्तव्यतापत्तौ राम इत्यादौ दीर्घापत्तिरिति

---

१ इदं संक्षेपतः पूर्वं व्याख्यातमपि पुनर्विशदरूपेण व्याख्यायते।

वाच्यम्। 'पथिमथ्यृभुक्षामात्' इत्यनेन दीर्घाकारविधानसामर्थ्येन 'प्रत्ययः' 'परश्चे'त्यादिनिर्देशेन च प्रथमैकवचने दीर्घो नेति ज्ञापने नादोषात्। एवञ्च 'यौञ्जसि'त्येव सूत्रं न्याय्यमिति यत्तदयुक्तमिति ध्वनयन्नाह—स्वौजसमौडिति सुप्रत्यये कृते शिवस् अर्च्य इति स्थित इति। अयमेतदभिप्रायः, १तथासति २उत्वविधानस्य रुविधानवादिमते शिवोऽर्च्य इत्यादौ चारितार्थ्ये यशोऽत्र पयोऽत्रेत्यादावुत्वं प्रति रुत्वस्यासिद्धत्वादुत्वाभावेनोक्तप्रयोगासिद्धिरापद्येत। नचा मुताग्रहणसामर्थ्यादुत्वे कर्त्तव्ये रुत्वस्यासिद्धत्वाभावकल्पनान्नोक्तप्रयोगासिद्धिः, इतरथा ३एहि सुश्रोत३ अत्र स्नाहीत्यादावुत्वदृष्ट्या रुत्वस्यासिद्धत्वेनोत्वाप्राप्त्या प्लुताकारात्परीभूतस्य रोरुत्वाभावाय कृतस्याप्लुताग्रहणस्य स्पष्टमेव वैयर्थ्यमिति वाच्यम्। ४ देवदत्ता३ गतो ग्रामान् किमित्यादौ 'अनन्त्यस्यापि प्रश्नाख्यानयोः' एतद्विहित प्लुतविषये प्लुताकारात्परस्य प्रत्ययभूतस्य रोरुत्वाभावाय तस्य चारितार्थ्येन ज्ञापकत्वासम्भवात्। नचात इत्यत्र तपरकरणसामर्थ्यादुक्तकल्पनान्नोक्तदोषः, अन्यथा देवा अत्रेत्यादौ जसः सकारस्य रुत्वे तस्योत्वदृष्ट्याऽसिद्धत्वेन दीर्घाकारात्परस्य रोरभावादेवोत्वव्यावृत्तौ तदर्थं तपरकरणं निष्प्रयोजनमिति वाच्यम्। विश्वपा अत्रेत्यादौ दीर्घात्परस्य प्रत्ययभूतस्य रोरुत्वव्यावृत्तये तपरकरणस्यावश्यकत्वात्। न च रूपरात्रिरथन्तरेष्विति वार्त्तिकारम्भसामर्थ्यादुक्तार्थः कल्प्यतामेवञ्च नोक्तदोषः, अन्यथा रुत्वस्यासिद्धत्वादुत्वाप्राप्त्या वार्त्तिकस्य सत्त्वेऽसत्त्वे वा अहो रूपमित्यादेरनुपपत्त्या स्पष्टमेवं तद्वैयर्थ्यमिति वाच्यम्। अहः—अहोभ्यामित्यादौ नलोपदृष्ट्या रत्वरुत्वयो-

---

१ रुप्रत्ययस्याङ्गीकारे सतीत्यर्थः।

२ अयम्भावः, शिवोऽर्च्य इत्यादौ रुप्रत्ययस्य सापादिकत्वेनोत्वदृष्ट्या नासिद्धत्वमिति न दोषः, यशोऽत्रेत्यादौ तु सुप्रत्ययस्य 'हल्ङ्याबि'ति लोपे प्रकृतिसकारस्य 'ससजुषोरुरि'ति रुत्वे तस्य च त्रैपादिकत्वादुत्वदृष्ट्याऽसिद्धत्वेनोत्वानापत्तिर्दोषो बोध्यः।

३ सुश्रोतस इति कस्य चित्संज्ञा 'दूराद्धूते चे'ति प्लुतः।

४ नेदं जसिरूपं किन्तु प्रथमैकवचन एव—दीर्घाकारश्रवणन्तु प्लुत्येति बोध्यम्।

रसिद्धत्वात्प्राप्तनलोपव्यावृत्त्यर्थं कृतायामह्ह्निति सूत्रावृत्तौ ज्ञापकत्वेन चारितार्थ्यात्। सामर्थ्यविरहेण १६६ ज्ञापकत्वस्य वक्तुमशक्यतया अहन् शब्दात्परस्य रोरुत्वे कर्त्तव्ये नासिद्धिरिति विशेषापेक्षज्ञापनेन वार्त्तिकस्य चरितार्थत्वे प्रमाणाभावात्सामान्यापेक्षज्ञापनस्य कर्त्तुमशक्यतया वा तत्रत्यो दोषस्तदवस्थ एव। तस्मादर्वाचीनाभिप्रेतन्यासो नाङ्गीकार्य्य इति। यत्तु अत इत्यत्र तपरकरणादेवेत्यारभ्य चिन्त्यमिदमित्याहुः केचिदित्यन्तं, तन्न। तपरकरणस्य पूर्वप्रदर्शितप्रयोगे चारितार्थ्यात् यच्च एतु जात३ रत्र स्नासि किमित्यादावप्लुताद्ग्रहणं चरितार्थं, तदपि न। ज्ञाधातोर्जन धातोर्वा वृचि 'ज्ञाजनोर्जे' ति जादेशस्य 'जनसनखनां सञ्झलोरि'त्यात्वस्य चाप्राप्त्योक्तप्रयोगस्य सर्वथाऽनुपपत्तेः। पूर्वसूत्रेण श्यिति जादेशस्य, उत्तरसूत्रेण झलादौ सनि झलादौ क्ङिति चात्वस्य च विधानेनोक्तनिमित्ताभावात्। यद्यपि जनधातोः क्तप्रत्यये जातशब्दस्य निष्पत्तिस्तथापि रेफघटित उक्तप्रयोगोऽसाधुरेव, प्लुतश्रवणादुत्वाप्राप्त्या यत्वयलोपयोर्दुर्वारत्वात्। एवञ्च जात३ अत्रेत्येव साधुरित्यलम्॥

ननु यत्र यत्र पदान्तसकारस्तत्र सर्वत्र जश्त्वप्राप्तौ रुत्वविधानं व्यर्थमेव स्यादित्याशयेनाह—जश्त्वापवाद इति। बाध्यविशेषचिन्ताश्रयणे (येन नाप्राप्ति) न्यायेन रुत्वं जश्त्वस्य बाधकमिति भावः। बाध्यसामान्यचिन्ताश्रयणे तु श्रेयानित्यादौ संयोगान्तलोपानापत्तिः। तथाहि, जश्त्वशास्त्रदृष्ट्या रुत्वशास्त्रस्यासिद्धत्वाभावाय रुत्वशास्त्रे पूर्वत्रासिद्धिमित्यस्यानुपस्थितौ रुत्वस्य सिद्धत्वात्परत्वात्संयोगान्तलोपं बाधित्वा रुत्वे यणः प्रतिषेधादझलन्तत्वाच्च संयोगान्तलोपाप्राप्त्या तदनापत्तिः। अतः पूर्वपक्ष एव युक्तः, अत्र च पक्षे, न तत्र संयोगान्तलोपानापत्तिः। रुत्वशास्त्रे पूर्वत्रासिद्धमित्युपस्थिते पूर्वं प्रति परमसिद्धमिति तेन बोधनाद्रुत्वशास्त्रापेक्षया संयोगान्तलोपस्य पूर्वत्वादेतद्दृष्ट्या रुत्वस्यासिद्धत्वेन प्रागुक्तलोपस्यैव प्रवृत्तेः। ससजुषोरुरित्यत्रोपस्थितपूर्वत्रासिद्धमित्यत्र पूर्वपदेन जश्त्वभिन्नस्य ग्रहणेनापि सिद्धौ सर्वथा तत्र तदनुपस्थितौ मण्डूकानुवृत्तौ च बीजाभाव इत्युत्तराशयः॥

ननु उत्वदृष्ट्या यत्वस्यासिद्धत्वेन कृतेऽप्युत्वे तस्य स्थानिवद्भा-

१ उत्वं प्रति रुत्वस्यासिद्धमित्यत्रेत्यर्थः।

वादुत्वबुद्ध्या यत्वं स्यादित्याह—यलस्यापवाद इति। अयम्भावः, तदप्राप्तियोग्येऽचारितार्थ्ये सति कृते च तस्मिञ्चारितार्थ्यमिति तक्र-न्यायमूलकयेन नाप्राप्ति न्यायस्य बाधबीजम्। तथाच, उत्सर्गशास्त्र-स्य भो भगो अघो इत्यस्याप्राप्तियोग्यस्थलेऽचारितार्थ्येनोत्वेन यत्व-स्य तेन न्यायेन बाधे न पुनर्यत्वप्राप्तिः। सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यत्र यथा तक्रदानेन दधिदानबाधे न पुन-र्दधिदानं तद्वदिति दिक्॥

ननु उत्वविधायकशास्त्रस्य सापादिकत्वेन तद्दृष्ट्या रुत्वस्या-सिद्धत्वादुत्वं न स्यादित्यत आह—उत्वं प्रति रुत्वं नासिद्धं रुत्वमनू-द्योत्वविधेः सामर्थ्यादिति। यद्येवं तर्हि उत्वविधानं व्यर्थमेव स्या-दिति सामर्थ्यादसिद्धत्वाभावकल्पनान्न दोष इति भावः। नच त्रिपा-द्यां 'रोः सुपी' त्यस्याग्रे 'अत उरति' इति सूत्रपाठेनैवासिद्धत्वाभावो-पपत्तावलमेतेन सामर्थ्याश्रयणप्रयासेनेति वाच्यम्। तथा सति, उत्वस्यासिद्धत्वेन गुणप्रसक्त्या शिवोऽर्च्य इत्याद्यसिद्ध्यापत्तेः। मनोरथ इत्यत्र रोरीति लोपापत्तेश्चेति दिक्॥

शिवोऽर्च्य इति। ननु शिव उ अर्च्य इति स्थितौ प्राप्तं 'आद्-गुणः' इति गुणं बाधित्वा प्राप्ते 'प्रथमयोरि'ति पूर्वसवर्णदीर्घे पश्चात्त-स्य 'नादिची'त्यनेन बाधेऽपि १(भ्रष्टावसर)न्यायस्य जागरूकत्वा-त्पुनर्गुणो न स्यादिति चेन्न। 'तौ सत्' 'भिद्योद्ध्यौ नदे' इत्यादिनिर्दे-शेनोक्तन्यायस्यात्रानाश्रयणेन गुणप्रवृत्तेः सुलभत्वात्। (देवदत्तहन्तृ-हत) न्यायस्य तु नात्र प्रवृत्तिः। देवदत्ते हते सति तद्धन्तुर्हनने न पुनर्देवदत्तोज्जीवनमित्युक्तन्यायार्थात्। देवदत्तहननप्रसक्तयज्ञदत्तह-नने त्वस्त्येव देवदत्तोज्जीवनम्, प्रकृते न हननस्थानीया वृद्धिहन्तुः पूर्वसवर्णदीर्घस्य लक्ष्ये प्रवृत्तिः, किन्तु हननोद्यमसजातीयं प्रसक्ति-मात्रं प्रसक्तस्य बाधे बाध्योज्जीवने न बाधकमिति भावः॥

ननु अतः परस्य रो रुत्वं स्यादप्लुतेऽतीत्यर्थकेन 'अतो रो रप्लुते' इत्यैव सूत्रेण शिवोऽर्च्य इत्यादावुत्वसिद्धौ व्यर्थमेवाप्लुताद्ग्रहणमि-त्याशयेन शङ्कते—अप्लुतात्किमिति। समाधत्ते—एहि सुस्रोत३ अत्र स्नाहीति। अयम्भावः, तदभावे उक्तप्रयोगे प्लुताकारात्परस्यापि

१ भ्रष्टावसरेति। यस्यावसरो भ्रष्टः स पुन र्न प्रवर्तते इति न्याय स्वरूपम्।

रोरुत्वापत्तिरतस्तद्ग्रहणम्। नचात इत्यत्र तपरकरणात् 'तपरस्तत्कालस्ये' त्यनेन तपरसमकालिकह्रस्वस्यैव ग्रहणात्प्लुतस्याग्रहणेन तस्मात्परस्य रोरतः परत्वाभावादेव तत्रोत्वव्यावृत्तावप्लुताद्ग्रहणं सर्वथा व्यर्थमेवेति वाच्यम्। उत्वदृष्ट्या प्लुतस्यासिद्धत्वादतः परत्वस्य सद्भावेन प्राप्तोत्वव्यावृत्तये तस्य सार्थक्यात्। ननु प्लुतस्योत्वदृष्ट्याऽसिद्धत्वेनातः परत्वस्य सद्भावात्कृतेऽप्यप्लुताद्ग्रहणे तत्रोत्वापत्तिस्तदवस्थैवेत्यत आह—अप्लुतादिति विशेषणे तु तत्सामर्थ्यान्नासिद्धत्वमिति। सति तु तस्मिन् प्रतियोगित्वेन प्लुतस्याश्रयणसामर्थ्यादसिद्धत्वं नेति तदर्थः। तत्सत्वेऽप्यसिद्धत्वे सर्वथा तद्वैयर्थ्यं स्यादिति भावः। नचात इत्यत्र तपरकरणसामर्थ्यादेवोक्तस्थलीयोक्तदोषोद्धारसम्भवात्तदर्थं कृतमप्लुताद्ग्रहणं व्यर्थमेवेति वाच्यम्। देवा अत्रेत्यादौ दीर्घाकारात्परस्य रोरुत्ववारणाय तपरकरणस्य चरितार्थत्वेन सामर्थ्यविरहात्तादृशकल्पनायास्तेन कर्त्तुमशक्यतया तदर्थमावश्यकत्वेन तस्य साफल्यात्। तस्मादप्लुतादित्यनेनैवोक्तकल्पना कर्त्तुं शक्यते न तपरकरणेनेति तद्ग्रहणमावश्यकं सति तस्मिन् सामर्थ्यान्नासिद्धत्वमिति न तत्र दोषः, अग्रहणे तु प्लुतस्योत्वं प्रत्यसिद्धत्वात्स्यादेव दोष इति निष्कर्षः। नचाप्लुताद्ग्रहणज्ञापितस्योत्वे प्लुतस्यासिद्धत्वन्नेत्यस्याभ्युपगमे 'दूराद्धूते चे'ति प्लुतस्य 'गुरोरनृत' इति प्लुतस्य चोत्वदृष्ट्या सिद्धत्वेन परत्वात्प्लुते पूर्वत्र रोरप्लुतपरत्वाभावात्परत्र चाप्लुतात्परत्वाभावात् 'अतो रोरि' त्यस्याप्राप्त्या पयस्यटति पयोददातीत्यर्थे आगच्छ हे पयो३ऽट् आगच्छ हे पयो३ देत्यादावुत्वानापत्तिरिति वाच्यम्। एकपदस्थवर्णद्वयापेक्षमन्तरङ्गमुत्वं प्रति वाक्यसम्पादकपदान्तरापेक्षबहिरङ्गप्लुतस्यासिद्धत्वेनोत्वोपपत्तेः। अन्तरङ्गत्वात्प्रागुत्वे ततः प्लुते च नोक्तदोषावकाशः, अन्यथा शङ्कादलीयोकरीत्या तत्रोत्वं नैव स्यादिति भावः। नचोक्तपरिभाषायास्सपादिकत्वेनैतद्दृष्ट्या त्रैपादिकस्य प्लुतस्यासिद्धत्वात्कथं तत्प्रवृत्तिरिति वाच्यम्। स्वदृष्ट्याविद्यमानस्य परं प्रत्यविद्यमानत्वप्रतिपादनवत् परिभाषादृष्ट्या प्लुतस्याऽसिद्धत्वेऽपि तया तदसिद्धत्वप्रतिपादनस्य कर्तुं शक्यत्वात्। नच त्रिपाद्यां तत्प्रवृत्तौ नेयं त्रिपाद्यां प्रवर्तत इति सिद्धान्तविरोध इति वाच्यम्। त्रैपादिकाऽन्तरङ्गस्यासिद्धत्वे तु प्रतिपाद्याभावात्प्रतिपादनासम्भवेन तदप्रवृत्तेः। यत्रान्तरङ्गशास्त्रं सापादिकं त्रैपादिकं च बहिरङ्गशास्त्रं तत्रान्तरङ्गशास्त्रे परिभाषा प्रवर्त्तते।

परिभाषादृष्ट्या तस्य सिद्धत्वेन प्रतिपाद्यस्य सत्वात् । यत्रत्वन्तरङ्गशास्त्रं त्रैपादिकं तत्रान्तरङ्गशास्त्रे परिभाषा न प्रवर्त्तते । तादृशाऽन्तरङ्गशास्त्रस्यासिद्धत्वेन प्रतिपाद्याभावादित्युत्तराशयः। ननु प्रतियोगित्वेन प्लुतस्याश्रयणसामर्थ्यात् [1]उभयविधासिद्धत्वस्य बाधोऽस्त्विति चेन्न । आश्रयणसामर्थ्येन तु (येन नाप्राप्ति) न्यायेन प्रत्यक्षत्वात्पूर्वत्रासिद्धत्वस्यैव बाधो नत्वन्तरङ्गपरिभाषया बोध्यासिद्धत्वस्यापि मानाभावात्। नचोक्तपरिभाषया प्रागुत्वे ततः प्लुते च सुश्रोत ३ इत्यत्रैवोत्वापत्तिप्रदर्शनस्यैवौचित्येन पयोऽ३द् पयो३ देत्यादौ तया तदनापत्तिप्रदर्शनमनुचितमिति वाच्यम् । तत्रान्तरङ्गत्वात्प्लुतस्यैव प्रवृत्त्योत्वाप्राप्त्या तदनापत्तेरिहप्रदर्शनस्यैवौचित्यात् । तथाहि, एकमात्रसापेक्षत्वेन प्लुतोऽन्तरङ्गः, भिन्नवाक्यस्थाकारसापेक्षत्वादुत्वं बहिरङ्गमित्यलम् ॥

असन्धिः सौत्र इति । सूत्रे कृतः सौत्रः 'कृतलब्धक्रीतकुशलाः' इत्यण्। भगो अघोशब्दयो रोकारस्याकारस्य च पूर्वरूपात्मकः सन्धिः सौत्रत्वान्नेति तदर्थः। भोस् भगोस् अघोस् इति सान्तानां वा रान्तानामनुकरणे तु यत्वयलोपयोर्दुर्वारत्वात्तत्रासन्धिर्न्याय्य एवेति भावः । नच सान्ताऽनुकरणेनैव यत्वयलोपाभ्यां सन्ध्यभावोपपत्तावलं रान्तानुकरणेनेति वाच्यम् । विभाषा भवद्भगवदघवतामोच्चावस्येति वार्त्तिकनिष्पन्नानां भवदादिप्रकृतिकानां भो शब्दादीनामपि ग्रहणाय रान्तानुकरणस्याप्यावश्यकत्वादिति बोध्यम् ॥

ननु विसर्गयत्वयोः प्राप्तयार्यत्वस्य विसर्गदृष्ट्याऽसिद्धत्वेन स एव स्यान्नतु यत्वमिति तद्व्यावृत्त्यर्थमश्ग्रहणं व्यर्थमेवेत्यभिप्रेत्य शङ्कते—अशि किमिति । तन्निराचष्टे—देवाः सन्तीति । अयम्भावः, अश्ग्रहणाभावे अवर्णपूर्वकरोः सत्वेन तत्र यत्वापत्तिरतस्तत् सति च तस्मिन्नश्परत्वाभावान्न तदापत्तिः । नच यत्वस्यासिद्धत्वेन विसर्ग एव न तदिति न दोष इति वाच्यम् । यत्वस्य विसर्गदृष्ट्याऽसिद्धत्वेन तल्लाभेऽपि तस्य स्थानिवत्त्वेन रुत्वबुद्ध्या यत्वप्रवृत्तौ दोषस्य दुर्वारत्वात् । नच विसर्गेऽतिदेशेन रुत्वानयनासम्भवः रेफस्यैव विसर्गस्थानित्वात् । एवं च रुत्वस्यैवातिदेशस्तथाचानल्विधावित्यस्य

[1] पूर्वत्रासिद्धत्वस्य परिभाषाबोध्याऽसिद्धत्वस्य चेत्यर्थः ।

स्थानिसम्बन्ध्यल्मात्रवृत्तिधर्म्माश्रयोद्देश्यताकविधौ न स्थानिवत्त्वमित्यर्थे विसर्गस्थानिसम्बन्ध्यल्रेफमात्रवृत्तिरत्वधर्म्माश्रयोद्देश्यकयत्वविधेः कर्त्तव्यत्वेन स्थानिवत्त्वनिषेधान्न दोष इति वाच्यम्। रोरिति समुदायरूपस्याश्रयणेन रुत्वस्याल्मात्रवृत्तित्वादनल्विधावितिनिषेधाप्रवृत्त्या स्थानिवत्त्वस्य सुलभत्वेन दोषस्य तादवस्थ्यात्। विसर्गस्थानिनि रेफे रत्वरुत्वोभयधर्मस्य सत्त्वादतिदेशेन यथेच्छयाऽतिदेष्टुं शक्यत्वाद्रुत्वातिदेशे कर्त्तव्ये निषेधाप्रवृत्तिरित्युत्तराशय इति १प्राञ्चः। २नव्यास्तु स्ववृत्त्यल्त्वव्याप्यधर्म्मावच्छिन्नस्थानितानिरूपितादेशतावद्धर्म्मिकारोपप्रकारीभूतधर्म्मावच्छिन्नोद्देश्यताके कार्य्ये न स्थानिवत्त्वमित्यर्थः, तथा च स्वपदेन स्थानी गृह्यते स च रेफस्तद्वृत्ती योऽल्त्वव्याप्यो धर्म्मः स च रत्वं तदवच्छिन्ना स्थानिता रेफनिष्ठा तन्निरूपितादेशतावान् विसर्गः स धर्म्मी यस्य एतादृशो य आरोपप्रकारीभूतो धर्म्मः स च रत्वं रुत्वञ्च तदवच्छिन्नो रेफो रुशब्दश्च तन्निष्ठोद्देश्यतानिरूपितविधेयताश्रये यत्वरूपे कार्य्ये कर्त्तव्ये स्थानिवत्त्वनिषेधाद्देवाः सन्तीत्यादौ दोषाभावेनाऽस्याऽश्ग्रहणप्रत्युदाहरणत्वासम्भवात् छन्दःसु पयःस्वित्यादावुक्तदोषस्य स्पष्टत्वादेतदेव तत्प्रत्युदाहरणम्बोध्यम्। तत्र हि 'रोःसुपि' इति विसर्गस्य स्थानी रुशब्दस्तद्वृत्तिरुत्वस्य रुशब्देऽपि सत्त्वादल्त्वव्याप्यधर्म्मत्वाभावेन रुत्वावच्छिन्नस्थानिताया अल्त्वव्याप्यधर्म्मावच्छिन्नत्वाभावेन निषेधाप्रवृत्तावतिदेशेन रुत्वबुद्ध्या यत्वापत्तेर्दुर्वारतया प्रत्युदाहरणत्वोपपत्तिरिति तद्भावः। यदि च रोः सुपीत्यत्रापि रः षष्ठ्यन्तस्यानुवृत्तौ रोर्यो रेफस्तस्य विसर्ग इत्यर्थे रत्वावच्छिन्नस्थानिताया अल्त्वव्याप्यधर्म्मावच्छिन्नत्वेनोक्तनिषेधप्रवृत्त्योक्तस्थलीयदोषव्यावृत्तिस्तर्हि ३अदृष्टार्थमश्ग्रहणमित्याहुः। न च परिष्कृतार्थस्वीकारे 'ग्रहोऽलिटी'त्यत्र दीर्घशब्देनाऽचोविधानात् 'अचश्चे'ति परिभाषोपस्थिताविटोऽचादीर्घ इत्यर्थे अच्त्वावच्छिन्नस्थानिताया अल्त्वव्याप्यधर्मावच्छिन्नत्वेन तादृशस्थानितानिरूपितादेशतावान् अग्रहीदित्यत्राग्रहीस् इत् इति

---

१ प्राञ्च इति। दीक्षितादयः।

२ नव्यास्त्विति। नागेशप्रभृतयः।

३ अदृष्टार्थमिति। अदृष्टोऽर्थः प्रयोजनं यस्य तत् अदृष्टार्थम् पारायणादौ पुण्यजननप्रयोजनकमित्यर्थः।

स्थितौ सकारात्पूर्वो दीर्घ ईकारस्तद्धर्म्मिकारोप्रकारीभूतो धर्म्म इट्त्वं तदवच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयत्वं सलोपस्येत्यनल्विधाविति निषेधादिट्त्वस्यानतिदेशेन सलोपानुपपत्त्याऽग्रहीदिति न सिद्ध्येदिति वाच्यम् । १तत्रापि अन्नभिन्नेट्त्वावच्छिन्नस्यैव स्थानित्वात्तादृशधर्मस्याल्त्वव्याप्यत्वाभावेन निषेधाप्रवृत्त्या स्थानिवत्त्वेनेट्त्वाऽऽनयनात्सलोपे तदुपपत्तेः । नचोक्तार्थस्वीकारे हे रामेत्यादौ सम्बुद्ध्यवयवस्य हलः सस्य लोपे तद्वृत्ति सुप्त्वस्याल्धर्मत्वात्स्थानिवत्त्वनिषेधे कथं पदत्वमिति वाच्यम् । २ आनुमानिकादेशस्य रामेत्यस्य स्थानिवत्त्वात्सुबन्तत्वस्य तत्प्रयुक्तकार्यस्य वा लाभेन तदुपपत्तेरिति दिक् ॥

ननु उञः पदत्वस्याव्यभिचरितत्वेन पदे इति तद्विशेषणं व्यर्थमित्यत आह—पदे किमिति । उत्तरयति—तन्त्रयुतमिति । इत्थं तदाशयः, पदे इत्यस्याग्रहणे तन्त्रय् ३ उतमिति स्थितौ उञ्परत्वाद्यलोपापत्तिरतस्तद्ग्रहणं सति च तस्मिन् उञ्परत्वेऽपि तस्य पदत्वाभावान्न तदापत्तिः । नच लक्षणप्रतिपदोक्तपरिभाषया चादिपठितप्रतिपदोक्तस्यैवाऽत्र सूत्रे उञोग्रहणेन सम्प्रसारणनिष्पन्नस्य लाक्षणिकस्य तस्याग्रहणात्तत्रत्योक्तदोषव्यावृत्तौ व्यर्थमेव तद्विशेषणमिति वाच्यम् । उत्तरार्थत्वेन तस्य चारितार्थ्यात् । तथाहि, 'ङमो ह्रस्वादची' त्यत्र 'उञि च पदे' इत्यतः पदे ग्रहणमनु-

---

१ ग्रहोऽलिटीत्यत्रापीत्यर्थः ।

२ आनुमानिकेति । अनुमानात्सिद्ध आनुमानिकः । एष चानुमानिकस्थान्यादेशभावः शब्दानित्यत्ववारणाय स्वीकृतः । एतत्स्वरूपन्तु एतद्बुद्धिप्रसङ्गे एतद्बुद्धिःकर्तव्येति । प्रकृते हे राम स् इति बुद्धिप्रसङ्गे एङ्ह्रस्वादित्यनुशासनानुरोधात् हे राम इति बुद्धिः कर्त्तव्येति ।

अथवा हे रामस् इत्युच्चारणप्रसङ्गे उक्तानुशासनवलात् हे राम इत्युच्चारणीयम् । अथवा हे रामस् इत्यस्य स्थाने हे राम इत्यादेशः, एतद्रूप आनुमानिकस्थान्यादेशभावः । तथाच रामेत्यादेशस्य स्थानी रामस् इति तद्वृत्तिसुबन्तत्वस्य स्थानिवद्भावेनादेशे सुलभतया पदत्वं निरावाधमेवेति भावः ।

३ वेञः क्तप्रत्यये सम्प्रसारणे रूपं सिद्ध्यति ।

वर्त्यं ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याजादेः पदस्य ङमुडिति व्याख्यानेन परमदण्डिनावित्यादौ न ङमुट् आवित्यस्य पदत्वाभावादिति प्राञ्चः। वस्तुतस्तु पदे ग्रहणस्योत्तरसूत्रेऽपि नोपयोगः। तत्र पदस्येत्यनुवृत्त्यैव निर्वाहात्। तदनुवृत्तौ ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो ङमुडित्यर्थे उत्तरपदत्वे चेति प्रत्ययलक्षणनिषेधात्परमदण्डिन्नित्यस्यान्तर्वर्त्तिविभक्त्या पदत्वासम्भवान्ङमन्तपदात्परस्याचोऽभावेनैव ङमुटोऽप्रसक्तेरित्युत्तराशयः। यदि माषकुम्भवापेनेत्यादौ 'पदव्यवायेऽपी'ति निषेधसिद्धये उत्तरपदस्य कार्य्यित्व एवोक्तवार्तिकेन प्रत्ययलक्षणप्रतिषेध इत्युच्येत तर्हि तत्र प्राप्तङमुट्निवृत्तये प्राचीनव्याख्यानमेव शरणम्। इति युक्तमेव पदेग्रहणमुत्तरार्थमिति कथनम्। ननु 'हलि सर्वेषाम्' इत्यत्र पदेग्रहणमनुवर्त्य हलादौ पदे इत्यर्थलाभे वृक्षव्भ्यामित्यादौ न। नित्यवलोपः। किन्तु 'लोपः शाकल्यस्ये'ति वैकल्पिक एव स इति पदेग्रहणस्य प्रयोजनमस्तीति चेन्न। हलि सर्वेषामित्यत्र वकारस्याननुवृत्त्याऽनेन लोपाप्राप्त्या वैकल्पिक एव लोपे पदेग्रहणस्य निष्प्रयोजनत्वादित्यलम्॥

ननु 'रोऽसुपि' इत्यत्राऽसुपिग्रहणाऽभावे तस्य सुप्यपि प्रवृत्त्यापत्तावहन्सूत्रस्य वैयर्थ्येन सामर्थ्यादुक्तसूत्रस्य सुपि न प्रवृत्तिरिति कल्पनादसुप्येव तत्प्रवृत्तौ व्यर्थमेव तद्ग्रहणमित्यभिप्रायकः पूर्वपक्षः प्रादुर्भवति—असुपि किमिति। तं समाधत्ते—अहोभ्यामिति। अयम्भावः, १ तथा सति, अहः, अहोभ्यामित्यादौ नकारस्य रेफादेशे तस्य नलोपदृष्ट्याऽसिद्धत्वेन प्राप्तनलोपव्यावृत्त्यर्थमावृत्तेरावश्यकत्वेन तदर्थमहन्सूत्रस्यावश्यकत्वादनेनोक्तकल्पनायाः कर्त्तुमशक्यत्वेन रोऽसुपीत्यस्य सुप्यपि प्रवृत्तावुक्तप्रयोगासिद्ध्यापत्तिरित्यावश्यकमेव सूत्रे तद्ग्रहणमित्यलम्॥

ननु सूत्रे दीर्घपदश्रवणात् 'अचश्चे'ति परिभाषोपस्थितावच एव दीर्घविधानात्सिद्धौ व्यर्थमेवाणग्रहणमित्यत आह—अणः किमिति। प्रत्युदाहरति—तृढः तृढ इति। तृह् तृह् धातुभ्यां क्तप्रत्यये ऊदित्वेन वेट्कत्वात् 'यस्य विभाषा' इति निष्ठाया इण्निषेधे ढत्वधत्व-

१ असुपीत्यस्याभावेऽहन्सूत्रविषये रोऽसुपीति सूत्रे प्रवृत्ते सतीत्यर्थः।

ष्टुत्वढलोपेषु कृतेषु निष्पन्ने इक्तप्रयोगे ऋकारस्याच्त्वेन दीर्घापत्तिरतस्तद्ग्रहणं कृतं कृते च तस्मिन् ऋकारस्याण्त्वाभावान्नोक्तापत्तिः। नच परणकारेणाऽणो ग्रहणे सत्यपि तस्मिन् तत्रत्योक्तदोषस्तदवस्थ एवेति वाच्यम्। अत्र पूर्वेणैवाणग्रहणस्य सिद्धान्तितत्वात्। अन्यथोक्तरीत्यैव सिद्धौ स्पष्टमेवाणग्रहणस्य वैयर्थ्यमिति भावः॥

ननु 'ढ्रलोप' इत्यत्र सप्तमीश्रवणात्तस्मिन्निति परिभाषोपस्थित्यैव पूर्वस्येत्यर्थलाभादिष्टसिद्धौ सूत्रे पूर्वस्येति व्यर्थमेवेत्याशङ्कां समाधत्ते—पूर्वग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्य दीर्घार्थमिति। पूर्वग्रहणासत्त्वे 'अलुगुत्तरपदे' इत्यत उत्तरपदोपस्थितौ ढ्रलोपनिमित्तयोरुत्तरपदस्थढरेफयोः परयोः पूर्वस्याऽणो दीर्घ इत्यर्थे अजर्घा,लीढ इत्यादौ दीर्घानापत्तिः, उत्तरपदस्थढरेफपरकत्वाभावादुत्तरपदशब्दस्य समासचरमावयवे रूढत्वात्। नचाण्ग्रहणसामर्थ्यादेव तत्र दीर्घ इति वाच्यम्। आतृढ आवृढ इत्यादौ दीर्घव्यावृत्त्यर्थत्वेन तस्य चरितार्थत्वात्। नच सूत्रारम्भसामर्थ्यादेव दीर्घोऽस्त्विति चेन्न। नीरक्तं दूरक्तं लीढौकनमित्यादौ तस्य सावकाशत्वात्। नच ढलोपादेस्त्रैपादिकत्वेनासिद्धत्वाद्दीर्घाऽप्राप्त्या तत्र सूत्रसावकाशत्वप्रदर्शनमसङ्गतमिति वाच्यम्। सूत्रारम्भसामर्थ्यादेवासिद्धत्वस्य बाधेन दीर्घप्रवृत्तिसुलभतया सावकाशत्वप्रदर्शनस्य युक्तत्वात्। इत्यावश्यकेन पूर्वग्रहणेन सामर्थ्यादुत्तरपदानुपस्थितौ न कश्चिद्दोष इतिभावः॥

मनोरथ इति। मनस् रथ इति स्थितौ सकारस्य रुत्वे कृत्वे प्राप्तयोरुत्वलोपयोर्मध्ये कः स्यादिति सन्देहस्य जातत्वादाह—विप्रतिषेधे परं कार्य्यमिति। कर्म्मव्यतिहारे विद्यमानाद्विप्रतिपूर्वकात्सेधतेर्घञि निष्पन्नस्य विप्रतिषेधशब्दस्य परस्परविरोधरूपोऽर्थः। १ नित्यान्तरङ्गापवादाभिन्नोऽस्य सूत्रस्य विषय इत्यभिप्रेत्योक्तार्थकविप्रतिषेधशब्दस्य पर्य्यवसितमाह—२ तुल्यबलविरोध इति। तस्मिन् सति परं कार्य्यमिति तेन बोधिते देवो हसतीत्यादौ सावकाशस्य 'हशि

१ नित्यस्यावश्यकतयाऽन्तरङ्गस्य ज्ञापकत्वादिनाऽपवादस्य वचनप्रामाण्याद्बाधकत्वे निश्चिते तद्भिन्नोऽस्य विषय इत्याह नित्येत्यादि।
२ स्वांसे स्वांसे लब्धावकाशयोरेकत्र युगपत्प्राप्तिरूपः सः।

चे' त्यस्य पुनः रमते इत्यादौ लब्धावकाशेन 'रोरी'ति लोपेन परत्वाद्बाधे प्राप्ते 'पूर्वत्रासिद्धमि'त्यनेनोत्वदृष्ट्या लोपस्यासिद्धत्वबोधनात्सिद्धासिद्धयोरसमानबलवत्त्वेन विप्रतिषेधशास्त्राप्रवृत्त्या बाधकाभावादुत्वमेवेति तत्सिद्धिः, तदुक्तं, पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्येति । पूर्वत्रासिद्धमित्यत्र शास्त्रासिद्धत्वमुतकार्य्यासिद्धत्वमिति तत्रैव निरूपितमिति तत एवाऽवसेयमिति भावः ॥

ननु साकच्कयोरेतत्तदोः शब्दान्तरत्वेन तद्विषये सूत्राऽप्राप्त्याऽतिप्रसङ्गाभावादकोरितिव्यर्थमित्यभिप्रेत्य शङ्कते—अकोः किमिति। समाधत्ते—एषको रुद्र इति । अकोरित्यनेनैव सामर्थ्यात् (तन्मध्यपतित) न्यायस्य ज्ञापनादकज्विशिष्टयोस्तयो रेतत्तच्छब्दाभ्यां ग्रहणात्तत्र प्राप्तसुलोपव्यावृत्त्यर्थन्तदावश्यकमिति भावः ॥

ननु नञोऽभावोऽर्थस्तत्र प्रतियोगिनस्तच्छब्दस्य विशेषणत्वेन पूर्वपदार्थस्याभावरूपस्य प्राधान्यादुत्तरपदार्थस्योक्तविशेषणस्याप्राधान्येनोपसर्जनत्वात् 'त्यदादीनाम' इत्यस्याप्रवृत्त्या हल्ङ्यादिलोपस्य दुर्वारतया नञ्समासे तच्छब्दात्परस्य सोर्लोपव्यावृत्त्यर्थमनञ्समासग्रहणं व्यर्थमित्यभिप्रायकः सन्देहो जागर्त्ति—अनञ्समासे किमिति। एतद्ग्रहणेनैव सामर्थ्यान्नञ्समासे उत्तरपदार्थस्य प्राधान्यमिति ज्ञापनात्त्यदाद्यत्वस्याप्रवृत्त्या हल्ङ्यादिलोपाप्राप्तौ तच्छब्दात्परस्य सोर्लोपवारणार्थमनञ्समासग्रहणमावश्यकमित्थं मनसि निधाय सन्देहंव्यावर्त्तयति—असः शिव इति । नञ्तत्पुरुषे उत्तरपदार्थप्रधानत्वाकल्पनात् अतौ स्त इत्यत्र द्विवचनस्य, अत्वं भवसीत्यादौ पुरुषव्यवस्थायाश्च नोपपत्तिः । उक्तकल्पनादेव, उत्तरपदार्थप्रधानस्तत्पुरुष इति प्रवादः सङ्गच्छते इति भावः ॥ इति फक्किकारत्नमञ्जूषायां स्वादिसन्धिः। इति पञ्चसन्धिप्रकरणम् ॥

## अथाऽजन्तपुल्लिङ्गप्रकरणम् ।

अर्थवदिति । अत्र सूत्रेऽर्थवत्त्वम् एतत्संज्ञाफलभूतविभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वमिति नव्याः ।

प्राचीनास्तु अर्थवत्सूत्रे सर्वप्रसिद्धसाधारणं वृत्तिमत्त्वमेवार्थवत्त्वम् । अयमाशयः, वृत्तिज्ञानाधीनोपस्थितिप्रयोज्यबोधजनकत्वेन तात्पर्यविषयत्वम् । अत एव रामादिघटकरेफादेर्बोधाजननेऽपि रामा-

देश्च प्रातिपदिकत्वोपपत्तिः । ननु पर्युदासेनाऽर्थवत्त्वलाभेऽर्थवद्ग्रहणं व्यर्थमिति चेन्न । उत्तरार्थत्वात् । नचेहकरणं व्यर्थमिति वाच्यम् । इह किञ्चित्त्रपो इति न्यायेनाऽर्थवत्त्वेनैव सादृश्यग्रहणे प्रमाणान्वेषणप्रयासक्लेशनिवृत्तिरूपफलेन साफल्यात् । प्रत्ययेष्वतिव्याप्तिवारणं तु अप्रत्ययपदावृत्त्योत्तरसूत्रघटकतद्धितग्रहणबोधितया सुव्यक्तमेव । नचैतदेव गौरवं दूषणमिति वाच्यम् । नवीनोक्तार्थवत्त्वलक्षणपरिष्कारप्रकारप्रयासबाहुल्यापेक्षयाऽस्य लघुत्वात् । उत्तरसूत्रे एकार्थीभावपर्यायध्यधिकरणत्वमेवार्थवत्त्वमित्याहुः ।

ननु पाचक औपगव इत्यादौ प्रत्ययान्तत्वेन प्रत्ययान्तपर्युदासेन निषेधात्पूर्वसूत्रेण प्रातिपदिकत्वाप्रसक्तौ तदर्थमुत्तरसूत्रे कृत्तद्धितोर्ग्रहणावश्यकत्वेऽपि समासे राजपुरुष इत्यादौ १प्रत्ययग्रहणपरिभाषया ङसन्तस्यैव सन्तस्यैव च प्रत्ययान्ततदादित्वबोधनात्समुदायस्य प्रत्ययान्ततदादिभिन्नत्वेन पूर्वेणैव तत्सिद्धौ समासग्रहणं व्यर्थम् । नच राज्ञः कुमारी राजकुमारीत्यादावन्तरङ्गत्वेन हल्ङ्यादिलोपेऽनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावादर्थादतदादावपि तदादित्वारोपाद्राजन् ङस् कुमारीत्यस्य प्रत्ययान्ततदादित्वात्पूर्वसूत्रेण प्रातिपदिकत्वासिद्ध्या तदर्थं समासग्रहणं विध्यर्थमिति वाच्यम् ।२ (अन्तरङ्गानपि विधीन्व-

---

१ प्रत्ययग्रहणपरिभाषयेति । प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणमिति परिभाषास्वरूपम् । यस्मात्प्रत्ययविधिरितिसूत्रे यस्मात्प्रत्ययविधिस्तदादीत्येको योगः प्रत्यये इत्यपरो योगः । गृह्यमाणे उपतिष्ठते इतिशेषः । तथाच प्रत्यये गृह्यमाणे यस्मात्प्रत्ययविधिस्तदादीत्युपतिष्ठते इति तदाद्यन्तसिद्धिः । तदन्तांशसिद्धिस्तु विशेष्यान्तरासत्त्वे शब्दरूपविशेष्यमादाय येन विधिरित्यनेनैव । अत एवोक्तपरिभाषा लभ्यते इति बोध्यम् ।

२ अन्तरङ्गानपीति । प्रत्ययोत्तरपदयोश्चेति सूत्रमस्यां ज्ञापकं तथा हि, त्वत्कृतमित्यादौ लुगपेक्षयाऽन्तरङ्गत्वाद्विभक्तिनिमित्तकेन त्वमावेकवचने इत्यनेनैव त्वादेशसिद्धावुत्तरप्रत्यये परे त्वादेशविधानार्थमुक्तसूत्रं व्यर्थं सत्परिभाषां ज्ञापयति । तव पुत्रस्त्वत्पुत्र इत्यादौ तवममादिबाधनार्थं ज्ञापकीभूतोक्तसूत्रस्य चारितार्थ्ये तु अत्रानुवृत्तस्य मपर्य-

हिरङ्गो लुग्बाधते) इति परिभाषया श्रूयमाणलुपा समासे राजन् ङस् कुमारी सु इत्यस्याप्रत्ययान्ततदादित्वेन पूर्वसूत्रेणैव प्रातिपदिकत्वसिद्धौ समासग्रहणवैयर्थ्यस्य तादवस्थ्यात्। नच शक्तिलक्षणाव्यञ्जनाऽन्यतमत्वेनार्थबोधजनकत्वमर्थवत्त्वमिति स्वीकाराच्छशशृङ्गमित्यादौ तदभावात्प्रातिपदिकत्वाप्राप्तौ तदर्थं समासग्रहणं विध्यर्थमिति वाच्यम्। तत्रापि बौद्धार्थे शक्तिस्वीकारात्संज्ञासिद्धेर्व्यर्थमेव समासग्रहणमित्यत आह—पूर्वसूत्रेणैव सिद्धे समासग्रहणं नियमार्थमिति। पूर्वभागः पदमिति। स्वातन्त्र्येण प्रयोगार्हार्थवत्पदमिति तदर्थः। तेन गवित्ययमाहेत्याद्यनुकरणशब्दे गो इत्यस्याशुबन्तत्वेऽपि स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वरूपपदत्वसत्त्वान्नियमफलोपपत्तिः। इति शब्दपरत्वाभावे अपिशब्दबलेन तत्परत्वे च 'अनुकरणञ्चानिति परमि' त्यनेनानुकरणत्वबोधनात्तस्यापि स्वातन्त्र्येण प्रयोगार्हत्वात्। पूर्वभागः पदमिति उत्तरस्तु प्रत्ययो नेत्यस्याप्युपलक्षणम्। तेन जन्मवानित्यादौ प्रातिपदिकत्वसिद्धिः, अन्यथा 'स्वादिष्वि' त्यनेन पूर्वभागस्य पदत्वात्सा न स्यान्नियमेन तद्व्यावृत्तेः। नच तत्र तद्धितग्रहणसामर्थ्यादेव प्रातिपदिकत्वोपपत्तिरिति वाच्यम्। तस्य भानव इत्यादौ चारितार्थ्यात् तत्र पूर्वभागस्य भत्वं न तु पदत्वम्। नचैवमयमियानित्यादिसमुदायस्य प्रातिपदिकत्वं स्यादेव पूर्वभागस्य पदत्वेप्युत्तरस्य प्रत्ययत्वादनेन नियमेन वारयितुमशक्यत्वादिति वाच्यम्। उत्तरस्तु प्रत्ययोनेत्यत्र तद्धिहितप्रत्ययो नेतिव्याख्यानेनादोषादिति स्पष्टं मनोरमायाम्। वस्तुतस्तु पूर्व इत्यनेनाक्षिप्तः परोपि स्वातन्त्र्येण प्रयोगार्हार्थवानेव गृह्यते तेन पुत्रकाम्यादौ न दोष इति भावः। ननु ज्ञापकस्य स्वांशे चारितार्थ्यं फलमन्यत्रेत्यस्य प्रसिद्धत्वात्समासग्रहणस्य ज्ञापकत्वं न स्यादुक्तज्ञापनोत्तरं तस्य स्वांशे चारिताथ्याभावादिति चेन्न। (यावता विना नोपपत्तिस्तावत्सर्वं ज्ञापयती)ति न्यायेन पूर्वसूत्रे पूर्वभागपदघटितसंघातातिरिक्तार्थवत एव ग्रहणमिति संकोचेन समासे वाक्ये च पूर्वसूत्रेण प्रातिपदिकसंज्ञाया अप्राप्तौ समासे संज्ञासिद्धये समासग्रहणस्य स्वांशे चारितार्थ्यात्। यत्र संघातेत्या-

---

न्तग्रहणस्यैव ज्ञापकत्वं बोध्यम्। उत्सर्गसमानदेशा अपवादा इति न्यायेन मपर्यन्तस्यैवादेशसिद्धौ व्यर्था सती मपर्यन्तानुवृत्तिः परिभाषाज्ञापिकेति भावः।

दिङ्मूलोक्तो न नियमाकारः किन्तु लाजात्यप्रदर्शनमात्रम् । तदाकारस्तु व्यर्थीभूतशास्त्रीयोद्देश्यतावच्छेदकव्यापकस्वैयर्थ्यप्रयोजकशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन वैयर्थ्यप्रयोजकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने संकोच इत्येव तथा च प्रकृते. व्यर्थीभूतसमासग्रहणरूपशास्त्रीयोद्देश्यतावच्छेदकार्थवत्त्वव्याप्यं यद्रूपं पूर्वभागपदघटितसंघातत्वं तद्रूपातिरिक्तत्वेन वैयर्थ्यप्रयोजकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नेऽर्थवति संकोच इति दिक्।

ननु रमा गौरीत्यादौ १( प्रातिपदिकग्रहण )इति परिभाषयैव प्रातिपदिकपदेन ङ्याबन्तस्यापि ग्रहणात्स्वादिसिद्धौ 'ङ्याप्प्रातिपदिकादि'ति सूत्रे ङ्याब्ग्रहणं व्यर्थमित्याशयेन शङ्कते–प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापीत्यादि । इत्थं हि समाधातुरभिप्रायः, उक्तसूत्रे ङ्याब्ग्रहणाभावे, आर्य्यशब्दाट्टापः प्रागन्तरङ्गत्वात्कनि ततष्टापि आर्य्यकेत्यवस्थायामात्स्थानिकाकाराभावात् 'उदीचामि'त्यस्याप्राप्तौ 'प्रत्ययस्थे'ति नित्यमित्त्वे आर्य्यिकेत्येकमेव रूपम्। एवं लोहितशब्दान्ङीपः प्रागन्तरङ्गत्वात्कनि ततष्टापि लोहितकेत्यवस्थायां तोपधत्वाभावेन 'वर्णादनुदात्तात्तोपधात्तो न' इत्यस्याप्राप्तौ प्रत्ययस्थेति नित्यमित्त्वे लोहितिकेत्येकमेव रूपन्तु आर्य्यिका आर्य्यका लोहिनिका लोहितिकेति ङ्याब्ग्रहणमावश्यकम्, कृते ङ्याब्ग्रहणे तु तत्सामर्थ्यात्ताभ्यां प्राङ् न तद्धितोत्पत्तिरित्यर्थज्ञापनेन ङ्याबन्तादेव तद्धितोत्पत्त्योक्तरूपसिद्धिरिति । सूत्रे ङ्याब्ग्रहणं स्त्रीप्रत्ययमात्रोपलक्षणमर्थात्स्त्रीप्रत्ययमात्रं तद्धितोत्पत्तेः प्राग्भवतीति फलितम् तेन ब्रह्मबन्धूतरा युवतितरेत्यादेः सिद्धिः, अन्यथा स्त्रीप्रत्ययात्प्राक् तद्धितोत्पत्त्यावुक्तप्रयोगोपपत्तिर्न स्यात् । २अत्र वयोवाचके वैकल्पिकजातित्वस्य स्वीकाराज्जातेश्चेति निषेधेन न पुंवत्त्वम् । तद्धितोऽपि व्याख्यानात्समासान्ततिप्रत्ययाद्यतिरिक्त एव गृह्यते तेन युवतिः, बहुगोमत्केति सिद्धम् । अन्यथा तिप्रत्ययात्कपश्च प्राङ्ङीपि यूनीतिः बहुगोमतिकेति स्यादिति प्राञ्चः । नागेशस्तु प्रत्यन्तस्वार्थिकानां सुबुत्पत्तेःपूर्वमेवोत्पत्तिमङ्गीकृत्य लोहितास्लिङ्गबाधनस्वेति वार्त्तिकेन लोहिनिका लोहि-

१ प्रातिपदिकग्रहणेति । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति स्वरूपम् ।

२ युवतितरेत्यत्रेत्यर्थः ।

तिक्तेतिरूपद्वयमप्रतिपाद्य आर्ग्यिकेत्येकमेव रूपमुक्तवान्। नागेशोक्ति-रियमयुक्ता युक्ता वेति स्वयमूहनीया। वस्तुतस्तु स्वार्थद्रव्यलिङ्ग-संख्याकारकेति पञ्चविधप्रातिपदिकार्थप्रयुक्तकार्य्याणां क्रमनियमः प्रथमं शब्दप्रवृत्तिनिमित्तत्वेन जातिबोधः ततो धर्म्मित्वेन प्रधानत्वा-ल्लिङ्गादिनिरपेक्षितत्वाच्च व्यक्तिबोधः ततः स्वमात्रापेक्षत्वाल्लिङ्गबोधः, ततो विजातीयक्रियापेक्षया कारकापेक्षया सजातीयपदार्थापेक्ष-संख्यायाः प्रथममुपस्थितत्वेन संख्याबोधः ततः कारकरूपविभक्त्य-र्थापेक्षया कारकबोधः ततो लिङ्गकार्य्योत्तरमेव तद्धितोत्पत्तिरिति नोक्तप्रयोगाणामनुपपत्तिरिति केचित्। उदीचामित्यारम्भसामर्थ्या-द्योक्तफलसिद्धिः। आर्य्येव प्रतिकृतेत्यर्थे आर्य्यिकेत्यत्र 'इवेति प्रति-कृतावि'ति कनः प्रागुष्टापि तत्र सूत्रस्य चारितार्थ्यादित्यलम्॥

ननु रामशब्दात्सौ तस्य रुत्वे राम रु इतिस्थितौ 'उपदेशेऽजनुना-सिक इदि'त्येतद्दृष्ट्या रुत्वस्यासिद्धत्वादुकारस्येत्संज्ञालोपयोर-भावेनं स्थानिवत्त्वस्य त्रिपाद्यामप्रवृत्या रेफान्तस्य 'सुप्तिङन्तमि'ति पदत्वाभावेन च विसर्गो न स्यादिति चेन्न। 'न मुने' इत्यत्र नेतियो-गं विभज्यासिद्धश्चेति व्याख्यानाद्रुत्वस्योक्तसूत्रदृष्ट्याऽसिद्धत्वाभावा-दुकारस्येत्वे लोपे च रेफस्य स्थानिवत्त्वेन विसर्गस्य सुलभत्वा-दित्याशयेनाह—रुत्वविसर्गाविति। 'ससजुषोरुरि'ति रुत्वे 'खरवसा-नयोरि'ति विसर्गे च राम इति सिद्धमिति भावः॥

ननु 'अतो गुणे' इत्यस्य सकलदीर्घबाधकत्वेन रामा इत्यादौ 'प्रथमयोरि'ति पूर्वसवर्णदीर्घो न स्यादित्याशङ्क्यापवादविषयबाध्य-विशेषचिन्तापक्षमूलन्यायेन समाधत्ते—पुरस्तादिति। १(पुरस्ता-दपवादा अनन्तरान्विधीन्बाधन्ते नोत्तराणि)ति न्यायाकारः। प्राग्व-र्त्तिनोऽपवादा अनन्तरान् सन्निकृष्टान् विधीनेव बाधन्ते नोत्तरान् अनन्तरापेक्षया व्यवहितानिति तदर्थः। तथाच 'अतोगुणे' इति सूत्रं सवर्णदीर्घमेव बाधते नतु पूर्वसवर्णदीर्घमिति न दोष इतिभावः, अयं न्यायो 'नादिची'तीज्ग्रहणेन ज्ञापितः, तथाहि रामानित्यादौ

---

१ अवश्यं स्वपरस्मिन्बाधनीये प्रथमोपस्थितानन्तरबाधेन चारि-तार्थ्ये पश्चादुपस्थितस्य ततः परस्य बाधे मानाभावः, आकाँक्षाया निवृत्तेर्विप्रतिषेधशास्त्रबाधे मानाभावाच्चेति परिभाषायां बीजम्।

निषेधाभावाय सूत्रे तद्ग्रहणम् पररूपेण दीर्घबाधे हि तद्वैयर्थ्यं स्पष्टमेवेति दिक् ॥

ननु (येन विना यदनुपपन्नं तत्तेनाक्षिप्यते) यथा पीनोऽयं देवदत्तो दिवा न भुङ्क्ते इत्यादौ पीनत्वानुपपत्त्या रात्रिभोजनस्याक्षेपस्तद्वदङ्गं विना सम्बुद्ध्यनुपपत्त्या तया तस्याक्षेपस्तथाच (येन यस्याक्षेपस्तस्य तत्रैवान्वयः) इति न्यायादङ्गस्य सम्बुद्धिविशेषणत्वमेव न्याय्यम् । १(श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्)इतिन्यायात् एङ्ह्रस्वयोर्हल्विशेषणत्वमेव न्याय्यम् । तथाहि अङ्गात्परा या सम्बुद्धिस्तदवयवो यो हल् सच लुप्यते एङ्ह्रस्वाभ्यां परीभूतश्चेदिति सूत्रार्थः समुचितस्तद्विहायाऽन्यथा सूत्रार्थवर्णनमनुचितमित्याह—सम्बुद्ध्याक्षिप्तस्येति । अयमाशयः, तथा सति हे कतरदित्यत्राऽङ्गात्परीभूताया अदितिसम्बुद्धेरवयवस्य ह्रस्वात्परस्य हलस्तकाररूपस्य लोप आपद्येत, अतो लक्ष्यानुरोधात् (श्रुतानुमितयोःश्रुतसम्बन्धो बलीयान्) इतिन्यायं तिरस्कृत्य, एङ्ह्रस्वयोरनुमितस्याऽप्यङ्गस्य विशेषणत्वमभ्युपेयम् । एवञ्च ह्रस्वान्ताङ्गात्परत्वाभावेन न तत्र सम्बुद्धिलोपः । नचाङ्गात्परा या सम्बुद्धिस्तदवयवो यो हल् सच लुप्यते साच सम्बुद्धिरेङ्ह्रस्वाभ्यां परीभूता चेदित्यर्थे अदिति सम्बुद्धेर्ह्रस्वात्परत्वाभावेनैव तत्रत्यातिव्याप्तिदोषस्याप्रवृत्तिसम्भवे एङ्ह्रस्वयोरनुमिताङ्गविशेषणत्वे किम्फलमित्यत आह—हे कुलेति । उक्तार्थस्वीकारेऽत्राव्याप्तिदोषापत्तिः, तथाहि, अत्र 'स्वमोर्नपुंसकादि'त्यतः प्राक् परत्वात् 'अतोऽम्'इति सोरमादेशे 'अमि पूर्वः' इति पूर्वरूपत्वे उभयत आश्रयणेऽन्तादिवद्भावाऽप्रवृत्त्या तदभ्युपगमेऽपि ह्रस्वसम्बुद्ध्योः पौर्वापर्यव्यवहारासम्भवेन तादृरूप्यस्याऽतिदेष्टुमशक्यत्वेन च सम्बुद्धेः ह्रस्वान्ताङ्गात्परत्वाभावात्तल्लोपो न स्यात् । अतोऽन्याक्षिप्तस्याऽप्यन्यत्रान्वयः, अर्थादेङ्ह्रस्वयोरङ्गविशेषणत्वमङ्गीकार्यं तथा सति मूलोक्तार्थसम्पन्नत्वेन लोपोपपत्तिः सुलभा । नच २(एकदेशविकृतमनन्यवत्) इति न्यायेन

---

१ श्रुतानुमितयोरिति । श्रुतेनैव सम्बन्धो नानुमितेन प्रकरणादिप्राप्तेनेत्यर्थः । प्रकरणादितः श्रुते र्बलवत्त्वात् इति भावः ।

२ एकदेशविकृतमिति । प्राग्दीव्यत इति सूत्रभाष्योक्तिरेवास्या ज्ञापिका । तत्र हि दीव्यविशब्दैकदेशदीव्यच्छब्दानुकरणमिदमित्य

मकारे सम्बुद्धित्वानयनात्तस्य कुलेत्यकारान्ताङ्गात्परत्वेन न लोपाऽनुपपत्तिरिति वाच्यम्। अर्द्धविकारेऽर्द्धाधिकविकारे च तत्प्रवृत्त्यनङ्गीकारात्। अक्तपरिमाणनिष्ठत्वादेकवचनसंज्ञासम्बुद्धिसंज्ञयोरुक्तन्यायेन लब्धुमशक्यत्वाच्च। नच मकारस्य स्थानिवत्त्वेन तत्र सम्बुद्धित्वं सुलभमिति वाच्यम्। तस्यादेशत्वाभावात्। नच सिद्धान्ते, सम्बुद्धित्वस्य सकारमात्रनिष्ठत्वेन स्थानिभूताल्धर्मत्वादनल्विधाविति निषेधप्रवृत्त्या स्थानिवत्त्वाभावेनाऽमः सम्बुद्धित्वाभावेन कथम्मकारे सम्बुद्ध्यवयवत्वमिति वाच्यम्। सुप्संज्ञायाः सुशब्दवृत्तित्वादेकवचनसंज्ञायास्तदुपस्थाप्ये जायमानत्वेन विशिष्टे सत्त्वात्सम्बुद्धिसंज्ञायामित्संज्ञोकारविशिष्टस्यैवोद्देश्यत्वेन तस्याऽल्विधित्वाभावात्स्थानिवत्त्वेनाऽमि सम्बुद्धित्वलाभेन मकारे तदवयवत्वस्याक्षतत्वादिति प्राञ्चः।

नव्यास्तु—सम्बुद्धिः प्रत्यय, इति १(प्रत्ययग्रहण) परिभाषया तदादिपदोपस्थितिः सचेह योग्यतया पञ्चम्यन्तस्तस्विशेष्यभूतमादाय तत्र विशेषणीभूताभ्यामेङ्ह्रस्वाभ्यां 'येन विधिरि'त्यनेन तदन्तविधौ एङन्ततदादे ह्रस्वान्ततदादेश्च परस्य सम्बुद्धेरवयवस्य हलो लोप इत्यर्थे न कुत्राप्यव्याप्त्यतिव्याप्तिदोष इति वदन्ति। खण्डयन्ति च प्राचीनाभिमतमङ्गाक्षेपं, तथाहि, पीनोऽयं देवदत्तो दिवा न भुङ्क्ते इत्यादौ दिवा भोजनाभावादनुपपन्नस्य पीनत्वस्योपपत्तये यथा रात्रिभोजनाक्षेप उपयोगी न तथा प्रकृतेऽङ्गाक्षेपः सम्बुद्धेरिति फलाभावाच्च २तया तस्याक्षेपः समुचितः। किञ्च सम्बुद्ध्युत्पत्तावङ्गस्यापेक्षितत्वेऽपि तज्ज्ञाने तदनपेक्षितत्वेन शाब्दे तदाक्षेपे मानाभावः। अङ्गाक्षेपाभावादेव 'अङ्गस्ये'ति सूत्रेऽङ्गस्थाने प्रत्यय इत्यधिकारः कार्य

---

भिधाय किमर्थं विकृत निर्देश एतदेव ज्ञापयत्याचार्यो भवत्येषा परिभाषा एकदेशविकृतमनन्यवदित्युक्तमिति। लोकन्यायसिद्धोऽयं न्यायः यथा छिन्नपुच्छे शुनि श्वत्वव्यवहारस्तथा विकृतावयवेष्वविकृतत्वव्यवहारः। एकदेशविकृतं यत्तद् अन्यवन्न भवतीत्यर्थः।

१ प्रत्ययग्रहणेति। प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणमिति परिभाषास्वरूपम्।

२ सम्बुद्ध्येत्यर्थः।

इति पक्षे प्राकरोदित्यादावुपसर्गात्पूर्वमडादिः स्यादिति शङ्कायां प्रत्ययग्रहणपरिभाषया समाहितं भाष्यकृता नत्वङ्गाक्षेपेणेति दिक् ॥

ननु गुणसम्बुद्धिलोपयोः प्राप्तयोः परनिमित्तापेक्षा(द्) गुणात्प्रागन्तरङ्गत्वेन सम्बुद्धिलोपे ततः प्रत्ययलक्षणेन सम्बुद्धिपरत्वाद्गुणे रूपसिद्धिः। सेप्रभृतीनामनभिधानान्न दोषः, सत्यभिधाने एग्रहणेनैव सिद्धौ प्रत्याहाराश्रयणं व्यर्थमित्यभिप्रायेण शंकते—एङ्ग्रहणं किमिति। समाधत्ते— हे हरे हे विष्णो इति। इत्थमाशयः, अत्र हि, परत्वान्नित्यत्वाच्चेत्यत्र चकारेणानवकाशत्वसंग्रहः तथाच अनवकाशत्वात्पूर्वं गुणे कृते सम्बुद्धिलोपो न स्यादत एङ्ग्रहणम्। नचैङ्ग्रहणसत्त्वे १(सन्निपात)परिभाषया कथं लोप इति वाच्यम्। गुणात्सम्बुद्धेरिति वक्तव्ये एङ्ह्रस्वग्रहणसामर्थ्यादुक्तपरिभाषाया अप्रवृत्तिकल्पनात्। अत एव हे लक्ष्मि इत्यादौ सम्बुद्धिलोपः मूलोक्तं परत्वादिति समाधानमभ्युच्चयः ततोऽपि बलवतो नित्यत्वादिति समाधानस्य सत्वात्। इदमपि समाधानमयुक्तम् अन्तरङ्गत्वेन कृतायाश्शङ्काया नित्यत्वेन समाधानस्यासंगतेस्ततोऽप्यन्तरङ्गस्यैव २बलीयस्त्वादित्यलम् ॥

ननु ३पर्य्याणद्धमित्यत्रोपसर्गादसमासेऽपीति णत्वे सिद्धे सूत्रे आङ्ग्रहणं व्यर्थमित्यत आह—पदव्यवायेऽपीति। नुम्ग्रहणमनुस्वारोपलक्षणार्थमिति। तेन तृंहणं बृंहणमित्यादौ णत्वसिद्धिः। प्रेन्वनमित्यादौ न णत्वम्। अनुस्वाराव्यवायात्तदप्राप्तेः नुम्ग्रहणस्यानुस्वारोपलक्षकत्वे हि तद्व्यवधाने एव णत्वं यथा स्यान्न तु तदव्यवधान इति भावः। अयोगवाहानामिति। अविद्यमानो वर्णसमाम्नाये योगो येषान्तेऽयोगाः। वाहयन्ति प्रयोगं निर्वाहयन्ति ये ते वाहाः अयोगाश्च ते वाहा अयोगवाहाः अनुपदिष्टत्वे उपदिष्टैरगृहीतत्वे च सति श्रूयमाणा इत्यर्थः, तेचानुस्वारविसर्गजिह्वामूलीयोपध्मानीययमास्तेषामट्सूपदेशादुरः केणेत्यादौ विसर्गव्यवधाने णत्वसिद्धिः।

---

१ सन्निपातेति। सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति परिभाषास्वरूपम्।

२ तदुक्तं पूर्वपरानित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीय इति।

३ पर्य्याणद्धमिति। परि-आङ् पूर्वात् णह धातोः क्तप्रत्यये रूपम्।

भवामि-भविष्यामीति । भूधातोर्लटि लृटि च रूपम् । तदादि-ग्रहणाभावेऽत्रातो दीर्घो यञीति दीर्घो न स्यात् । भवतेश्शब्मिपोर्वि-धानेन तस्मिन् भू इत्यस्यैवाङ्गत्वात्तस्य चादन्तत्वाभावात्सूत्राप्राप्तेः । नच सूत्रारम्भसामर्थ्यात्तत्र दीर्घ इति वाच्यम् आमि चिकीर्षामीत्यादौ तस्य सावकाशत्वादिति तत्र दीर्घाय तदादिग्रहणमावश्यकम् एवं करोमीत्यादौ गुणार्थमपि तदादिग्रहणमिति भावः ।

विधिरिति किम् । १ स्त्री इयतीति । अयम्भावः, इदम् शब्दा-द्वतुपि तस्य घत्वे 'आयनेयी'त्यनेन तस्यैयादेशे इयदिति 'इदं किमो रीश्की'ति इदम ईशादेशे तस्य यस्येति लोपे उगित्वान्ङीपि इयतीति सिद्धम् तस्य स्त्रीशब्दसमभिव्याहारे स्त्री इयतीत्यवस्थायां विधि-ग्रहणाभावे यस्मात्प्रत्ययः परस्तस्मिन्तदङ्गसंज्ञमित्यर्थे इयत्प्रत्ययस्य स्त्रीशब्दात्परत्वेन तस्मिन् स्त्रीशब्दस्याङ्गसंज्ञायां स्त्रिया इत्यनेनेयङा-पत्तिः कृते विधिग्रहणे इयत् प्रत्यये परे स्त्रीशब्दस्य नाङ्गत्वं स्त्री-शब्दादियतोऽविधानात् अतो विधिग्रहणं कर्त्तव्यम् । ननु कृतेऽपि विधिग्रहणे स्त्रीरुपस्याऽङ्गस्येयङ् स्यादजादौ प्रत्य इत्यर्थे स्त्रीशब्दस्य सुनिरूपिताऽङ्गत्वविशिष्टत्वादुक्तापत्तेस्तादवस्थ्यमेवेति वाच्यम् । प्रत्यासत्त्याऽजादिप्रत्ययनिरूपिताऽङ्गत्वविशिष्टस्य स्त्रीशब्दस्येयङि-त्यर्थेनोक्तापत्तेरयोगात् । नच यस्येति लोपस्याभीयत्वेनासिद्ध-त्वान्न तत्रेयङापत्तिरूपदोष इति वाच्यम् । 'यस्येति चे'ति लोपापेक्षया 'स्त्रिया'इत्यस्याधिकस्य स्त्रीशब्दस्यापेक्षत्वात्समानाश्र-यत्वाभावेनासिद्धत्वाप्राप्तेः । समानाश्रयत्वञ्च असिद्धत्वाश्रयशास्त्रस-म्बन्धिनिमित्तसमुदायान्यूनानतिरिक्ताश्रयकत्वम् । नच 'वाम्शसो' रित्युत्तरसूत्रसाहचर्य्यात्स्त्रिया इति सूत्रस्यापि अजादिसुप्येव प्रवृत्त्या न दोष इति वाच्यम् । सूत्राऽन्तरसाहचर्य्यस्य भाष्ये काप्य-दृष्टत्वेन दोषस्य तादवस्थ्यात् । २ किञ्च भवक्रीत्यादौ 'अतो दीर्घो यञी'ति दीर्घापत्तिर्दुर्वारा अमिपरे भशब्दस्याङ्गसंज्ञत्वात् । नच तत्र 'भूसुवोस्तिङी'त्यतस्तिङोऽनुवृत्त्याऽदन्ताङ्गस्य दीर्घः स्यात्तिङि

१ स्त्रीति । स्यायते ड्रूटि डित्त्वाट्टिलोपे टित्वान्ङीपि च रूपम् ।

२ सूत्रान्तरसाहचर्यग्रहणस्य भाष्यादृष्टत्वेऽपि यथा कथञ्चित्त-दभ्युपगमे दोषाभावाद्विधिग्रहणमाकिञ्चित्करमित्यभिप्रेत्य दोषान्तर-माह किञ्चेति ।

सार्वधातुक इत्यर्थे श्नमः सार्वधातुकत्वेऽपि तिङ्त्वाभावाद्दीर्घाऽप्राप्त्या न कश्चिद्दोष इति वाच्यम्। [1]तथा सति 'ज्ञाजनोर्जे'तिसूत्रस्थभाष्यविरोधस्य दुर्वारत्वात्। तत्र हि जविधानेऽपि अतो दीर्घो यञीति दीर्घेण जानातीत्यादेरुपपत्तौ दीर्घविधानं व्यर्थं सज्ज्ञापयति [2](अङ्गवृत्तौ पुनर्वृत्तावविधिरि) तीत्युक्तम्। तत्र तिङोऽनुवृत्तौ स्पष्ट एव भाष्यविरोधः। किञ्च भनक्तीत्यादौ दोषव्यावृत्तावपि, अभनगित्यत्र दोषो दुर्वार एव अकचि परेऽङ्गसंज्ञायाम् 'अल्लोपोऽन' इति लोपप्रवृत्तेः। नचाल्लोपोऽनो नाके इति न्यासकरणेन दोषाभावाद्विधिग्रहणं विफलमेवेति वाच्यम्। वारि औ इत्यत्रेकोऽचीति नुम्वारणार्थत्वेन तस्य साफल्यात्। तथाहि, अशब्दस्य औ विक्तौ वृद्धिरेचीति वृद्धौ, औ इति रूपम् तस्य वारिशब्दसमभिव्याहारे . वारि औ इत्यत्र परादिवद्भावेन तत्र सुप्त्वात् प्रत्ययत्वाच्च तस्मिन्वारीत्यस्याऽङ्गसंज्ञायां नुमः प्राप्तिरिति। नचेकोऽचीत्यत्र सुपः सम्बन्धेनैव सिद्धौ विभक्तिग्रहणस्याऽनतिदिष्टविभक्तिग्रहणार्थत्वेन प्रकृतेऽतथात्वान्नदोष इति वाच्यम्। सर्वत्रानेकानेककल्पनापेक्षया विधिग्रहणकरणस्यैव लघीयस्त्वादिति दिक्॥

प्रत्यये किम्। प्रत्ययविशिष्टस्य ततोऽप्यधिकस्य वा मा भूदिति। अयम्भावः प्रत्ययग्रहणाभावे तद्विशिष्टस्याऽङ्गत्वेन रामाभ्यामित्यादौ दीर्घानापत्तिस्तस्याङ्गत्वेऽप्यदन्तत्वाभावेन यञादिसुप्-

---

१ उक्तदीर्घविधायके तिङः सम्बन्धे सतीत्यर्थः।

२ अङ्गवृत्तावविति। अङ्गे अङ्गाधिकारे वृत्तं निष्पन्नं यत्कार्यं तस्मिन्सति पुनरन्यस्याऽऽङ्गकार्यस्य वृत्तौ प्रवृत्तावविधानं भवति इति तदर्थः। एषा च परिभाषा जादेशे दीर्घविधानेन ज्ञापिता, तत्प्रकारश्च मूल एव स्पष्टीकृतः। ज्यादादीयस इत्याद्विधानेनापि ज्ञापिता तत्प्रकारश्चेत्थम्। ज्याद्दीयस इत्येवास्तु सूत्रम् ईयस ईकारलोपेनाकृत्सार्व इति दीर्घेण च सिद्धे व्यर्थमाद्विधानं परिभाषाज्ञापकम्। ज्यायश्शब्दाण्ण्यन्तात्क्विपि णिलोपयलोपयोः पुनस्तस्माण्णिजन्तात्क्विपि पुकि निष्पन्नात् ज्यापशब्दादीयसुनि ज्यापायानिति सिद्ध्यर्थमाद्विधानस्य चारितार्थ्यमिति नाभिधेयम्। ज्ञापकपरभाष्यप्रामाण्यादेतदनभिधानात्। णिलोपस्य स्थानिवत्त्वादातोऽप्राप्तेश्चेति बोध्यम्।

निमित्तपरकत्वाभावेन च सूत्राऽप्राप्तेः। नचाङ्गावयवस्यातो दीर्घः इत्यर्थे सूत्राप्राप्त्या दीर्घसौलभ्येन न कश्चिदुक्तस्थलीयो दोष इति वाच्यम्। राज्ञः पुरुषो राजपुरुष इत्यादौ 'न लुमते'ति निषेधेन पूर्वपदे प्रत्ययलक्षणेनाऽन्तर्वर्त्तिविभक्त्या पदत्वात् 'न लोप' सूत्रेण पदान्तनकारस्यैव लोपविधानेन नलोपाऽनुपपत्तेः अतः प्रत्ययग्रहणमावश्यकं सति च तस्मिन् न तत्रोक्तदोषः, अङ्गाक्षिप्तप्रत्यये परतः कार्ये कर्त्तव्य एवोक्तनिषेधप्रवृत्ताविह विशिष्टे पदत्वस्य कर्त्तव्यत्वेनाऽतथात्वान्निषेधाप्रवृत्त्योक्तरीत्या पदत्वस्य सुलभत्वात्। नच १न लुमता तस्मिन्नि'ति न्यासकरणेनैव दोषवारणसम्भवे तदर्थं प्रत्ययग्रहणकरणन्निष्फलमेवेति वाच्यम्। 'उरदि'त्येतद्विहिताऽत्वस्य प्रत्ययनिमित्तकत्वाभावेन 'अचः परस्मिन्नि'त्यस्याऽप्रवृत्त्याऽकारे सम्प्रसारणत्वालाभेन 'न सम्प्रसारणे सम्प्रसारणमि'ति निषेधाप्रवृत्तौ वव्रश्चेत्यत्र वकारस्य सम्प्रसारणापत्तेः। कृते प्रत्ययग्रहणे तु उरदत्वस्याऽङ्गाक्षिप्तप्रत्ययनिमित्तकत्वेन स्थानिवत्त्वेनाऽकारे सम्प्रसारणत्वान्न सम्प्रसारण इति निषेधप्रवृत्ते र्न दोषः। नच सम्प्रसारणपदस्य तत्स्थानिके लाक्षणिकत्वान्न दोष इति वाच्यम्। देवदत्त ओदनमपाक्षीदित्यादौ देवदत्तादिशब्दोत्तरसुपं निमित्तीकृत्य लुङपर्य्यन्तस्याङ्गत्वात्तस्य लुङपरत्वेन देवात्पूर्वमड्डापत्तेः, अङ्गसंज्ञायाः प्रत्ययनिमित्तकत्वाभावेन लुङादिनिरूपिताङ्गस्येत्यर्थस्य दुर्लभत्वादिति प्रत्ययग्रहणमावश्यकमेवेति दिक्॥

सन्निपातेति। ( सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य) इति परिभाषास्वरूपम्। सन्निपातः संश्लेषः लक्षणं निमित्तं यस्य स सन्निपातलक्षणो विधिः सन्निपातं यो विहन्ति स तद्विघातस्तस्यानिमित्तम्भवतीत्यर्थः। सन्निपातं निमित्तीकृत्य जायमानो विधिः स्वातिरिक्तसम्बन्धविघातके शास्त्रे निमित्तं नेति फलितम्। उपजीव्यविरोधो न न्याय्य इत्येतन्मूलिकेयं परिभाषा। यथा पितुरुत्पन्नः पुत्रः पितरं न हन्ति, तद्वदुपजीवकविधिः स्वोपजीव्यविधेर्विघातको न भवति, एवञ्च प्रकृते रामायेत्यत्राऽकारान्तसन्निपातेन जायमानो यादेशो दीर्घे निमित्तीभूयाऽकारान्तसन्निपातविघातको न स्यात्परिभाषाविरोधादित्थं

१ न लुमता तस्मिन्निति। लुमताशब्देन लुप्ते तस्मिन् ( प्रत्यये ) परतो यत्पूर्वस्य कार्यं तन्नेति तदर्थः।

दीर्घाभावमाशङ्क्य तदनित्यत्वेन समाधत्ते—कष्टायेति । न च रामायेत्यत्र यञादित्वसापेक्षदीर्घादेशस्य बहिरङ्गत्वादसिद्धत्वेन सुन्निपातविघाताभावादुक्तपरिभाषाऽप्रवृत्तावनित्यत्वाभ्युपगमो विफल इति वाच्यम् । १ परिभाषया दीर्घस्यासिद्धत्वबोधनेन सन्निपातविघाताभावेऽपि वास्तविकतद्विघातस्य जायमानतया सन्निपातपरिभाषाप्रवृत्तेर्दुर्वारत्वात् । किञ्च बहिरङ्गपरिभाषयाऽन्तरङ्गे कर्त्तव्ये बहिरङ्गासिद्धत्वस्यैव बोधनं क्रियते नतु बहिरङ्गशास्त्रे प्रवृत्ते तदसिद्धत्वप्रतिपादनमपीति सन्निपातविघातस्य परिभाषया दीर्घस्याऽसिद्धत्वप्रतिपादनद्वारा दूरीकर्त्तुमशक्यतया विघातस्य स्पष्टत्वेन सन्निपातपरिभाषाप्रवृत्तेरनित्यत्वं विना वारणोपायस्यादृष्टत्वात् । नचाऽनित्यताप्रयोजकनिर्द्देशस्य 'अकृत्सार्वधातुकयोरि'ति दीर्घेणैवोपपत्तौ तत्र ज्ञापकत्वं तस्य कथमिति वाच्यम् । तस्यापि सन्निपातपरिभाषयाऽप्रवृत्तेः । अनित्यत्वे तु सर्वं सूपपन्नमिति भावः । २किञ्चोक्तदीर्घविधायकशास्त्रस्याऽकृदिति पर्य्युदासेनाप्युपवेव प्रवृत्तिरिति दिक् ॥

बहुवचने किमिति । इत्थमेतदभिप्रायः, 'बहुवचने झल्येदि' त्यत्र बहुवचनग्रहणाभावे राम इत्यादौ नेत्वापत्तिर्दोषः । 'प्रत्ययःपरश्चे'त्यादिनिर्द्देशेन 'इदुदेङ् सम्बुद्धेरे' तावतैव सूत्रेण सिद्धे ह्रस्वग्रहणेन च सावेत्वन्न भवतीति कल्पनात् । नच तदभावे रामस्येत्यत्रोक्तदोषो दुर्वार एवेति वाच्यम् । 'टाङसिङसामिनात्स्याः' इत्यनेन ङसः स्थानेऽस्यं विधाय पररूपे कृते रूपसिद्धावदोषात् । नचोक्तसूत्रेण ङसोऽस्यविधाने इदम्शब्दान्ङसि निष्पन्नस्य अस्येति रूपस्य सिद्धिर्न स्याद्धलादित्वाभावेन हलिलोपाप्रवृत्तेरिति वाच्यम् । 'आपि लोप'इति न्यासेन 'टौसोरनः' इति न्यासेन च विषयविभागादुक्तलोपोपपत्तौ रूपसिद्धेः । नच रामाभ्यामित्यत्रैत्वं दुर्वारमिति वाच्यम् । सुपिचेत्यस्यारम्भसामर्थ्यादेवोक्तदोषस्य निवृत्तेः । नचोक्तसूत्रस्य रामायेत्यत्र दीर्घविधानेन साफल्यात्सामर्थ्यादित्युक्तिरतीवासंगतेति वाच्यम् ।

१ अन्तरङ्गपरिभाषयेत्यर्थः ।

२ ननु क्षीयाज्जीयादित्यादावपि सन्निपातपरिभाषाविरोधाद्दीर्घाप्राप्त्या सूत्रवैयर्थ्येन सामर्थ्यात्परिभाषाबाधेनाकृदिति दीर्घेणैव निर्द्देशोपपत्तावनित्यत्वे नासौ ज्ञापक इत्यरुचेराह किञ्चेति ।

'ङेरय' इति सूत्रकरणादकारोच्चारणसामर्थ्येन पररूपस्य बाधाद्दीर्घेणै तोक्तप्रयोगस्योपपत्तौ सूत्रवैयर्थ्यस्य स्पष्टतया सामर्थ्यादित्युक्तेः सुसंगतेः। एवञ्च बहुवचनग्रहणाभावे कुत्राप्यदोषान्नादरणीयन्तदिति प्रष्टुराकूतम्। रामेष्वित्यादावेत्वविधानस्य चरितार्थतया रामाभ्यामित्यादाविव रामेभ्य इत्यादावप्येत्वं बाधित्वा दीर्घापत्तिरतस्तत्करणमावश्यकं कृते च तस्मिन् सामर्थ्यादेत्वमेव न दीर्घ इति न कापि शङ्काकलङ्ककणिकेति संक्षेपः॥

ननु 'बहुवचने झल्येदि'त्यत्र झल्ग्रहणाकरणे 'उतो वृद्धिर्लुकि हली'त्यतो हलीत्यस्यानुवृत्त्या बहुवचने हलादावेव तेनैत्वविधानात्प्रथमा बहुवचने रामा इत्यादौ दोषाभावेन झल्ग्रहणमनावश्यकमेवेति शङ्कोत्थितौ समाधत्ते–झलि किम्। रामाणामिति। अयम्भावः, झल्ग्रहणाभावे हलादौ बहुवचने सुप्येत्वमित्यर्थे रामाणामित्यत्रैत्वापत्तिरतस्तदावश्यकम्। नच सन्निपातपरिभाषाविरोधान्न तत्रोक्तापत्तिरिति वाच्यम्। झल्ग्रहणसामर्थ्यादेत्वविषये सन्निपातपरिभाषाऽप्रवृत्तिकल्पनेन तत्र तदापत्तेस्तादवस्थ्यात्। अतस्तन्निवृत्त्यर्थं झल्ग्रहणं कर्त्तव्यमेव कृते च तस्मिन्न दोषो नकारस्य झल्त्वाभावात्। एत्वे सन्निपात परिभाषाऽप्रवृत्तेरेव, 'अद्‌ः सर्वेषामि'त्यादिनिर्देशसङ्गतिरित्यलम्॥

ननु सार्धमात्रालाघवाय 'बहुवचने झलीक्' इत्येवास्तु सूत्रमिति चेन्न। तथा सति 'ओसिचे'त्यत्रेकोऽनुवृत्त्या ओसि परे अकारस्येगागमः स्यादित्यर्थे ज्ञानयोरित्यादौ 'इकोऽचि विभक्तावि'ति नुमापत्तेः। नचान्तरङ्गत्वात् 'आद्गुण' इत्यनेन गुणे जाते इगन्तत्वाभावादेव नुमोऽप्राप्तिरिति वाच्यम्। १(वार्णादाङ्गं बलीयः) इति न्यायेन प्राङ् नुम एव प्रवृत्तेः। नच समाननिमित्तकत्वरूपसमानाश्रयत्वे एवोक्तन्यायप्रवृत्त्यङ्गीकारात्प्रकृते नुम्गुणविधायकयोरसमाननिमित्तक-

---

१ वार्णादाङ्गमिति। वर्णनिमित्तककार्यादङ्गनिमित्तिककार्यं बलवद्भवतीत्यर्थः तथा च वर्णत्वव्याप्यधर्मावच्छिन्नोद्देश्यककार्यादङ्गत्वावच्छिन्नोद्देश्यकं कार्यं बलवदिति फलितम्।

अत्र ज्ञापकं तु अभ्यासस्याऽसवर्णेऽत्रत्याऽसवर्णग्रहणमेव, तथाहि परिभाषाऽसद्भावे ईयतुरित्यादावन्तरङ्गेन सवर्णदीर्घेणयङो बाधादुक्तरूपसिद्धौ व्यर्थमसवर्णग्रहणं परिभाषां ज्ञापयति। अपवादत्वात्प्राप्तेयङ्-

त्वेनोक्तन्यायस्याविषयत्वेनाऽप्रवृत्त्याऽन्तरङ्गत्वाद्गुणे नुमोऽप्राप्त्या न दोष इति वाच्यम्। आङ्गवार्णयोः समानकार्य्यत्वे एव तत्प्रवृत्तेः सिद्धान्तितत्वादिहोभयोरसमानकार्य्यत्वान्न्यायप्रवृत्त्या दोषस्य तादवस्थ्यात्। प्राक् प्रदर्शितो न्यायप्रवृत्तिविषयो नैव समीचीनः, तथा सति दीर्घवृद्ध्योरसमाननिमित्तकत्वेन न्यायाऽप्रवृत्त्या इयाय, इयेयेत्येत्यादेरसिद्ध्यापत्तेः। सिद्धान्ते तु द्वित्वे कृतेऽन्तरङ्गसवर्णदीर्घस्य न्यायेनैव बाधाद्वृद्धौ रूपं सिद्ध्यतीति भावः। 'बहुवचने झल्येत्' इति न्यासे तु बहुवचने झलीति सप्तम्या अचरितार्थत्वाज्झलादौ बहुवचने सुपि अत इडित्यर्थे 'आद्यन्तौ टकिता'वित्यनेन टित्कार्य्यस्याऽऽद्यवयवत्वविधानादकारात्प्रागिटि रामेभ्यो रामेष्वित्याद्यसिद्ध्यापत्तेः। नच 'यस्तदेतेभ्य'इत्यादिनिर्देशात्सप्तमीनिर्दिष्टपदानां षष्ठ्यन्तत्वकल्पनमत इति षष्ठ्यन्तस्य च पञ्चम्यन्तत्वं सप्तमीनिर्देशश्च १(यस्मिन्वि-

व्यावृत्त्यर्थमसवर्णग्रहणस्य चरितार्थत्वे ज्ञापकत्वं न सम्भवतीति नाऽऽशङ्क्यम्। तस्य येननाप्राप्तिन्यायेनेयर्त्तीत्यादिसकललक्ष्यप्राप्तयणपवादत्वस्यैव निर्णयात्। इति प्राञ्चः।

नव्यमतेतु अभ्यासस्याऽसवर्णे इति सम्पूर्णसूत्रमेवास्यां ज्ञापकम् इयाय, इयेयेत्यादावियङ्विधानार्थं सूत्रस्यावश्यकत्वे ज्ञापकत्वमसम्भवीति नाशङ्क्यम्। तत्र सूत्रसत्त्वेऽपि पूर्वप्रवृत्तगुणवृद्ध्यो र्द्विर्वचनेऽचीति रूपातिदेशेनापहाराद्द्वित्वे कृते पुनः प्राप्तगुणवृद्ध्यो र्बाधनं विधायाऽन्तरङ्गत्वात्सवर्णदीर्घापत्तेः। इति व्यर्थीभूतं सूत्रं परिभाषां ज्ञापयति ज्ञापितायां तु तस्यां सवर्णदीर्घापेक्षया गुणवृद्ध्योरेव प्राबल्यात्सूत्रं सार्थकमिति भावः

१ यस्मिन्विधिस्तदादावल्ग्रहणे इति परिभाषास्वरूपम्। यस्मिन्नल्ग्रहणे विशेषणीभूते यो विधिरारभ्यते स तदलादौ बोध्य अल्मात्रवृत्तिविषयताप्रयोजके सप्तम्यन्ते विशेषणताप्रयोजके पदे यो विधिः स तदलादौ बोद्धव्य इति यावत्। इयं परिभाषा वाचनिक्येव नतु ज्ञापकसाध्या भाष्ये वचनरूपेणैवैषा पठिता नत्वत्र ज्ञापकमुपन्यस्तमिति भावः ज्ञापकजिज्ञासा चेदुच्यते अत्र नल्यपीतिसूत्रं ज्ञापकम्। तथाहि परिभाषाऽसत्त्वे प्रदायेत्यादौ तदन्तविधौ हलन्तकित्प्रत्ययपरत्वाभावादेवेत्वाप्राप्त्या तद्व्यावृत्त्यर्थमुक्तसूत्रं व्यर्थं सत्परिभाषाज्ञापकम्।

धिरि)ति परिभाषाप्रवृत्तिसम्पादकत्वाच्चारितार्थस्तथा च झलादेर्बहुवचनस्य सुप इडागम इत्यर्थे न दोषस्तत्रेति वाच्यम् । तथा सति पञ्च इत्यादौ हलिलोपानापत्तेः । गङ्गे इत्यादौ सम्बुद्धिलोपानापत्तेश्च । 'सम्बुद्धौ चे'त्यत्रेटोऽनुवृत्त्या तेन तद्विधानात्तस्य गुणे तस्य च पञ्चमीसमासेन स्थानिवद्भावात् 'एङ्ह्रस्वादि'त्यस्याप्राप्तेर्व्यवधानात् 'हल्ङ्याबि' त्यस्याप्राप्तेश्चेत्यलं पल्लवितेन ॥

सुपि किम् । पचध्वमिति । अयम्भावः, सुपिग्रहणाभावे पचध्वमित्यत्र झलादिबहुबचने ध्वमि परे एत्वापत्तिः । नच 'बहुवचने झल्येदि'ति न्यासे न तत्र दोष इति वाच्यम् । तथा सति १सङ्गसीरन्नित्यत्र सकारादिबहुबचने तदापत्तेः । नच भादिसाहचर्य्येण सकारादिबहुबचनस्यापि सुप्प्रत्ययस्यैव ग्रहणादुक्तप्रयोगे दोषाभावाद्व्यर्थमेव तद्ग्रहणमिति वाच्यम् । पट्वी, मृद्वीत्यादौ गुणाऽभावाय 'घेर्ङिती'त्यत्रानुवृत्त्यर्थत्वेन तस्य साफल्यात् । नच ङीपः स्थाने टीप इति न्यासेन नोक्तस्थले कश्चिद्दोष इति वाच्यम् । सर्वत्रानेकाऽनेककल्पनापेक्षया सुपिग्रहणकरण एव लाघवादिति दिक् ॥

जस्त्वमिति । अयम्भावः २(येन नाप्राप्ति ) न्यायेन अवसाने विधीयमानस्य चर्त्वस्य पदान्तजश्त्वापवादत्वात्प्रागेव चर्त्वं ततोजश्त्वमिति । जश्त्वोत्तरं चर्त्वोपन्यासस्तु न युक्त उक्तयुक्तेः । अत एव जश्त्वमिति प्रतीकमुपादाय बाधित्वेति शेष इत्युक्तं नागेशेन नतु जश्त्वोत्तरं चर्त्वमुक्तमिति संक्षेपः ॥

ननु रामस्येत्यत्र 'अनचि चे'त्यनेन सकारस्य द्वित्वे तस्य 'खरि चे'ति चर्त्वे तकारश्रवणापत्तिस्स्यादित्याशङ्कां निराकरोति—सस्य द्वित्वपक्षे खरिचेति चर्त्वेऽप्यान्तरतम्यात्सस्य स एव नतु तकारोऽल्पप्राणतया प्रयत्नभेदादिति । सकारस्योक्तसूत्रेण चर्त्वेऽपि 'स्थानेऽन्तरतम' इत्यत्रत्यतमब्ग्रहणात्स्थानप्रयत्नाभ्यामन्तरतमेनैवा-

---

१ सम्पूर्वकाद्गम धातोः 'समो गमृच्छिभ्यामि'त्यात्मने पदे आशिर्लिङि बहुबचने रूपम् ।

२ येनना प्राप्तीति । येननाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवतीति न्यायस्वरूपम् ।

देशेन भाव्यमिति बोधनाद्दन्तस्थानजन्यत्वसमानाधिकरणविवृतत्वरूपाऽऽभ्यन्तरप्रयत्नवत्वसमानाधिकरणमहाप्राणरूपबाह्यप्रयत्नवतः सकारस्य स्थाने तादृशः सकार एवाऽऽदेशो जातो नतु तकारस्तस्य सकारेण समानस्थानिकत्वेऽपि स्पृष्टरूपाऽऽभ्यन्तरप्रयत्नवत्तया अल्पप्राणरूपबाह्यप्रयत्नवत्तया च तेन भेदादिति भावः। स्थानप्रयत्नाभ्यामाऽऽन्तरतम्यस्याऽऽश्रयणे प्रमाणमाह—अत एव सः सीति तादेश आरभ्यत इति। उभाभ्यामाऽऽन्तरतम्यस्याऽनाश्रयणे खरि-चेति चर्त्वेनैव १वत्स्यतीत्यादि सिद्धौ 'सः स्यार्द्धधातुके' इत्यस्य वैयर्थ्यं स्यादिति तद्भावः। नचोक्तसूत्रसत्त्वे वत्स्यतीत्यादौ (चयो द्वितीये) ति वार्त्तिकेन द्वितीयादेशे पक्षे थकारघटितं रूपं सिद्ध्यति तन्नेदानीं स्यात् खरिचेति चर्त्वस्योक्तवार्त्तिकदृष्ट्याऽसिद्धत्वेनाऽऽदेशाप्राप्तेरिति तदर्थमुक्तसूत्रस्यावश्यकत्वेन ज्ञापकत्वं कथमिति वाच्यम्। 'न मुने' इत्यत्र नेति योगविभागेन क्वचिदसिद्धत्वन्नेति कल्पनात्खरिचेति चर्त्वेऽपि थकारघटितरूपसिद्धौ बाधकाभावात्सूत्रवैयर्थ्यस्य स्पष्टतयोक्तार्थे ज्ञापकत्वसम्भवादित्यलम्॥

ननु रामशब्दादामि तस्य नुडागमे रामनामिति स्थितौ 'नामी'ति सूत्रापेक्षया 'सुपिचे'त्यस्य परत्वेन दीर्घेऽपि नामाव्यवहितपूर्वत्ववि-शिष्टाऽजन्तत्वरूपोद्देश्यत्वसत्त्वात् (पर्जन्यवल्लक्षणप्रवृत्तिः) इतिन्यायेन नामीत्यस्य प्रवृत्तिसम्भवेन कृताकृतप्रसङ्गित्वरूपनित्यत्वस्य सद्भावा-दनेनैव दीर्घो नतु तेन परत्वापेक्षया नित्यत्वस्य बलवत्त्वात्, एवञ्च मूलोक्तशङ्कासमाधानप्रयासो विफल इति चेन्न। २(शब्दान्तरस्य प्राप्नुवन्विधिरनित्यः) इति न्यायेन नामीत्यस्य नित्यत्वविघातात्। नच (एकदेशविकृतमनन्यवत्) इत्यनेन न तस्य नित्यत्वहानिरिति वाच्यम्। तस्य न्यायस्य शब्दान्तरस्येतिन्यायविषये प्रवृत्तेरनङ्गीका-रात्। अन्यथाऽस्य न्यायस्य सर्वथा वैयर्थ्यापत्तेरितिभावः। नच नामशब्दमुच्चार्य्य दीर्घविधानात्प्रतिपदोक्तत्वेन नामीत्यस्यैव प्राक् प्रवृ-

१ वत्स्यतीति। वस् धातो लृटि रूपम्।

२ एषाच परिभाषा शदेःशित इति सूत्रभाष्ये स्पष्टा वचनरूपेण पठितेत्यर्थः। तत्र हि न्यविशतेत्यत्र विकरणे कृते।विकरणान्तस्याऽट अकृते विकरणे धातुमात्रस्याऽट् इत्यडनित्य इत्युक्तम्।

त्तिरिति वाच्यम्। प्रतिपदोक्तस्यापि निरवकाशत्वे सत्येव बलवत्त्वाद् अस्याऽतथात्वेन प्राक्प्रवृत्तेरसम्भवात्। नच नामीत्यस्याऽन्तरङ्गत्वात्तथा प्रवृत्तिरस्त्विति वाच्यम्। उभयोर्नाम्त्वसुप्त्वनिमित्तकत्वेनाऽन्तरङ्गत्वबहिरङ्गत्वेषु कस्याप्यलाभेन परत्वात्सुपिचेत्येव दीर्घसिद्धौ नामीति सूत्रोपन्यासो न युक्त इत्याशङ्क्य समाधत्ते—सुपि चेतिदीर्घो यद्यपि परस्तथापीत्यादि। अस्यायम्भावः, सन्निपातपरिभाषाविरोधात्सुपि चेति सूत्रस्य नेह प्रवृत्तिः। नामीत्यस्य प्रवृत्तौ तु नोक्तपरिभाषाविरोधः, आरम्भसामर्थ्यात्। सुपि चेत्यस्य तु न सामर्थ्यम्, रामाभ्यामित्यादौ तस्य सावकाशत्वात्, नामीत्यस्य तु कुत्राऽप्यवकाशाभावादारम्भसामर्थ्यात्परिभाषाबाध इति। नच कतीनामित्यत्र 'ह्रस्वनद्यापो नुडि' त्यतः परत्वात् 'षट्चतुर्भ्यश्चे'ति नुटि दीर्घेऽपि षट्त्वस्य सत्त्वात्सन्निपातविघाताभावेनोक्तपरिभाषाऽप्राप्त्या नामीत्यस्य चारितार्थ्यमिति वाच्यम्। नह्येकमुदाहरणं योगारम्भं प्रयोजयतीति न्यायेन 'कतेर्नामी' त्येव सिद्धे सामान्यसूत्रवैयर्थ्यस्य स्पष्टत्वादिति॥ केचित्तु; आरम्भसामर्थ्यादित्यस्य 'न तिसृचतसृ' इति निषेधारम्भसामर्थ्यादित्याशयं वर्णयन्ति, तेषामयमभिप्रायः, यदि नामि सूत्रविषयेऽपि सन्निपातपरिभाषा प्रवर्त्तेत तदा तयैव तिसृणामित्यत्रापि दीर्घव्यावृत्तिसिद्धौ निषेधकरणस्य स्पष्टमेव वैयर्थ्यं स्यात्। [1]एतदारम्भसामर्थ्यादुक्तपरिभाषायास्तद्विषयेऽप्रवृत्तिकल्पनेतु तिसृणामित्यत्र नामीत्यनेन प्राप्तदीर्घव्यावृत्त्यर्थं निषेधशास्त्रे [2]स्वांशे चारितार्थ्यं जातमिति दिक्॥

ननु 'आदेशप्रत्यययोरि'त्यत्रेण्कोरग्रहणे प्रातिपदिकात्परीभूतो य आदेशरूपः प्रत्ययावयवश्च सकारस्तस्य मूर्द्धन्यादेश इत्यर्थे प्रथमैकवचने राम इत्यत्रापि सोस्तदापत्तिः, तत्सत्त्वे तु न तत्रोक्तापत्तिलेशोऽपि सोरिण्कुभ्यां परत्वाभावादेवञ्च राम इत्येव प्रत्युदाहर्त्तव्यं रामस्येति प्रत्युदाहरणमानन्दसन्दोहजनकमिति चेन्न। षत्वविधायकशास्त्रस्य रुत्वविसर्गौ प्रत्यसिद्धत्वेनैवोक्तप्रयोगीयदोषव्यावृत्तौ प्रथमैकवचनस्य प्रत्युदाहरणायोग्यत्वात्षष्ठ्येकवचनस्यैव तद्योग्य-

१ न तिसृ चतसृ इति निषेधारम्भसामर्थ्यादित्यर्थः।
२ नामीति दीर्घविषये इत्यर्थः

त्वमित्याशयेनाऽऽशंङ्क्य समाधत्ते—इण् कोः किम्। रामस्येति। अत्र, षत्वशास्त्रे तदग्रहणे तदापत्तिः स्यादिति तद्ग्रहणम्। न च 'ह्रस्वाङ्कसी' ति सूत्रेण ष्यविधानस्यैव समुचितत्वे सकारोच्चारणसामर्थ्यादेव तत्र दोषाभावादिण्कोर्ग्रहणं मास्तु। नचामुष्येत्यत्र षत्वार्थमावश्यकं तद्ग्रहणमिति वाच्यम्। अमुष्येति निपातनात्ततः फगादौ। (आमुष्यायणे) ति १वार्तिकनिर्देशाच्च तत्र षत्वस्य सुलभत्वात् एवञ्च रामस्येत्यत्र सकारोच्चारणसामर्थ्येनैव तदभावाद्व्यर्थमेवेण्कोर्ग्रहणमिति वाच्यम्। विश्वपास्वित्यादौ षत्वव्यावृत्त्यर्थं तस्याऽऽवश्यकत्वात्। एवञ्चेदमेव प्रत्युदाहरणम्बोध्यम्। नच षुविति वक्तव्ये सुविति सकारोच्चारणसामर्थ्यान्न तत्र दोष इति वाच्यम्। लिट्तु, धुट्स्वित्यादौ 'डः सि धुडि'त्यनेन धुटो विधानाय सकारोच्चारणस्यावश्यकत्वेन षुविति वक्तुमशक्यतया विश्वपास्वित्यादावुक्तदोषस्य दुरुद्धरत्वात्। एतदर्थमावश्यकमेव तद्ग्रहणमिति भावः॥

विवृताऽघोषस्येति। विवृतत्वरूपाऽऽभ्यन्तरप्रयत्नवतोऽघोषरूपबाह्यप्रयत्नवतश्च सकारस्य स्थाने उक्तप्रयत्नद्वयवानेव षकार इति तदर्थः विवृतस्य सस्य तादृश एव ष एतावन्मात्रोक्तौ ऋकारेऽतिप्रसङ्गस्तस्यापि विवृतं स्वराणामित्युक्तरीत्या विवृतप्रयत्नवत्त्वादतोऽघोष इत्युक्तम्। अघोषस्येत्युच्यमाने ठकारेऽतिप्रसङ्गः स्यादिति विवृतमित्युक्तम्। तादृश एव ष इति। तादृशः ष एवादेशो भवति नान्य इति तदर्थः। न च दधिसेच इत्यादौ, सुबुत्पत्तेः प्राक् समासे प्राप्तषत्वव्यावृत्त्यर्थं पदादादिः पदादिरिति पञ्चमीसमासस्य भाष्ये उक्तत्वाद्रामेष्वित्यत्रापि स्वादिष्विति रामेत्यस्य पदत्वेन 'सात्पदाद्योरि'ति निषेधः स्यात्। नच षत्वमेव तदा व्यर्थमिति वाच्यम्। करिष्यतीत्यादौ तस्य सावकाशत्वादिति वाच्यम्। स्वादिष्विति पदसंज्ञामाश्रित्योक्तनिषेधो न प्रवर्त्तत इति सातिग्रहणेन ज्ञापनान्निषेधाप्रवृत्तेरित्यलम्॥

ननु इण्कोरि'त्यधिकारसूत्रस्यैव विधिसूत्रत्वाभ्युपगमे इण्कुभ्यां परस्य सस्य मूर्द्धन्यादेश इत्यर्थे सर्वत्र षत्वसिद्धौ कुत्राऽपि

---

१ आमुष्यायणाऽऽमुष्यपुत्रिकाऽऽमुष्यकुलके ति चेति वार्त्तिकस्वरूपम्।

दोषाभावाद्व्यर्थमेव सूत्रमिदमित्याशयेनाशङ्कते—आदेशप्रत्यययोः क्किमिति। उत्तरयति—सुपीः सुपिसाविति। अयमाशयः, रुत्वविसर्गविधायकशास्त्रद्वयदृष्ट्या षत्वस्यासिद्धत्वादेव पूर्वत्र षत्वव्यावृत्तिसिद्धिरिति द्वितीयं प्रत्युदाहृतम्। तत्र सूत्राभावे षत्वापत्तिर्दुर्वारेति तदावश्यकम्। नच 'शासिवसिघसीनामि'त्येतदारम्भसामर्थ्यात् धातोः सकारस्य षत्वं चेदेतेषामेवेति नियमाश्रयणेन न तत्र तदापत्तिरिति व्यर्थमेव तद्ग्रहणमिति वाच्यम्। बहुलक्ष्यानुरोधेन प्रकृते विपरीतनियमबाधनार्थमादेशप्रत्यययोर्ग्रहणस्यावश्यकत्वादिति संक्षेपः॥

ननु 'सर्वादीनी'ति सूत्रे प्रमाणाभावेन शब्दस्वरूपाध्याहारस्य कर्तुमशक्यत्वात्तदितरविशेष्यवाचकपदाभावाच्च तदन्तविध्यभावे सर्वाद्यन्तस्य सर्वनामसंज्ञाऽप्राप्तौ तां साधयितुमाह—तदन्तस्यापीयं संज्ञेति। अत्र प्रमाणमाह—द्वन्द्वेचेति। अयम्भावः, समुदायस्यैवायं निषेधो नावयवानामित्यग्रे वक्ष्यति, एवञ्च समुदाये संज्ञायास्तदन्तविधिं विना प्राप्त्यभावाद्व्यर्थनिषेधसूत्रं ज्ञापयति सर्वाद्यन्तस्यापि सर्वनामसंज्ञा भवतीति स च तदन्तविधिर्विशेष्यवाचकपदाभावाद्भवितुन्नार्हति, अतः शब्दस्वरूपाध्याहार आवश्यकः सति च तस्मिन् तदन्तविधौ सर्वाद्यन्तस्य सर्वनामत्वे निषेधसूत्रस्य स्वांशेचारितार्थ्ये परमसर्वस्मै इत्यादिलक्ष्यसिद्धिश्चेति सर्वमुपपन्नमिति। नच अश्च उभौ चेति द्वन्द्वे गुणे कृते ओभावित्यत्र परादिवद्भावेन प्राप्तसर्वनामसंज्ञानिषेधार्थमुक्तसूत्रस्यावश्यकत्वेन ज्ञापकत्वं कथमिति वाच्यम्। तदन्तविधिज्ञापकतापरभाष्यप्रामाण्येनोक्तप्रयोगानभिधानात्। नच तदन्तविधेरभावेऽपि वर्णाश्रमेतराणामित्यत्रावयवस्य सर्वनामसंज्ञको न भवतीत्यर्थे निषेधार्थं सूत्रमावश्यकमिति वाच्यम्। अवयवमात्रेण कुत्साविवक्षाया अभावेन सर्वनामप्रकृतिकसुबन्तात्तदर्थगतकुत्साविवक्षायामकजित्यर्थकस्य (अव्ययसर्वनाम्नामकजि) त्यस्याप्राप्तेरिति दिक्॥

ननु पदाधिकार्य्यङ्गाधिकारि च कार्य्यं सूत्रोपात्तस्य सूत्रोपात्तान्तस्य च भवतीत्यर्थकस्य (पदाङ्गाधिकारे तस्य च तदन्तस्य च )-त्यस्य सत्वात्तदन्तविधिस्त्विनैव परमसर्वस्मै इत्यादिसिद्धौ तदन्तसंज्ञायाः किम्फलमित्याह—तेन परमसर्वत्रेति त्रलिति। परमसर्वत्य-

स्य गणे पाठाभावात्सर्वनामसंज्ञकत्वाभावेन अलाद्युत्पत्तिर्न स्यात् तदन्तविधौ तु सर्वाद्यन्तस्यापि तत्त्वेन सुलभ एव अलादिरिति भावः। न चात्र प्रातिपदिकादित्यस्यानुवृत्त्या सर्वनाम्नस्तद्विशेषणत्वेन तदन्तविधिसिद्धौ ज्ञापकादिना पुनस्तदाश्रयणप्रयासो विफल एवेति वाच्यम्। समासप्रत्ययविधौ प्रतिषेध इति तन्निषेधेन ज्ञापकमूलकतदन्तविध्याश्रयणस्यावश्यकत्वात्। नच परमसर्वत्रेत्यत्रावयवनिष्ठसर्वनामत्वेन सुबुत्पत्तितः प्रागेव अलादिसिद्धावलमेतेन तदर्थप्रयासेनेति वाच्यम्। सर्वनामप्रकृतिकसुबन्तात्तूलादयो भवन्तीति तद्विधायकसूत्रार्थे परमसर्वेति समुदायस्यैव सुबन्तत्वात्। 'द्वन्द्वे चेति प्रथमार्थे सप्तमीति समुदाय एव संज्ञानिषेधपर्य्यवसानं नावयवे, अन्यथा वर्णाश्रमेतराणामित्यादौ सुडापत्तिः, सर्वार्थवाचकसर्वाद्यन्तत्वेन समुदायस्य संज्ञासौलभ्यात्। अवयवस्य संज्ञानिषेधेऽपि समुदायस्य सर्वार्थवाचकसर्वाद्यन्तत्वेन सुलभैव संज्ञेति दिक्॥

ननु 'अनेकाल्शित्सर्वस्येत्येतद्घटकशिद्ग्रहणेन ज्ञापितया १ (नानुबन्धकृतमनेकाल्त्वमि)ति परिभाषया तृ इत्यत्रानुबन्धकृतानेकाल्त्वाभावबोधनवत्प्रकृते श्यादेशस्यापि तथा तथा बोधनेन मूलोक्तमतीवासमञ्जसम्' सर्वादेशेन बिना शित्वस्यासम्भवेन शित्वात्सर्वादेश इत्यपि वक्तुमशक्यमिति चेन्न। इत्संज्ञावत्त्वमनुबन्धत्वमिति प्राचीनाभिमतानुबन्धत्वाङ्गीकारेण प्रकृते शकारस्य तत्त्वाभावादुक्तपरिभाषाऽप्रवृत्त्याऽनेकाल्त्वस्याक्षतत्वेन मूलोक्तस्य समञ्जसत्वादित्याशयेनाह—अनेकाल्त्वात्सर्वादेश इति। अयम्भावः यथा तिपः स्थाने डाणलौ सर्वादेशौ भवतः, आदेशविधानोत्तरमतिदेशेन प्रत्ययत्वमाश्रित्य डकारणकारयोरित्संज्ञा प्रवर्तते न तु ततः प्राक् प्रत्ययत्वाभावेनेत्वविधेरप्राप्तेः, तदानीमित्संज्ञकत्वाभावेन (नानुबन्धकृतमनेकाल्त्वमि)ति परिभाषाऽप्रवृत्त्याऽनेकाल्त्वस्याक्षतत्वात्। तथेहापि विधानात् प्रागनेकाल्त्वस्य सत्त्वात्, अवि-

१ अत्र शिद्ग्रहणं ज्ञापकं तथाहि परिभाषाऽभावेऽनुबन्धकृतानेकाल्त्वस्य ग्रहणादनेकाल्त्वादेव सर्वादेशसिद्धौ व्यर्थं शिद्ग्रहणं परिभाषां ज्ञापयति, ज्ञापितायामस्यां तु अनुबन्धकृतानेकाल्त्वस्याग्रहणात्सर्वादेशाय शिद्ग्रहणं स्वांशे चरितार्थमिति भावः।

णस्तु इत्यादौ तु विधानात्प्रागेवेत्संज्ञाप्रवृत्त्या ऋकारस्यानुबन्धत्वेन तद्रहितस्य तकारमात्रस्यानेकाल्त्वाभावान्न सर्वादेश इति प्राञ्चः।

नव्यास्तु, इत्संज्ञायोग्यत्वमनुबन्धत्वमित्यभ्युपगच्छन्ति तन्मते शकारस्येत्संज्ञायोग्यत्वेनाऽनुबन्धत्वात्परिभाषयाऽनेकाल्त्वाभावबोधनान्मूलोक्तालङ्गत्या शित्वात्सर्वादेश इत्येवोचितम्, इत्संज्ञायोग्यशकारवत्त्वमेवैतन्मते शित्वमित्यलम्।

ननु उभशब्दस्य नित्यद्विवचनान्तत्वे 'उभादुदात्तो नित्यम्' उभशब्दस्य सर्वनामत्वे कोऽर्थ इति सूत्रकारभाष्यकारप्रयोगविरोध इति चेन्न। अर्थपरस्यैवोक्तशब्दस्य नित्यद्विवचनान्तत्वं नतु स्वरूपानुकरणपरस्य तस्येत्यभ्युपगतेरित्याशयेनाह मूले—उभशब्दो द्वित्वविशिष्टस्य वाचक इति। उभश्चासौ शब्दश्चेति विग्रहः, अत्र शब्देत्यस्य पूर्वनिपातो नाशङ्कनीयः, व्याप्यव्यापकयोर्मध्ये व्याप्यस्यैव पूर्वनिपातो नतु शब्देत्यस्येति भावः। स्वार्थद्रव्यलिङ्गसंख्याकारकेति पञ्चविधप्रातिपदिकार्थस्य सिद्धान्तसिद्धत्वेन द्वित्वविशिष्टस्य वाचक इत्यस्य द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकार्थाभिधायीत्यर्थः। ननु पञ्चविधप्रातिपदिकार्थस्य सिद्धान्तितत्वात्प्रकृत्यैव सकलार्थबोधस्योपपत्तौ विभक्तेः, 'द्व्येकयोर्द्विवचनैकवचने' इत्यादेश्च नैरर्थक्यापत्तिरिति चेन्न। विभक्तेर्द्योतकत्वेन सूत्रस्य च नियमार्थत्वेन सार्थक्यादित्याशयेनाह—अत एवेति। द्वित्वविशिष्टेत्यस्य प्रकृतार्थत्वादेवेत्यर्थः, अनन्वितार्थकविभक्तिकल्पनापेक्षयाऽनुवादकविभक्तेरेव न्याय्यत्वादाह—नित्यं द्विवचनान्त इति। द्विवचनान्त एवेति तदर्थः।

ननु स्मायादिसर्वनामकार्याणामेकवचने बहुवचने च विधानदर्शनादुभशब्दस्य गणे पाठो विफल एव, नच 'सर्वनाम्नस्तृतीया चे'ति सूत्रेण उभाभ्यां हेतुभ्याम्, उभयोर्हेत्वोरिति षष्ठी तृतीया च तत्फलमिति वाच्यम्। निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमिति 'हेताविति सूत्रभाष्योक्तवार्तिकेनैव तयार्गतार्थत्वात्। नचोक्तवार्तिकस्य 'सर्वनाम्नस्तृतीया चे,ति सूत्रे वार्त्तिककृता पठितत्वेन तस्य सर्वनाम्न एव सर्वविभक्तिप्रापकत्वं नत्वन्यस्येति वाच्यम्। भाष्ये 'हेतावि'ति सूत्रे तद्वार्त्तिकस्य पठितत्वात्। एवञ्चोक्तरीत्या गणपाठफलस्य सिद्धत्वादिहोभशब्दपाठो व्यर्थ एवेत्याशंक्य समाधत्ते—तस्येह पाठस्तु

उभकावित्यकजर्थं इति। गणपाठेन तस्य सर्वनामत्वात् (अव्यय-सर्वनाम्नामकच्प्रा)ति भावः।

ननु कप्रत्ययेनापीष्टरूपस्य सिद्धौ गणेऽकजर्थं उभशब्दस्य पाठो व्यर्थः, नचाकचि कृते स्वरे विशेष इति वाच्यम्। प्रत्ययस्वरचित्स्वराभ्यामन्तोदात्तस्यैव सत्त्वेनाविशेषात्। अकचि कप्रत्यये वा कृतेऽन्तोदात्तस्वरस्यैव विधानमिति न कश्चिद्विशेष इति भावः। नच सुबन्तात्तद्धितोत्पत्तिरितिसिद्धान्तादकचि तत्प्रयुक्तमन्तोदात्तत्वमुभकाभ्यामित्यादौ सुबन्तस्य के तु प्रकृतेस्तद्विति स्पष्ट एव विशेष इति वाच्यम्। तद्धितविधौ प्रातिपदिकादित्यधिकारात्तस्यैव प्रकृतित्वेनाविशेषात्। प्रातिपदिकमेवाकचः प्रकृतिः सच (अव्यय-सर्वनाम्नामि)तिन्यायवलेन सुबन्तात्परो भवतीत्यन्यदेतत्, (ओकार-सकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकजि)ति न्यायेन युष्मदस्मद् विषये तु सुबन्तस्यैवाकचः प्रकृतित्वं तस्यैव टेः प्रागकजित्यवसेयम्। नचाकचि १(तन्मध्यपतित) न्यायेनोभशब्दग्रहणेन तस्य ग्रहणादुभकाववयवौ यस्येत्यर्थे उभादुदात्तो नित्यम्, इत्ययचि उभकय इति रूपं कप्रत्यये तु तादृशं रूपन्नेति विशेष इति वाच्यम्। कश्चेदानीं काकचोर्विशेष इति 'सर्वादीनी'ति सूत्रस्थभाष्यप्रामाण्येन तादृश-रूपानभिधानेन विशेषाभावादित्याशयेनाशङ्कते—नच कप्रत्ययेनेष्ट-सिद्धिरिति। समाधत्ते—द्विवचनपरत्वाभावेनेति। टेः पूर्वमकचो-जायमानतया (तन्मध्यपतित) न्यायेनोभग्रहणेनाकज्विशिष्टस्य ग्रहणादुभशब्दस्याकचा न द्विवचनपरत्वविघातः, कप्रत्ययस्य तु प्रातिपदिकात्परत्र जायमानतया व्यवधायकत्वेन तस्य द्विवचनपर-त्वविघातकत्वं स्पष्टमेव, एवञ्च यथा उभशब्दात्स्वार्थे अलि तसि च

---

१ तन्मध्यपतितेति। तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति स्वरूपम्। नेदमदसोरकोरिति सूत्रेऽकोरिति निषेधोऽस्या ज्ञापकः। तथा हि, एतदभावेऽकच्विशिष्टेदमदश्शब्दत्वाभावादेव ताभ्यामुत्तरस्य भिस ऐस्त्वाप्राप्त्या तद्व्यावृत्त्यर्थमकोरिति निषेधो व्यर्थः सन्नुक्तमर्थं ज्ञापयति, ज्ञापितेत्वास्मिन्नर्थेऽकज्विशिष्टयोरिदमदसोरिदमदश्शब्दाभ्यां ग्रहणात्तदुत्तरस्य भिस ऐस्त्ववारणार्थमुक्तनिषेधश्चरितार्थ इति भावः।

परेऽयच् भवति तथा प्रकृते क्तप्रत्ययेऽपि स स्यादिति समाधातुरभिप्रायः। दृष्टान्तेऽयचः प्रसङ्गं प्रदर्शयति, 'उभादुदात्तो नित्यमि'ति सूत्रं विभज्यते तत्र उभादुदात्त इत्येको योगः, अत्र योगेऽस्वरितत्वेन 'द्वित्रिभ्यामि'त्यतो वेत्यस्य नाऽनुवृत्तिः, तत, अवयववृत्तेः संख्यावाचिन उभयशब्दादवयविन्यर्थेऽयच् स्यात्, उभयो मणिः, ततो 'नित्यम्' उभशब्दाद्वृत्तिविषये स्वार्थे नित्यमयच् स्यादिति उभयत उभयत्रेति सिद्धम्। ननु वृत्तिविषये स्वार्थे नित्यमयच् भवतीत्यस्योक्तत्वेन कृतेऽप्यकचि दुर्वार एवायजिति चेन्न। योगविभागस्येष्टसिद्ध्यर्थत्वेन 'उभौ साभ्यासस्ये'ति निर्देशेन च यत्र न द्विर्वचनश्रवणं तत्रैवायच् नतु वृत्तिविषये इति तदाशयात्। नच द्विवचनपरत्वाभावेऽयच् नेष्ट इत्यत्र किंप्रमाणमिति वाच्यम्। वक्ष्यमाणवार्त्तिकस्यैव प्रमाणत्वात्। इत्याह—उभयोऽन्यत्रेति। स्वार्थिकाऽयजन्त उभयः सोऽन्यत्र द्विवचनपरत्वाभावे प्रयुज्यते नतु द्विवचने। यत्रोभशब्दादुत्पन्नद्विवचनस्य लुका नापहारस्ततोऽन्यत्रायजिति वार्त्तिकार्थः। इत्थं कृत्वाऽकजर्थः सर्वादिगणे उभशब्दपाठः स्थितः, भाष्ये तु प्रत्याख्यात उभशब्दपाठः, स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्तीति केऽप्यन्तरेण द्विवचनं द्विवचनपरत्वसत्त्वादयचोऽप्रवृत्तेः। अत एव उभयोरुभौ उभोभावित्यादौ नायच्, अल् तसिश्च विभक्त्यन्तस्य स्वार्थे विहित इति तत्तत्कारकशक्तिप्रधानावेवेति तयोर्द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकबोधकत्वरूपं द्विवचनं नेति, उभयशब्देनोभशब्दग्रहणवद्वार्त्तिके कृत्रिमाकृत्रिमयोरुभयोर्द्विवचनयोर्ग्रहणमित्यलम्॥

उभयोऽन्यत्रेति वार्त्तिकस्योभयो मणिरुभये देवमनुष्या इत्येकवचनबहुवचनयोरेव भाष्योदाहरणादुभयशब्दस्य 'तद्धितश्चे'ति लक्षणेन प्राप्ताव्ययसंज्ञावारणाय (तसिलादयः) इति परिगणनाच्चोभयशब्दस्य द्विवचने रूपस्याऽनभिधानमित्यतो नास्त्युभयशब्दस्य द्विवचनमिति कैयटः। उदाहरणमनादरणीयमिति भाष्योक्तवचनेन पचतिरूपम्, पचतिकल्पमित्यादावव्ययत्ववारणाय परिगणनस्य चारितार्थ्यादस्य द्विवचने रूपाभावे विनिगमकाभावादस्तीति हरदत्त—इति भावः॥

ननु उभयशब्दाज्जसि उभय जसिति स्थितौ तयप्स्थानिकाऽय-

जादेशस्य स्थानिवत्त्वेन तस्य तयप्प्रत्ययान्तत्वात् 'प्रथमचरमे'ति विकल्पसंज्ञा दुर्वारेत्यत आह—तस्माज्जस्ययजादेशस्येति। अयम्भावः विकल्पसंज्ञाया विभक्तिसापेक्षत्वेन बहिरङ्गत्वम्, नित्यसंज्ञायास्तु तन्निरपेक्षत्वेनान्तरङ्गत्वमित्यन्तरङ्गत्वान्नित्यसंज्ञाया एव प्रवृत्तिरिति न दोषः, नच नित्यसंज्ञायाः सर्वार्थबोधकत्वरूपार्थस्य निमित्तत्वेन बहिरङ्गत्वमिति वाच्यम्। तादृशार्थस्योभयत्रापि निमित्तत्वात्। अर्थकृतबहिरङ्गत्वस्यानाश्रयणाच्चेति प्राञ्चः। नव्यास्तु—भाष्येऽयचः प्रत्ययान्तरत्वेन स्थानिवत्त्वं दुर्लभम्। किञ्च 'प्रथमचरमे'ति विकल्पविधायकशास्त्रस्य पक्षेऽभावबोधकत्वेन निषेधे तात्पर्य्यात् १(निषेधाश्च बलीयांसः) इति परिभाषया विकल्पसंज्ञाया एव प्राप्तिः। किञ्च युगपत्प्राप्त्यसम्भवात् (अन्तरङ्गं बलीयः) इत्यस्य नेह विषयः, संज्ञानामन्योऽन्यं बाध्यबाधकभावो नास्तीति प्रातिपदिकसंज्ञासमकालमेव सर्वनामसंज्ञाप्रवृत्तिः। अत एव सर्वनाम्नो विहितत्वेन शीभावोपपत्तिः। किञ्चान्तरङ्गपरिभाषयाऽपि समाधानमसमञ्जसम्। अन्तरङ्गे कृते बहिरङ्गासिद्धत्वबोधनस्याऽनया कर्त्तुमशक्यत्वात्। तस्मादत्रोक्तरीत्या यथोद्देशपक्षाश्रयणस्यैवौचित्यादित्याहुरिति दिक्॥

ननु 'न बहुव्रीहावि'ति सूत्रे बहुव्रीहावित्यत्र विषयसप्तमी तेन बहुव्रीहिविषये इत्यर्थस्तत्फलितमाह—बहुव्रीहौ चिकीर्षित इति। विषयसप्तम्याश्रयणे किम्फलमित्याह—त्वकं पिता यस्येति। अयमाशयः, बहुव्रीहौ सर्वनामसंज्ञा नेत्यर्थस्वीकारे युष्मद्सु पितृस्वित्यलौकिकविग्रहवाक्ये समासात्प्रागन्तरङ्गत्वादकचि समासे कृते सर्वनामसंज्ञानिषेधे कृतेऽपि जातस्याकचो निवृत्तिर्न स्याद्यथाऽतिभवकानित्यत्र, तथा सति सुपो लुकि मपर्य्यन्तस्य 'प्रत्ययोत्तरपदयोश्चेति त्वादेशे'नद्यृतश्चे'ति समासात्कपि त्वकत्पितृक इत्यापद्येत, नचाकृतव्यूहपरिभाषया समासोत्तरं सर्वनामसंज्ञानिषेधेन निमित्तविघातस्य जायमानत्वात्प्रागेवाकच् न स्यात्किञ्च जातस्यापि तस्याऽनया निवृत्तिस्स्यादिति वाच्यम्। तस्या अनित्यत्वादसत्त्वाच्चोक्तापत्तेर्दुर्वारत्वात्। विषयसप्तम्या उक्तार्थस्वीकारे तु युष्मद् सु इत्य-

१ निषेधाश्च बलीयांस इति। अन्तरङ्गादुपजीव्यादपि बलवन्त इत्यर्थः। विध्युन्मूलनाय प्रवृत्तिरस्या बीजम्। एतत्परिभाषासत्त्वादेव द्वन्द्वे च विभाषाजसीति चरितार्थम्।

वस्थायामेव बहुव्रीहेश्चिकीर्षितत्वात्सर्वनामसंज्ञानिषेधेनाऽकचोऽप्रवृत्त्या कप्प्रत्यये युष्मत्कसु पितृस्विति स्थितौ समासादिकार्य्ये कृते त्वत्कपितृक इत्यादिसिद्धिः फलम् । भाष्यकारस्तु, अकच् स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशयमित्युक्तेस्त्वकत्पितृको मकत्पितृक इत्येव रूपे इष्टापत्तिं कृत्वा प्रत्याचख्यावेतत्सूत्रम् । ननु सूत्रकारभाष्यकारमतेन निषेधविधिरूपत्वाद्विकल्पस्यैवौचित्येन प्रत्याख्यानमयुक्तमित्याशङ्क्य समाधत्ते—यथोत्तरं मुनीनां प्रामाण्यमिति । सूत्रकारापेक्षया वार्त्तिककारस्यैतदपेक्षया भाष्यकारस्य प्रामाण्यम्, एवञ्च प्रकृते भाष्यकारोक्तप्रकार एव ज्यायानिति बोध्यम् । अत्र प्रमाणञ्च, 'धिन्विकृण्व्योरच्चे'ति सूत्रेऽकारविधानमेव, तथाहि तत्र लोपस्याऽनुवृत्तौ वलोपविधानेनैव 'न धातुलोप आर्द्धधातुके'इत्यनेन निषेधाद् गुणाभावेन धिनोतीत्यादिसिद्धावकारविधानं व्यर्थं सज्ज्ञापयति-यथोत्तरं मुनीनामिति । ज्ञापिते च तस्मिन् , उक्तनिषेधसूत्रस्य भाष्यकृता प्रत्याख्यातत्वेन गुणाभावार्थं तत्राऽकारविधानस्यावश्यकत्वेन स्वांशे चारितार्थ्यं जातमिति दिक् ॥

ननु सर्वनामसंज्ञाविधानमविशेषात्सर्वत्र स्यादत आह—(संज्ञोपसर्जनीभूतास्तु न सर्वादयः) संज्ञाभूता उपसर्जनीभूताश्च ये सन्ति ते सर्वनामसंज्ञका न भवन्तीत्यर्थः । यथा, कस्यचित्सर्व इति नाम तस्य चतुर्थ्येकवचने प्रकृतवार्तिकेन सर्वनामसंज्ञानिषेधात्स्मै कार्य्यस्याभावेन सर्वाय देहीत्येव नतु सर्वस्मै, एवमुपसर्जनत्वे, यथा, सर्वमतिक्रान्तोऽतिसर्वस्तस्य चतुर्थ्येकवचने उक्तरीत्या स्मायादिकार्य्याभावादतिसर्वायेत्येवेत्यलम् ॥

उक्तवार्तिकप्रत्याख्यानप्रकारमाह—महासंज्ञाकरणेन तदनुगुणानामेव गणे सन्निवेशादिति । अयम्भाव-, लध्वक्षरं हि संज्ञाकरणमिति भाष्येण टिघुभसंज्ञावत् स इति सर्व इति वाऽल्पाक्षरसंज्ञाकरणादेवेष्टसिद्धौ सर्वनामेति महासंज्ञाकरणसामर्थ्यादन्वर्थमियं संज्ञेति विज्ञायते सर्वेषां नाम सर्वनामेति, तथा च, स्वप्रवृत्तिनिमित्तसमानाधिकरणकृत्स्नधर्माश्रयवाचकत्वरूपसर्वार्थवाचकत्वविशिष्टानामेव गणे पाठात्तेषामेव सूत्रेऽनुकरणत्वावश्यकत्वेन संज्ञाविधानमितरेषां गणेऽपाठादनुकरणत्वासम्भवेन न तेषां संज्ञाविधानम् , एवञ्च संज्ञोपसर्जनीभूतानां गणे पाठाभावादसर्वनामत्वेन स्मायादेः

संज्ञाकार्य्यस्याऽदड्डादेरन्तर्गणकार्य्यस्य चाप्रसक्तया तद्व्यावृत्त्यर्थमुक्तवार्तिकं निष्प्रयोजनमेवेति दिक् ॥

ननु अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशयमिति भाष्योक्त्या प्रकरणविषयस्मरणादेतत्प्रकरणस्थसप्तमीनां प्रथमार्थकत्वं तथाच, 'द्वन्द्वे चे'त्यत्र प्रथमार्थे सप्तमी द्वन्द्वः सर्वनामसंज्ञको न भवतीति तदर्थः, तत्र द्वन्द्वशब्दस्य समुदाये शक्त्या समुदायस्यैव संज्ञानिषेधो नावयवस्य । नचास्यैव तन्निषेधोऽस्तु समुदायस्य मास्त्विति वाच्यम् । तथा सति वक्ष्यमाणदोषापत्तेः तथाहि अवयवमात्रस्य संज्ञानिषेधे तु सर्वार्थवाचकसर्वाद्यन्तत्वेन समुदायस्य संज्ञायां बाधकाभावात्तत्वेन वर्णाश्रमेतराणामित्यत्र सुडापत्तिः, अवयवस्य निषेधेऽपि सर्वार्थवाचकसर्वाद्यन्तत्वस्यानपायेन तत्प्राप्तेः सुलभत्वात् । नच व्यपदेशिवद्भावादवयवस्य द्वन्द्वे विद्यमानत्वात्समुदायस्य च निषेधो भवत्विति वाच्यम् । सत्येवमवयवस्य निषेधे फलाभावात् । एवञ्च पूर्वोक्तप्रकार एव युक्त इत्याशयेनाह—समुदायस्यैवायं निषेध इति ॥

ननु समुदायस्यैव संज्ञानिषेधस्योक्तत्वादवयवस्य तन्निषेधाभावात्तस्य तत्वेन सर्वनामान्ताङ्गात्परस्यामः सुडित्यर्थे प्रकृते सुटो दुर्वारत्वमित्यभिप्रायेणाशङ्कते—नचैवं तदन्तविधिना सुट्प्रसङ्ग इति । सर्वनाम्नो विहितस्यामः सुडिति तद्विधायक शास्त्रस्य व्याख्यानकरणेन प्रकृते आमः समुदायविहितत्वादवयवमात्रात्सर्वनाम्नोऽविहितत्वेन नोक्तापत्तिलेशोऽपीतिभावः । नचाऽवयवस्य सर्वनामत्वादकजापत्तिर्दुर्वारेति वाच्यम् । अवयवमात्रेण कृत्स्नार्थाप्रतीतौ तदप्राप्तेरिति दिक् ।

ननु जराशब्दस्य जरसादेशविधानेन निर्जरशब्दस्य न स्यादित्यत आह—पदाङ्गाधिकारे तस्य च तदन्तस्य चेति । पदमङ्गञ्च विशेष्यं विशेषणेन च तदन्तविधिरित्येतत्सिद्धमिदम् । नन्वेवं निर्जरसमुदायस्यैवादेशापत्तिरित्यत आह [1]निर्दिश्यमानस्यादेशा भवन्तीति ॥

ननु सूत्रे जराशब्दोपादानान्निर्जरघटकजरशब्दस्य जराशब्दत्वाभावादादेशो न स्यादित्यत आह—एकदेशविकृतमनन्यवदिति ॥

१ निर्दिश्यमानस्येति । अत्र षष्ठीस्थाने योगेति सूत्रं प्रमाणम् ।

वृत्तिकृतेति । वृत्तिकृता यत्केषाञ्चिन्मतमुक्तं निर्जरसिन् निर्जरसादिति तेषामयमाशयः, 'विप्रतिषेधे परमि'ति सूत्रे परशब्द इष्टवाची तत्कार्य्यञ्च पूर्वविप्रतिषेधेन विभक्त्यादेशः, भाष्यकृताऽस्यैव सिद्धान्तितत्वात्, तथाहि, 'जराया जरसन्यतरस्यामि'ति सूत्रे भाष्येऽजरांसीत्यत्र नुम्जरसोः प्राप्तयोर्विप्रतिषेधेन जरसित्युक्तं तद्विभक्त्यादेशस्येष्टकार्य्यत्वे सत्येव सङ्गच्छते, अन्यथा भवद्रीत्या शीभावात्प्रागेव जरसः प्रवृत्तौ तदानीं सर्वनामस्थानाभावान्नुमोऽप्राप्त्या तेन सह विप्रतिषेधविचारस्य भगवता कृतस्य स्पष्टैवासङ्गतिः स्यात्, मन्नये तु जरसः प्राग् शीभावे जाते तस्य सर्वनामस्थानत्वेन नुमः प्रसक्तावनेन जरसो विप्रतिषेधविचारो भाष्यकृत्कृतः सङ्गत एव, एवञ्च प्रकृते विभक्त्यादेशजरसादेशयोः प्राप्तौ पूर्वं पूर्वविप्रतिषेधेन विभक्त्यादेशे कृते तत एसि कर्त्तव्ये ऐस्करणस्य, अदादेशे कर्त्तव्ये आत्करणस्य च १( सन्निपात ) परिभाषाऽनित्यत्वे विनिगमकत्वात्तदप्रवृत्तौ जरसि निर्जरसिन् निर्जरसादितिरूपं निर्बाधमेवेति, तन्मताऽनुयायिनोऽप्येवमेवाहुः, परमेतद्भाष्यविरुद्धम्, तथाहि, भाष्यकृता 'बहुवचने झल्येत्' 'ओसिच्', आङि च' 'आपः सम्बुद्धौ चे'ति क्रमेण सूत्रपाठमङ्गीकृत्याऽऽङ्परे एत्वमित्यर्थेन रामेण, अकारोच्चारणसामर्थ्यात्पररूपस्य बाधे दीर्घेण रामादिति चोपपाद्याऽऽति दीर्घोच्चारणमिने इकारोच्चारणञ्च प्रत्याख्यातम्। उक्तरूपस्येष्टत्वे तु अतिजरैरिति भवितव्यं सन्निपातपरिभाषयेति भाष्यात् प्रत्याख्यानपरभाष्याच्च विरोधः स्यात् । तदुक्तं फलैक्ये प्रत्याख्यानं सम्भवति न तु फलभेद इति, प्राग्विभक्त्यादेशे इकारोच्चारणसत्त्वे निर्जरसिन् इदानीं निर्जरेण, एवमातिदीर्घोच्चारणसद्भावे

---

तथाहि, 'षष्ठीस्थाने योगे'ति सूत्रमावर्तते तत्र द्वितीयस्यायमर्थः, षष्ठीत्यस्य प्रत्ययग्रहणपरिभाषया षष्ठ्यन्तमित्यर्थः, निर्दिश्यमानमितिपदस्याध्याहारः, तथा च षष्ठ्यन्तं निर्दिश्यमानं स्थाननिरूपितसम्बन्धेन युज्यते सूत्रे निर्दिश्यमानस्योच्चार्यमाणस्य षष्ठ्यन्तस्य कार्यासम्भवेन तत्सजातीयं गृह्यते, अतः सिद्धं निर्दिश्यमानस्येति ।

१ सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति परिभाषास्वरूपम् ।

निर्जरसात् अधुना निर्जरसदिति फलभेदात्प्रत्याख्यानासम्भवेन विरोधस्य स्पष्टत्वादुपेक्ष्यं तन्मतमिति भावः । नच नकारोच्चारणप्रत्याख्याने अनेनेत्यत्र हलि लोपापत्तिर्दुर्वारेति वाच्यम् । 'टौसोरनक्' 'आपि लोप' इति सूत्रकरणेनोक्तापत्तेरभावात् । किञ्च 'अनाप्यक' इति सूत्रे, अ इति नपुंसकनिर्देशात् नकारे आपि च परे अनादेश इत्यर्थे विशिष्य नकारेऽनादेशविधानसामर्थ्यादुक्तलोपस्य वाधादिति दिक् ॥

ननु प्रत्यैषिषन्नित्यादौ पररूपस्य स्थानिवद्भावादकारव्यवधानद्वारा णुत्वभावायाऽऽवश्यकेन 'अचः परस्मिन्नि'त्यत्र पूर्वविधावित्यस्याऽऽवृत्त्या लब्धेन पञ्चमीसमासेन दोष्णः इत्यत्राऽकारलोपस्य स्थानिवद्भावेन व्यवधानान्नकारस्य षकाराऽव्यवहितोत्तरत्वाभावेन णत्वं न स्यादित्याशङ्क्य समाधत्ते—इह पूर्वस्मादपीति । उक्तरीत्या स्थानिवत्त्वादकारव्यवधाने तु 'अट्कुप्वाङ् नुमि'त्यनेन तत्र णत्वमिति बोध्यम् । किञ्च प्रविगण्य्येति भाष्योदाहरणसिद्धये पञ्चमीसमासस्याऽनित्यत्वाऽभ्युपगमे तु 'रषाभ्यामि'त्यनेनैव णत्वं सुलभमिति न कश्चिद्दोषः, तदनित्यत्वे च पूर्वोक्तभाष्योदाहरणमेव मानम्, अन्यथाऽल्लोपस्य स्थानिवत्त्वेनाऽकारव्यवधानाल्लघुपूर्वकत्वाऽभावेन 'ल्यपि लघुपूर्वादि'ति णेरयादेशो न स्यात्, अत एव हे गौरित्यत्र वृद्धेः स्थानिवत्त्वेन सम्बुद्धिलोपो नेत्यभिप्रायेणाह—इति पत्नेलिति । अनित्यत्वसूचक एव तु शब्दः प्रयुक्त इति भावः ।

पूर्वत्रासिद्धेनेति । अतिदेशशास्त्रदृष्ट्या त्रैपादिकशास्त्रस्यासिद्धत्वान्न्यायसिद्धोऽयम् । तत्फलन्तु वतिघटितानामतिदेशान्तराणां त्रिपाद्यामपि प्रवृत्तिरूपम् तेषान्तत्र प्रवृत्तिस्वीकारादेव, अमी, चीरपेणेत्यादौ मीत्वणत्वे भवतः, अन्यथाऽतिदेशदृष्ट्या मीत्वणत्वयोस्त्रैपादिकत्वेनाऽसिद्धत्वात्तौ न स्याताम् । अत्रैकारस्यादःशब्दसम्बन्धित्वं पे इत्यस्यैकाजुत्तरपदत्वञ्चान्तवद्भावाधीनमिति भावः ॥

तस्य दोष इति । वाचनिकमेवेदमस्तु ज्ञापकसिद्धम् । नच 'न मुने' इति सूत्रे ने इति योगविभागेन ज्ञापितमस्तु तद्वाचनिककथनमयुक्तमिति वाच्यम् । भाष्ये योगविभागस्यादर्शनेन ज्ञापकसिद्धत्वस्यासम्भवात् । अत एव वार्त्तिककृता सिद्धकाण्डमारब्धं 'न लोपः सुपि'ति सूत्रञ्च सूत्रकृता कृतम् । अस्योदाहरणानि च, चक्रयत्र, निगाल्यते माषवरनीत्यादीनि बोध्यानीति दिक् ॥

ननु भाष्ये ककुच्च दोश्चेति द्वन्द्वे प्रातिपदिकत्वेनौविभक्तौ 'पद्न्नि'ति सूत्रेण, औवित्यस्य शसादित्वाभावाद्दोषन्नादेशो न स्यादत आह—प्रभृतिग्रहणं प्रकारार्थमिति। प्रकारो भेदसादृश्यं, तच्च, साधारणधर्मसम्बन्धप्रयोज्यं, साधारणधर्मवत्त्वञ्चोपमानोपमेयोभयवृत्ति, उपमानत्वञ्च साधारणधर्मवत्त्वेनेषदितरपरिच्छेदकत्वम्, उपमेयत्वमप्येवमेव, तथा च, साधारणधर्मस्य सुप्त्वस्य स्वादौ शसादौ च वृत्तित्वात्तेनैव सादृश्यग्रहणन्न तु शब्दत्वेनेति बोध्यम्। सुप्त्वेन सादृश्यग्रहणे ककुद्दोषणीति भाष्यप्रयोग एव मानम्, तथाहि, शस्प्रभृतिष्वित्युच्यतेऽशस्प्रभृतिष्वपि दृश्यते ककुद्दोषणी याचते महादेव इत्युक्तम्भाष्ये, तेन सुप्त्वेनैव साश्यग्रहणे भाष्यकृत्तात्पर्य्यम्। अत एव 'हृदयस्य हृल्लेषयदण्लासेषु' 'वा शोकष्यञ् रोगेष्वि'ति सूत्रद्वयं सङ्गच्छते, अन्यथा, शब्दत्वेन सादृश्यग्रहणेनैव हृल्लेषः, हृच्छोक इत्याद्युपपत्तावुक्तसूत्रद्वयस्य वैयर्थ्यं स्यात्। नच सुप्त्वेन सादृश्यग्रहणे स्वादावपि सर्वत्र पदाद्यादेशापत्तिरिति वाच्यम्। सुप्रभृतिष्वित्यस्य वक्तव्यत्वे शस्प्रभृतिष्वति कथनात्क्वचिदेवाऽन्यत्र तद्विधानात्। एवञ्चावित्यस्य स्वरूपेण शस्भिन्नत्वं सुप्त्वेन तत्सादृश्यञ्च, ततस्तस्मिन्परे दोषन्नादेशे ककुद्दोषणीति सिद्धम्। फलञ्च, पदङ्घ्रिश्चरणोऽस्त्रियां स्वान्तं हृन्मानसं मन इत्यादौ 'न लुमतेऽ'त्यस्याऽनित्यत्वात्प्रत्ययलक्षणेनाऽन्तर्वर्त्तिविभक्त्या सुप्परत्वेन पादशब्दस्य पदादेशो हृदयस्य हृन्नावश्च सूपपन्न इतिदिक्॥

ननु विश्वपाशब्दस्य प्रथमाद्वितीययोर्द्विवचने प्राप्तपूर्वसवर्णदीर्घस्य 'नादिची'त्यनेन निषेधाज्जसि सत्यपि तस्मिन्नदोषाच्चेष्टरूपसिद्धौ 'दीर्घाज्जसि चे'ति सूत्रं व्यर्थमित्याशङ्क्य समाधत्ते—यद्यप्यौङि नादिचीत्येव सिद्धमिति। अयम्भावः, उक्तसूत्राभावे गौर्य्यौ गौर्य्य इत्यादौ नादिचीत्यस्य प्राप्त्या निषेधाभावात्पूर्वसवर्णत्वेऽनिष्टरूपापत्तिरिति तन्निषेधार्थमावश्यकं दीर्घाज्जसि चेति सूत्रमिति। नच 'यूस्त्र्याख्यौ नदी' 'ल्वादिभ्यः'इत्यादिनिर्देशादिक्प्रत्याहाराऽच्प्रत्याहारयोरेव निरुढलक्षणाङ्गीकाराद्दीर्घस्याच्त्वाभावेन गौर्य्यावित्यादौ पूर्वसवर्णदीर्घाऽप्रसक्त्या निषेधसूत्रं व्यर्थमेवेति वाच्यम्। एतन्निषेधसामर्थ्यादेवेगज्भिन्नप्रत्याहारेष्वप्युक्तलक्षणास्वीकारात्। अत एव, शसि गौरीरित्यादौ पूर्वसवर्णदीर्घसिद्धिः, अन्यथोक्तरीत्या न स्यात्। केचित्तु, 'प्रथमयोः पूर्वसवर्णदीर्घ'इत्य-

स्याऽनन्तरं दीर्घाच्छस्येव पूर्वसवर्णदीर्घ इत्यर्थकदीर्घाच्छसीत्येव सूत्रकरणाच्चकाराकरणेन नेत्यस्यानुवर्त्तनेन च लाघवमित्याहुः । केचिच्च शसि पूर्वसवर्णदीर्घश्चेद्दीर्घादेवेति विपरीतनियमवारणाय 'नृन्पे' 'कानाम्रेडिते' इत्याद्यनुसन्धाने ज्ञानगौरवाद्यथोक्तन्यास एव युक्तियुक्त इति वदन्तीति दिक् ॥

ननु 'आतः' इत्येव सूत्रमस्तु लोपानुवृत्तावाकारान्तं यदङ्गं भं तस्य लोप इत्यर्थे विश्वप इत्यादिसिद्धौ धातोरिति व्यर्थमित्याशयेन शङ्कते—धातोः किमिति । समाधत्ते—हाहानिति । अव्युत्पन्नमिदम्, हाहा हूहूश्चैवमाद्या इत्यमरोक्तेः । अत्राऽऽकारलोपेनेष्टप्रयोगानापत्तिरिति तदर्थमावश्यकं धातुग्रहणं तस्य सत्त्वे धातुत्वाभावाच्च तत्राऽऽकारलोपः । नचाऽस्य हेति कष्टं जहातीति व्युत्पत्त्या क्रियाशब्दत्वाल्लोपस्येष्टत्वे प्रत्युदाहरणदानमयुक्तमिति वाच्यम् । तथा सति सानित्यस्यैव प्रत्युदाहरणत्वात् । अकारो वासुदेवस्तेन सह वर्तन्त इति सास्तान् सानिति तदुपपत्तेरिति प्राञ्चः ।

नव्यास्तु 'क्त्वः श्वः' इत्यादिसौत्रप्रयोगोपपत्तये वार्त्तिककृतोपन्यस्तस्य ( आतो नापः ) इति वार्त्तिकस्य 'आतो धातोरि'त्यत्राऽऽत इति योगविभागेनोक्तसौत्रप्रयोगोपपत्तिं विधाय भगवता प्रत्याख्यानकरणादुक्तप्रत्युदाहरणप्रयोगस्याभिधाने तु लोपस्येष्टापत्तिरेव । नचैवं व्याख्याभावेन सूत्रे धातुग्रहणमेव तदा व्यर्थमिति वाच्यम् । आबन्तनिवृत्त्यर्थं तस्याऽऽवश्यकत्वेन सार्थक्यात् । नचाऽऽकारान्तेभ्य आचारक्विपि तदन्तात्कर्तृक्विपि तत्र लोपार्थमस्तु धातोर्ग्रहणमिति वाच्यम् । तादृशप्रयोगस्याऽनभिधानादित्यलम् ॥

ननु नित्यस्त्रीलिङ्गयोर्दीर्घेदूदन्तयोः 'यूस्त्र्याख्यौ नदी'त्यनेन नदीत्वविधानं दीर्घेदूदन्तयोः स्त्रीलिङ्गयोर्ह्रस्वेदुदन्तयोः 'ङिति ह्रस्वश्चे'त्यनेन वैकल्पिकन्तद्विधानं प्रकृतेऽपि यूह्रस्वपदयोरनुवर्त्तनात्सामान्यतस्तत्र घिसंज्ञाविधानादिष्टरूपोपपत्तौ शेषग्रहणं व्यर्थमित्यभिप्रायेण शङ्कते—शेषः किमिति । उत्तरयति—मत्यै इति । अयमभिप्रायः, अत्र नदीसंज्ञापत्ते घित्वात् 'आण्नद्याः' इत्यादि गुणाऽवादेशयोर्नेष्टरूपसिद्धिरिति समाधातुरभिप्रायः, वस्तुतस्तु पुलिङ्गे नपुंसके च सावकाशाया घिसंज्ञाया परत्वादपवादत्वाच्च नदीसंज्ञया बाधेन तदप्राप्तौ शेषग्रहणं व्यर्थं, नच गवां पत्यै स्त्रियै इत्यादौ नदीसंज्ञायास्सावकाशत्वादपवादत्वासम्भवेन घित्वञ्च तथा बाधाना-

पत्तौ प्राप्तदोषव्यावृत्त्यर्थं शेषग्रहणमावश्यकमिति वाच्यम् । नह्येकमुदाहरणं योगारम्भं प्रयोजयतीति भाष्यात् 'पतिः स्त्रियामि'त्यनेनैवोक्तप्रयोगसिद्धौ सामान्यसूत्रस्य वैयर्थ्येनापवादत्वाद्बाधे तद्वैयर्थ्यस्य स्पष्टत्वात् । इत्याशयेनाह—एकसंज्ञाधिकारात्सिद्धे शेषग्रहणं स्पष्टार्थमिति । अधिकारश्च 'कडाराः कर्मधारये' इत्येतदवधिकपतत्पर्य्यन्तमेवाधिकारस्य बुद्धिविषयत्वात् । नचैवं पुरुषपरस्मैपदसंज्ञयोरेकत्र समावेशानापत्ति रनापत्तिश्च गुरुनदीसंज्ञयोर्लघुघिसंज्ञयोश्चैकत्र समावेशस्येति वाच्यम् । पूर्वत्र 'णलुत्तमो वे'ति ज्ञापकादेव तदुपपत्तेः । परत्र वर्णस्य लघुगुरुसंज्ञे तदन्तस्य च घिनदी संज्ञे इति भिन्नाऽवधिकत्वेन समावेशादित्यलम् ॥

ह्रस्वौ किम् । वातप्रम्ये । ह्रस्वग्रहणाकरणे यू इत्यनुवृत्तौ दीर्घयोरेव घित्वविधानाद्ध्रस्वयोरप्राप्त्या मूलोक्तप्रत्युदाहरणासङ्गतिः । नच 'शेषोघ्यसखी'त्यत्राऽसखीति पर्य्युदासकरणात् 'पतिः समास एवे'त्यस्यारम्भसामर्थ्याच्च ह्रस्वयोरेव घित्वं न दीर्घयोरिति न दोष इति वाच्यम् । इच्छार्थकयजन्तात्सखीयतेः क्विपि निष्पन्ने सखीः, पतीरित्यत्र घित्वाभावाय तयोश्चारितार्थ्यात् । नच 'अच्चघेः' इत्याद्यारम्भसामर्थ्याद्ध्रस्वयोरेव तत्स्यादिति वाच्यम् । अनेककष्टकल्पनाऽपेक्षया ह्रस्वग्रहणकरणस्यैव लघीयस्त्वादिति भावः ॥

ननु 'ङिति ह्रस्वश्चे'त्यतोऽनुवृत्तेन ह्रस्वग्रहणेनैव समीहितरूपोपपत्तौ प्रकृतसूत्रे यूग्रहणमनावश्यकमेवेत्यत आह–यु किम् । मात्र इति । अयम्भावः, यूग्रहणाभावे उक्तप्रयोगे घित्वेन गुणापत्त्या नेष्टरूपसिद्धिरिति तत्र घित्वाभावार्थमावश्यकं तत् । नच 'ऋतोङी' त्यारम्भसामर्थ्याद्दन्तेभ्यो गुणश्चेन्ङावेवेति नियमाश्रयणात्प्रकृते दोषाभावेन परिच्छेतृवाचिमातृशब्दस्य तृतीयैकवचने घित्वे नात्वापत्त्या मात्रेत्येव प्रत्युदाहरणं युक्तमिति वाच्यम् । उक्तगुणविधायकशास्त्रस्य यूग्रहणाऽनुवृत्तावेव तात्पर्य्यग्राहकत्वादित्यलमतिविस्तरेण ॥

दीर्घात्किम् । निष्कौशाम्बिः, अतिखट्व इति । अस्यायम्भावः, कौशाम्ब्या निष्क्रान्तः, खट्वामतिक्रान्त इति विग्रहे पूर्वत्र ( निरादयः क्रान्ताद्यर्थे पञ्चम्या ) इत्यनेन परत्र च ( अत्यादयः क्रान्ताद्यर्थे द्वितीयया ) इत्यनेन समासे 'गोस्त्रियोरि'ति ह्रस्वे उक्तप्रयोगद्वयसिद्धिः । अत्र दीर्घादित्यस्याग्रहणे स्थानिवत्त्वेन ङ्याबन्त-

त्वात्ततः परस्य सोर्लोपापत्तिः । न च समस्तस्य ङ्याबन्तत्वाभावेन न तत्र दोषः । न च स्त्रीप्रत्यये न तदादिनियम इति वाच्यम् । अनुपसर्जने तदभावेऽप्युपसर्जने तत्सत्त्वे बाधकाभावात् । अन्यथाऽति कारीषगन्ध्यापुत्र इत्यत्र ष्यङन्तपूर्वपदलक्षणसंप्रसारणापत्तेर्दुर्वारत्वादिति वाच्यम् । उत्तरपदस्य ङ्याबन्तत्वेन सोस्ततः परत्वेन दीर्घग्रहणाऽभावे सुलोपस्य दुर्निवारत्वात् । न च ङ्याब्ग्रहणस्य विहितविशेषणत्वाभ्युपगमे न तत्रोक्तापत्तिलेशोऽपीति वाच्यम् । तस्य विहितविशेषणत्वानङ्गीकारेण दोषस्य तादवस्थ्यात् । नच ङ्याब्ग्रहणस्य परविशेषणत्वे आत्मनो गङ्गामिच्छति गङ्गीयति ततः क्विपि, अलोपे यलोपे च गङ्गीरित्यत्रेकारे स्थानिवद्भावादाबन्तत्वेन दीर्घत्वस्य स्वाश्रयत्वेन च सुलोपापत्तिः, नचाल्लोपस्य स्थानिवत्त्वेन सोरापः परत्वाभावान्न दोष इति वाच्यम् (क्वौ लुप्तं न स्थानिवदि)ति स्थानिवत्त्वनिषेधादिति वाच्यम् । ङी ई आ आबिति प्रश्लेषेण दीर्घग्रहणस्य प्रत्याख्याततत्वादिहाऽऽरूपस्याऽऽपोऽभावेनोक्तापत्तेरयोगादिति दिक् ॥

ननु 'हल्ङ्याबि'ति सूत्रे पूर्वहल्ग्रहणाभावेऽपि दीर्घीभूतान्ङ्याबन्तात्परस्य सोर्लोप इत्यर्थेनैव सकलेष्टसिद्धिः, न च तदभावे लिट् धुगित्यादौ सुलोपानापत्तिरिति वाच्यम् । तत्र 'संयोगान्तस्य लोप' इत्यनेनैव तदुपपत्तेः । एवञ्च व्यर्थमेव तद्ग्रहणमित्याशयेनाशङ्कते--प्रथमहल् किमिति । समाधत्ते--राजेति । अयम्भावः, अत्र संयोगान्तलोपस्याऽसिद्धत्वेन नलोपानापत्तावुक्तरूपाऽसिद्धिरिति तद्ग्रहणमावश्यकं तस्मिन् सति प्रकृतसूत्रेण सुलोपेऽस्य नलोपदृष्ट्याऽसिद्धत्वाऽभावेन नलोपे रूपसिद्धिरिति । नच 'न ङिसम्बुद्ध्योरि'ति सूत्रस्थसम्बुद्धिग्रहणेन नलोपे कर्त्तव्ये संयोगान्तलोपस्याऽसिद्धत्वाभावज्ञापनान्न दोषः, अन्यथा सम्बुद्धौ हे राजन्नित्यत्राप्युक्तलोपस्यासिद्धत्वेन नलोपाऽप्राप्त्या तदर्थं कृतस्य सम्बुद्धिग्रहणस्य स्पष्टमेव वैयर्थ्यमिति वाच्यम् । क्लीबे हे ब्रह्मन्नित्यत्र 'स्वमो र्नपुंसकादि'ति सुलोपे तद्दृष्ट्या नलोपस्य सिद्धत्वेन प्राप्तनलोपव्यावृत्त्यर्थं सम्बुद्धिग्रहणस्याऽऽवश्यकत्वेन सार्थक्यात् । नच (सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः) इतिवार्तिकेनैवोक्तप्रयोगसिद्धौ सम्बुद्धिग्रहणस्य युक्तमेव ज्ञापकत्वमिति वाच्यम् । तथा सति गोमानित्यत्रापि नलोपापत्तेः । नच ज्ञापकसाजात्यादुक्तज्ञापनस्य सम्बुद्धिविषयक-

त्वाभ्युपगमेन नियमानाऽऽक्रान्तत्वात्संयोगान्तलोपस्याऽसिद्धत्वाऽभावाऽभावेन नोक्तदोषस्य सम्भव इति वाच्यम्। लघ्यानुरोधेन सामान्याऽपेक्षस्य ज्ञापनस्य सम्भवे विशेषापेक्षस्य तस्य त्याज्यत्वात् एवञ्च सामान्याऽपेक्षनियमेन न राजेत्यत्र नलोपाऽनुपपत्तिः, नचैवं गोमानित्यत्राऽपि नलोपो दुर्वार एवेति वाच्यम्। ज्ञापकसाजात्येन यत्र नकारविभक्त्योरानन्तर्य्यं तद्विषयकोऽयन्नियम इत्यभ्युपगमेन प्रकृते तकारव्यवधानान्नकारविभक्त्योरानन्तर्य्याऽभावेनाऽदोषात्। एवञ्च पुनर्व्यर्थमेव हल्ग्रहणमिति चेदुच्यते, तदभावेऽभिनोऽत्रेत्यत्र संयोगान्तलोपस्याऽसिद्धत्वेन 'सिपि दश्चे'ति रुत्वानापत्तिः, सति तु तस्मिन्ननेन लोपेऽस्य रुत्वदृष्ट्या सिद्धत्वाच्च तदनुपपत्तिः, नच रोरुत्वे कर्त्तव्ये न संयोगान्तलोपोऽसिद्ध इत्यर्थकेन (संयोगान्तलोपो रोरुत्वे) इति वार्त्तिकेनैवाऽभिनोऽत्रेत्यत्र संयोगान्तलोपस्यासिद्धत्वाभावेन दोषाऽभावाद्व्यर्थन्तदिति वाच्यम्। अविभर्भवान्, अजागर्भवानित्यत्र नलोपाऽनुपपत्तिवारणाय तदावश्यकत्वात्। तस्मादाऽऽवश्यकं हल्ग्रहणम्। तदुक्तम्। संयोगान्तस्य लोपे हि नलोपाऽऽदिर्न सिद्ध्यति। रात्तु तेनैव लोपः स्याद्धलस्तस्माद्विधीयते इति नच 'रात्सस्ये'ति सूत्रे तकारस्याऽपि प्रश्लेषेण तत्र लोपोपपत्तावकिञ्चित्करमेव तद्ग्रहणमिति वाच्यम्। प्रश्लेषे प्रमाणाऽभावेन तदुपपत्त्यर्थं तस्य साफल्यात्। प्रश्लेषाऽभ्युपगमे अववर्त्तदित्यत्र तलोपापत्तेश्चेति दिक्॥

ननु शोभनः सखेति विग्रहे 'राजाहः सखिभ्य' इति टचि सुसख इत्येवं रूपस्य लक्षणसम्मतत्वे सुसखेति रूपोल्लेखस्य कथं संगतिरिति चेन्मैवम्। 'न पूजनादि'ति निषेधेन टचोऽप्रवृत्तेरित्यत आह– शोभनः सखा सुसखेति। एवमतिशयितः सखाऽतिसखेत्यत्रापि टचोऽप्रवृत्तिरिति बोध्यम्॥

ननु 'अनङ् सावि'त्यादौ सखिशब्दस्य ग्रहणात्तस्यैवाऽनङादिकार्य्यं स्यान्न तु सुसखिशब्दस्य तत्र तस्याऽग्रहणादित्याशङ्क्य समाधत्ते–आङ्गत्वात्तदन्तस्याऽप्यनङिति। अनङादिकार्य्यस्याऽङ्गाधिकारीयत्वेनाऽङ्गस्येत्यधिकारेण तं प्रति सखिशब्दस्य विशेषणत्वात् 'येन विधिस्तदन्तस्ये'ति तदन्तविधौ सखिशब्दान्तस्यानङित्यर्थे सुसखिशब्देऽप्यनङादिकार्य्यस्य सौलभ्यमेवेति भावः। नचैवं सखि-

शब्दस्यैवाऽनङादिकार्य्यं न स्यात्केवलस्य तस्य सखिशब्दान्तत्वाऽभावादिति वाच्यम्। केवले तस्मिन् व्यपदेशिवद्भावेन तत्तत्कार्य्यैः प्रवृत्तेरित्यलम् ॥

ननु 'शेषोऽघ्यसखी'ति सूत्रेऽसमर्थसमासादिदोषभिया प्रसज्यप्रतिषेधीयस्य नञोऽग्रहणेन पर्य्युदासस्य ग्रहणात्तस्य च सदृशग्राहित्वेन सखिसादृश्यस्य समुदायस्य नास्तीत्यभिप्रायेणाऽऽचष्टे—समुदायस्य सखिरूपत्वाभावादित्यादि । एतस्या इत्थमाशयं वर्णयति नागेशः, तथाहि, असखीत्यस्य सखिभिन्नावयवयोरिदुतोर्घित्वमिति वर्णसंज्ञापक्षेऽर्थः, सखिभिन्नावयवौ याविकारोकारौ तदन्तयोर्घित्वमिति तदन्तसंज्ञापक्षे चार्थः । तथा च, समुदायस्य सुसखीत्यस्य सखिभिन्नत्वात्सुलभैव घिसंज्ञा । भाष्यकृन्मते तु प्रकृते घिसंज्ञा नैव लभ्यते सखिशब्दस्य तदवयवे लक्षणया सख्यवयवभिन्नयोरिदुतोस्तदन्तयो र्वा घित्वमित्यर्थे सुसखिघटकेकारस्य सख्यवयवत्वेन तद्भिन्नत्वाभावात्सूत्राऽप्रवृत्तेरिति दिक् ॥

ननु परमश्चासौ सखा चेति विग्रहे पूजाऽर्थस्याऽगम्यमानत्वेन 'न पूजनादि'ति निषेधाऽप्रवृत्त्या 'राजाहः सखिभ्य' इति टच् दुर्वार इत्याशङ्क्य समाधत्ते–परमः सखा यस्येति विग्रह इति । तत्पुरुषे टचः प्रवृत्तिरयन्तु बहुव्रीहिरिति नोक्तापत्तिलेश इति भावः ॥

ननु परमः सखा यस्येति बहुव्रीहौ प्राचीनमतसिद्धस्येतरपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वरूपगौणत्वस्य सत्वात् १(गौणमुख्य) न्यायप्रवृत्त्या कथमनङादिकार्य्यप्रवृत्तिरिति सन्देहस्य प्रादुर्भावे तन्वारयति–गौणत्वेऽपीति । यथा गौणेऽपि परमाऽस्थ्यादिशब्दे भवत्यनङादिस्तद्वदिहापीति भावः । नच शङ्कादलीयोक्तन्यायस्य बाधकरूपस्य सत्त्वादनङादिकार्य्येन स्यादिति वाच्यम् । प्रकृते वक्ष्यमाणगौणत्वाभावादुक्तन्यायाप्रवृत्तेः। अप्रसिद्धत्वगौणलाक्षणिक-

---

१ गौणमुख्येति । गौणमुख्ययोर्मुख्ये कार्य संप्रत्ययः इति तत्स्वरूपम् गौणमुख्ययोरर्थयोर्मध्ये मुख्य एवार्थे कार्यसंप्रत्ययः, मुख्यार्थबोधक एव शब्दे कार्यप्रवृत्तिरित्यर्थः । अर्थवद्ग्रहणपरिभाषाया विशिष्टरूपोपादान एव प्रवृत्त्या तदङ्गत्वेनास्या अपि तत्रैव प्रवृत्तिरुचितेत्येवं बीजम् ।

त्वोभयविधस्यैव गौणत्वस्याभ्युपगमात्। किञ्चोक्तन्यायस्य पदकार्य्यविषयकत्वेन स्त्रीत्वानिमित्तकत्वे सति सुविभक्त्यनिमित्तकत्वरूपपदकार्य्यत्वाभावात्तदप्रवृत्तेश्च। प्राचीनोक्तं लक्षणं तूपसर्जनस्य न तु गौणत्वस्येति न तादृशगौणत्वस्येह ग्रहणमित्यलम्॥

ननु 'सख्यशिश्वी'ति भाषायामि'ति ङीषन्तेऽपि सखीशब्दे १ (लिङ्गविशिष्ट) परिभाषया सखिशब्दकार्य्यस्याऽनङादेरापत्तेरित्यत आह—अनित्यत्वादिति। अनित्यत्वे प्रमाणञ्च, (शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीग्रहणेष्विति वार्त्तिके घटशब्दात्पृथक् घटीग्रहणमेवेति॥

ननु बाधकाभावादविशेषेणोपसर्जनेऽपि त्रयादेशः स्यादित्यत आह-गौणत्वे तु नेतीति। नोपसर्जन इति तदर्थः। 'आमि सर्वनाम्न' इत्यस्य यथाऽनुपसर्जने एव प्रवृत्तिस्तत्साहचर्य्यादस्यापि तत्रैवेति भावः।

ननु साहचर्य्यस्यासार्वत्रिकत्वं सूत्रान्तरस्य साहचर्य्याश्रयणे दृढतरप्रमाणञ्च नास्तीत्यरुचेराह—वस्तुतस्तु प्रियत्रयाणामिति। नच गौणमुख्यन्यायस्य तु जागरूकत्वात्कथमत्र त्रयादेश इति वाच्यम्। अप्रसिद्धत्वगौणलाक्षणिकत्वरूपान्यतररूपगौणत्वाभावात्तदप्रवृत्तेः। अत एव वार्त्तिककृतोपसर्जनानां सर्वनामत्वनिषेध आरब्धः अन्यथोक्तन्यायेनैवोपसर्जनानां सर्वनामत्वनिषेधसिद्धौ तन्निषेधवचनस्य वार्त्तिककृता कृतस्य स्पष्टमेव वैयर्थ्यं स्यात्। किञ्च तस्य पदकार्य्यविषयकत्वेनात्र तत्त्वाभावादप्रवृत्तेरित्यलम्॥

ननु युष्मदस्मदोर्विशेषविहितैरात्वयत्वलोपैर्बाधेन किमः कादेशविधानेन चात्वाऽप्राप्त्या दोषाऽभावाद्द्विपर्य्यन्तग्रहणं व्यर्थमित्यभिप्रायेण शङ्कते—द्विपर्य्यन्तानां किमिति। समाधत्ते—भवानिति। अयम्भावः, भवत्सु इति स्थितौ तकारस्याऽत्वे 'अतो गुणे' इति पररूपे 'उगिदचामि'ति नुमि 'सर्वनामस्थाने चासम्बुद्धावि'ति दीर्घे 'हल्ङ्याबि'ति सुलोपे 'नलोपः प्रातिपदिकान्तस्ये'ति नलोपे भवेति रूपापत्तिः। किञ्च धिनुणन्ते शमी शमिनावित्यादौ नुमोऽभावाय झल्ग्रहणस्यापकर्षणादुगिज्झलन्तस्यैव नुम्विधानेन प्रकृते स्थानिवत्त्वेनोगित्त्वेऽपि झलन्तत्वाऽभावान्नुमोऽप्राप्त्या रूपासिद्धिः, अत-

१ प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति स्वरूपम्।

स्तदावश्यकं सति च तस्मिन्न तत्प्राप्तिरिति न कश्चिद्दोषः । ननु त्यदादितः प्रागेव भवच्छब्दस्य पाठकरणान्न प्रागुप्रदर्शितलक्ष्यासिद्धिरित्यत आह—भवन्ताविति । त्यदादितः पूर्वं भवच्छब्दस्य पाठे (त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते) इत्यनेन भवच्छब्दस्य शेषापत्तिरतो यथोक्तपाठ एव समादरणीयः, तथा सति पूर्वप्रदर्शितदोषापत्तिर्दुर्वारैवेति द्विपर्य्यन्तग्रहणं कर्त्तव्यमेवेति दिक् ॥

ननु बहुश्रेयसीशब्दान्ङौ तस्याऽऽमि बहुश्रेयसी आमिति स्थितौ 'ह्रस्वनद्यापो नुडि'ति नुडापत्तिर्दुर्वारेति शङ्कां समाधत्ते—इह परत्वादिति । आट्नुटोः प्राप्तयोः परत्वादाटा नुटो बाधेन न नुट् । नचाऽऽटा नुटो बाधेऽपि बाधके प्रवृत्ते बाध्यस्य नुटः प्राप्त्या स स्यादिति वाच्यम् । १(सकृद्गति) न्यायेन बाधे पुनर्बाध्याप्रवृत्तेः । नचाऽपवादो नुगदीर्घत्वस्येति 'दीर्घोऽकित' इति सूत्रस्थभाष्यादागमाऽऽदेशयोरपि बाध्यबाधकभावाऽभ्युपगमेन निरवकाशेनाऽऽमाऽऽटो बाधे पुनराटोऽप्राप्त्या नुटा सहाऽऽटः विप्रतिषेधविचारासङ्गतिः सर्वथैवेति वाच्यम् । निरवकाशरूपापवादशास्त्रप्रवृत्त्युत्तरमुत्सर्गशास्त्रप्रवृत्तौ बाधकाऽभावेनोक्तदोषाऽनवकाशादिति भावः ॥

ननु 'लक्षेर्मुट् चे'त्यौणादिक ई प्रत्यये लक्ष्मीशब्दस्य निष्पन्नत्वान्न 'हल्ङ्या वि' त्यस्याऽप्राप्तिरित्याशयेनाह—अङ्यन्तत्वान्न सुलोपः, अतिलक्ष्मीरिति । (कृदिकारादक्तिनः) इति ङीषितु सुलोप इष्ट एव, अत एव, लक्ष्मी लक्ष्मीर्हरिप्रियेत्युपपन्नमित्यलम् ॥

कुमारीति । नन्वत्र यचोऽकारस्य स्थानिवद्भावादच्परकत्वेन यणापत्तिर्दुर्वारा, नच पदान्तविधौ तन्निषेध इति वाच्यम् । 'नःक्ये' इत्यनेन नान्तस्यैव पदत्वविधानादिहातथात्वेन निषेधाऽप्रवृत्तेः । नच (क्वौ लुप्तं न स्थानिवदि)त्यनेन स्थानिवत्त्वनिषेधान्न

---

१ सकृद्गतीति । सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति तत्स्वरूपम् । विप्रतिषेधे सति सकृत् यद्बाधितं तत् गतौ प्राप्तौ सत्यामपि बाधितमेव न प्रवर्तत इत्यर्थः । उभयरूपेण पूर्वशास्त्रे संकोच इति यावत् । तत्र क्वचिच्चरितार्थयोरेकस्मिन्युगपदुभयोः कार्ययोरसम्भवेन बाधकाभावात्पर्यायेण तृजादिवच्छास्त्रद्वयप्रसङ्गे नियमार्थं विप्रतिषेधसूत्रमिति सकृद्गतिन्यायसिद्धिः ।

यणापत्तिरिति वाच्यम्। सख्युर्गोमान् पदत्वञ्च कौ लुप्तमिति दर्शनाश्रित्यभियुक्तव्यवहारबलेनैतेष्वेव कौ लुप्तन्न स्थानिवदित्यस्य प्रवृत्तेरिति चेन्न। लुनिरित्यादिभाष्योदाहरणोपपत्त्यर्थमन्यत्राऽप्युक्तनिषेधप्रवृत्त्यङ्गीकारादिति भावः॥

ननु 'अचिश्नु धात्वि'ति सूत्रादनुवृत्तस्य धातुपदस्याऽऽवृत्त्योभयोर्विशेषणत्वमङ्गस्य संयोगस्य च तत्र संयोगविशेषणत्वे फलमाह-धातुना संयोगस्य विशेषणादिति। तस्याङ्गविशेषणत्वफलन्तु हरिं, हरी हरीनित्यादिसिद्धिः, अन्यथाऽङ्गस्य धात्ववयवसंयोगपूर्वभिन्नेवर्णान्तत्वेन प्रध्यं प्रध्य इत्यादाविव पूर्वरूपं पूर्वसवर्णदीर्घञ्च बाधित्वा यणापत्तिः स्यात्। यदि चासंयोगपूर्वस्येत्यस्य धात्ववयवसंयोगभिन्नपूर्व इत्यर्थस्तद्भिन्नस्य च धात्ववयवस्यैव ग्रहणं तदा नोक्तस्थले दोषः, अत एव च उदियावित्यादौ न दोष इति भावः॥

ननु गतिकारकेतरपूर्वपदकस्यैव यणो निषेधात्तत्पूर्वपदस्य तूक्तकार्य्यस्येष्टत्वेन दुर्धियो वृश्चिकभिय इत्यादौ गतिकारकपूर्वत्वेन कुतो न यणित्याशङ्कते—कथन्तर्हीति। समाधत्ते—दुःस्थिता धीर्य्येषामिति। दुरित्यस्य दुःशब्दोपात्तदुष्टत्वस्येत्यर्थः, धीशब्दं प्रतीत्यस्य धीशब्दार्थं प्रतीत्यर्थः यत्क्रियायुक्ता इत्यस्य यस्य धातोर्वाच्यया क्रियया युक्ता इत्यर्थः एवञ्च यद्धातुवाच्यक्रियया युक्ताः प्रादयस्तद्धातुवाच्यक्रियाम्प्रत्येव तेषां गतित्वमिति फलितम्। तथाच प्रकृते दुरित्यस्य स्थितिक्रियाम्प्रत्येव गतित्वेन धीशब्दार्थम्प्रति तत्त्वाभावान्न पूर्वत्र यणापत्तिः। एवं बुद्धिकृतमपादानत्वमादाय 'ध्रुवमपायेऽपादानमि'त्यनेनैवेष्टसिद्धिमासाद्य 'भीत्राऽर्थानामि'त्यस्य भाष्यकृता प्रत्याख्यातत्वेनाऽसत्त्वात्तादृशाऽपादानत्वाऽविवक्षणेन कारकपूर्वत्वाभावात्परत्राऽपि नोक्ताऽऽपत्तिः, तत्र सम्बन्धसामान्ये षष्ठ्या समासः, अथवा वृश्चिकसम्बन्धिनी भीः वृश्चिकभीरित्युत्तरपदलोपसमासो बोध्य इति भावः॥

ननु सखायमिच्छति सखीयति ततः क्विपि 'अतो लोपः' इत्यलोपे 'लोपो व्योर्वली'ति यलोपे च सखीरित्यस्य सिद्धिः, नच अलोपस्य स्थानिवत्त्वेन स न स्यादिति वाच्यम्। यलोपे तन्निषेधात्। नच 'वेरपृक्ते' इत्यनेन क्विपि लोपे वल्परत्वाभावेन यलोप एव कथमिति वाच्यम्। उक्तसूत्रविहितलोपात्प्राग्वलिलोपस्यैवेष्टत्वात्।

नचाऽल्लोपस्य स्थानिवत्त्वादच्परत्वेन 'एरनेकाच' इति यणादेशो दुर्वारः, नचाऽन्तर्वर्तिन्या विभक्त्या सखिशब्दस्य पदत्वेन 'न पदान्ते'ति सूत्रेण पदान्तविधौ यणि कर्त्तव्ये स्थानिवत्त्वनिषेधान्नोक्तापत्तिलेशोऽपीति वाच्यम्। 'नः क्ये' इति नियमेन क्यचि नान्तस्यैव पदत्वादिहोक्तनिषेधाऽप्रवृत्त्या स्थानिवत्त्वस्य दुर्वारतयोक्तापत्तेस्तादवस्थ्यात् परपदस्थाऽज्ादेशस्यैव तेन स्थानिवत्त्वनिषेधाच्च। नचाऽन्तरङ्गपरिभाषयाऽन्तरङ्गे यणि कर्त्तव्ये क्विपेक्षत्वेन बहिरङ्गक्यसम्बन्धियलोपस्याऽसिद्धत्वेन स्थानिवत्त्वनिषेधमन्तराऽप्युक्तदोषो न स्यादिति वाच्यम्। उक्तपरिभाषाया अनित्यत्वेन दोषस्य दुरुद्धरत्वादित्यत आह—क्वौ लुप्तं न स्थानिवदिति। लुप्तमिति 'नपुंसके भावे क्तः' लोप इत्यर्थः। गोमत्यतेः क्विपि गोमानितिभाष्योक्तेरेतदपि क्वचित्स्वीकर्त्तव्यम्। सार्वत्रिकन्तु क्वौ विधिं प्रति न स्थानिवदित्येवेति दिक्॥

ननु 'ऋत्यादि'ति सूत्रे प्रयोगस्थस्य विकृतस्याऽनुकरणेनाऽविशेषाद्ध्रस्वदीर्घयोरुभयोर्ग्रहणमित्याशयेनाह—दीर्घस्यापि ग्रहणात्त्वृत्यादित्युत्वमिति।

लुनिरित्यादेः 'ल्वादिभ्यश्च' 'पचो वः' 'शुषः कः' 'प्रस्त्योऽन्यतरस्यामि'त्येतैः सूत्रैर्विहितेषु नत्ववत्वकत्वमत्वेषु ततः क्यचि' अल्लोपे यलोपे च सिद्धिः॥

ननु व्युत्पत्तिपक्षे तृन्नन्तत्वात्तृजन्तत्वाद्वा दीर्घे सिद्धे नप्त्रादिग्रहणं व्यर्थमित्यत आह—सूत्रे नप्त्रादिग्रहणं नियमार्थमिति। तथाचायं नियमः, उणादिनिष्पन्नानां तृन्तृच्प्रत्ययान्तानां संज्ञाशब्दानां दीर्घश्चेन्नप्त्रादीनामेवेति, तेनाऽन्येषामुणादिनिष्पन्नानां संज्ञाशब्दानां पितृमातृप्रभृतीनां नेति, नेष्ट्रादीनामप्युणादिनिष्पन्नत्वादिकपक्षेतोः सत्त्वेन दीर्घसिद्धिः। अव्युत्पत्तिपक्षे तु नप्त्रादिग्रहणस्य विध्यर्थत्वमेव, अत्र पक्षे पितृमातृप्रभृतीनामत्र सूत्रे पाठाऽभावादेव दीर्घशङ्कानिरासः। ननु उद्गातृशब्दस्यौणादिकतृप्रत्ययान्तत्वेऽपि नियमेन व्यावृत्त्या दीर्घो न स्यादित्याशङ्क्य समाधत्ते—भाष्यप्रयोगादिति। उद्गातार इति समर्थसूत्रस्थभाष्यप्रयोगादित्यर्थः, एवञ्चोद्गातृशब्दस्यौणादिषु निष्पत्तिरप्रामाणिकेति भावः। केचित्तु उद्गातृशब्दस्यौणादिकत्वमङ्गीकृत्य भाष्यप्रयोगबलेनैव दीर्घमभिलष्यन्तीति तन्न,

भाष्यकृताऽन्यप्रयोगस्योदाहरणत्वेन दानेऽस्वस्य भाष्यप्रयोगत्वाभावादिति दिक् ॥

ननु क्रोष्टु आमिति स्थितौ नुट्तृज्वद्भावयोः प्राप्तयोः 'विप्रतिषेधे परं कार्य्यमि'ति सूत्रबलेन तृजेव स्यात्। नच तृजपेक्षया नुटो नित्यत्वादेष एव स्यादिति वाच्यम्। कृते तृज्वद्भावे (सन्निपात) परिभाषया नुटोऽप्राप्त्या तस्य नित्यत्वाऽभावात्। एवञ्च परत्वात्पाक्षिकतृजापत्तिर्दुर्वारैवेत्याशयेनाऽऽशङ्कते—परत्वात्तृज्वद्भावे प्राप्त इति। समाधत्ते—(नुमचिरेति)। नुमचिरतृज्वद्भावान्बाधित्वा पूर्वविप्रतिषेधेन नुडेव भवतीति तदर्थः। नुटा नुमादिबाधस्य फलानि वारीणाम्, तिसृणाम्, क्रोष्टूनामित्यादौ नुम्रभावतृज्वद्भावाऽभावरूपाणि बोध्यानि। नच 'अचिर ऋतः' इत्यस्यापवादत्वेन बाध्यसामान्यचिन्ताऽश्रयणे स्वविषये प्राप्तस्य सर्वस्याऽपि बाधकत्वम् अत एव गुणदीर्घोत्वानामपवाद इति संगच्छते। एवञ्च विशेषाऽपदेशेन नुटोऽपि बाधादुत्सर्गाऽपवादयोरसमानबलवत्वेन विप्रतिषेधविचारोऽसंगत इति वाच्यम्। एतदंशे 'न तिसृ' इति ज्ञापकबलेन नुट् नतु विप्रतिषेधेनेति तृज्वत्सूत्रे भाष्योक्तेः। एवन्तर्हि नुम्तृज्वद्भ्यामित्येव सुवचमिति भावः ॥

ननु दीर्घ ॠकारान्तलृकारान्तयोः प्रायः प्रयोगाऽभावादनुकरणशब्दं निरूपयति—कृत् इत्यनयोरनुकरणे लिति। 'यत्तदेतेभ्यः परिमाणे' इतिसूत्रे एतेभ्य इत्यत्र त्यदाद्यत्वकरणादनुकरणस्य प्रकृतिवत्त्वमित्येतत्सिद्धमाह—प्रकृतिवदनुकरणमिति। अनुकरणस्य शब्दमात्रोच्चारणे तात्पर्य्यविषयत्वादनुकार्य्यशब्दस्वरूपमात्रबोधकत्वम्। प्रकृत्याऽनुकार्य्येण तुल्यं वर्तते इति तदर्थः। तत्रैवैकशेषाऽदर्शनात्त्विय इत्यादौ धात्वनुकरणे विभक्तिकरणाच्च वैकल्पिकत्वमित्यत आह—वैकल्पिकाऽतिदेशादिति। १ अनुकरणस्याऽनुकार्य्यश-

१ अनुकार्य्यानुकरणयोर्भेदेऽनुकरणेन बोधार्थं शक्तेःस्वीकर्त्तव्यत्वाच्छक्तिमत्स्वरूपार्थवत्त्वेनैव सर्वमुपपन्नम्। अत एव 'भुवो वुगि' त्यादेः सङ्गतिः। तयोरभेदे तु, अनुकार्य्यनिरूपितशक्त्यैवाऽनुकरणेनाऽपि बोधो भवतीत्यनुकरणस्य शक्तिमत्स्वरूपार्थवत्त्वाऽभावेनाऽप्रातिपदिकत्वान्न विभक्त्युत्पत्तिः, अत एव. भूसत्तायामित्यादि सङ्गतमिति तदाशयः ॥

द्रूपार्थेनार्थवत्त्वात्प्रातिपदिकत्वेन ततः सुबुत्पत्तिः सुलभा। नचैवं 'भू सत्तायामि'त्यादावपि विभक्त्यापत्तिरिति वाच्यम्। एतन्निर्देशादेव क्वचिदनुकरणाद्विभक्त्यनुत्पत्तेरपि स्वीकारात्। 'झलां जश् झशी' त्यादौ जश्त्वाभाववद्गवित्ययमाहेत्यत्र वान्तस्यैवानुकरणादनुकार्य्यस्वरूपस्याविकृतत्वाय न वलोप इत्यलम्॥

ननु इना सह वर्तते इति विग्रहे 'तेन सहेति तुल्ययोगे'इतिबहुव्रीहौ 'वोपसर्जनस्ये'त्यनेन सहस्य समावे 'आद्गुणः'इति गुणे से इति सिद्ध्यति 'अत्रैकादेशस्य पूर्वान्तवत्त्वादव्ययत्वेन सुपोलुक् दुर्वार इति चेन्न। अव्ययमिति महासंज्ञाया अन्वर्थत्वादुपसर्जनेऽव्ययत्वाऽभावेनाऽदोषात्। नचैवमपि सह इ इति स्थितावन्तरङ्गत्वाद्गुणे एकादेशस्य परादिवद्भावे सहशब्दाभावात्पूर्वान्तवद्भावे तु सहशब्दस्योत्तरपदत्वाऽभावादुभयत आश्रयणेऽन्तादिवद्भावस्याऽनिष्टत्वाच्च सहशब्दस्य सादेश एव न स्यात्किञ्च सादेशात्प्रागन्तरङ्गत्वाद्गुणे ततः सादेशेऽदन्तत्वस्यैव सम्भवादेकारान्तत्वाऽभावेन नोक्तापत्तिलेशोऽपीति वाच्यम्। 'नेन्द्रस्य परस्ये'त्युत्तरपदवृद्धिप्रतिषेधेन प्राक् पूर्वोत्तरपदनिमित्तकं कार्य्यं तत एकादेश इति सामान्याऽपेक्षज्ञापनादेकादेशात्प्राग् सादेशे तदुत्तरमेकादेशे पूर्वप्रदर्शिताऽऽपत्तेस्तादवस्थ्यात्। एवञ्च प्रागुक्तसमाधानेनैव दोषव्यावृत्तिरित्यवसेयम्॥

ननु से शब्दाज्जसि से असिति स्थितावेकारस्य पूर्वान्तवद्भावेन पदान्तत्वादयादेशं बाधित्वा 'एङः पदान्तादति' इति पूर्वरूपाऽऽपत्तिरिति चेन्न। अस्य 'धासः से' 'ईशः से' अत्रत्य सेशब्दाऽनुकरणत्वादेकारस्य पदान्तत्वाऽभावेनोक्तापत्तेरभावादिति भावः॥

ननु ओकारान्तात्तद्धितस्य शसोऽसम्भवात्सुप एव तस्य सम्भव इत्याशयेनाह—शसा १साहचर्य्यादिति। कैयटस्तु तद्धितस्यापि शसः सत्वात्तेनाऽपि साहचर्य्यग्रहणस्य कर्त्तुं शक्यत्वेन शसा साहचर्य्यादमः सुप एव ग्रहणे किं विनिगमकमिति सन्दिह्याऽचीत्यधिकारादजादिशसः सुप एव सम्भवो ननु तद्धितस्येति तदाशयमभिहितवान्, तेन, अचिनवम्, असुनवमित्यादावमिपरे नात्वापत्तिर्दोषः।

१ साहचर्यादिति। सहचरितासहचरितयोर्मध्ये सहचरितस्यैव ग्रहणमिति परिभाषयेत्यर्थः।

चिनोतेः, सुनोतेश्च लङि, मध्ये चलौ लकारस्थानिकस्य मिपः 'तस्थस्थमिपामि'त्यमादेशे उवङि चोक्तप्रयोगद्वयोपपत्तिरिति भावः ॥

नन्वु गो अमिति स्थितावमः सर्वनामस्थानत्वेन 'गोतोणिदि'ति णिद्वद्भावे, आत्वात्प्राक्परत्वाद्वृद्धिः स्यादिति चेन्न। अनवकाशेनाऽऽत्वेन वृद्धेर्बाधादित्यत आह—ओतोणिदिति वाच्यमिति। गोतो णिदित्यत्र गकारस्याऽविवक्षितत्वेन लब्धमिदम्, तेन चित्रगुरित्यत्र नोक्तदोषः, अङ्गाऽधिकारे तदन्तविधेः सत्त्वेन गोशब्दाऽन्तात्परस्य सर्वनामस्थानस्य णिद्वद्भाव इत्यर्थे प्रकृते स्थानिवत्त्वाद्गोशब्दान्तत्वेन दोषः स्पष्ट एव, उक्तवचनाऽङ्गीकारे तु चित्रगुरित्यादावोकारान्तत्वाऽभावादल्विधौ स्थानिवत्त्वनिषेधाच्च न दोष इतिप्राञ्चः।

नव्यास्तु–'गोतो णिदि'ति सूत्रे भाष्ये गकारस्य प्रत्याख्यानादुक्तवचनस्याऽसम्भवः। नचैवं चित्रगुरित्यादौ दोषस्य तादवस्थ्यमिति वाच्यम्। गोः पूर्वणित्वाऽत्वस्वरेषु स्थानिवत्त्वप्रतिषेधेन गोशब्दाऽभावेनैवाऽऽदोषात्। नच हे चित्रगो इत्यादौ दोष एवेति वाच्यम्। १ (लक्षणप्रतिपदोक्त) परिभाषयैवाऽत्रत्यदोषस्य व्यावृत्तेः। नचोक्तसूत्रघटकगकारस्य विवक्षितत्वेन गोशब्दात्परस्य सर्वनामस्थानस्यैव णिद्वद्भावविधानेन प्रकृतेऽतथात्वेन सुद्यौरिति न स्यादिति वाच्यम्। (द्योः सर्वनामस्थाने णित्वं वक्तव्यमि)ति 'औतोऽम्शसोरि'ति सूत्रभाष्योक्तवार्त्तिकेनैव निर्वाहादित्याहुरिति दिक्।

नन्वु उक्तरीत्या लब्धे ओतो णिदिति वचने विहितविशेषणाऽभ्युपगमे ओकारान्ताद्विहितस्य सर्वनामस्थानस्य णिद्वद्भाव इति व्याख्यानान्नाऽलक्ष्यदोष इत्यत आह–तेनेह न हे भानो इति। नन्वत्र 'सम्बुद्धौ शाकल्यस्ये'ति सूत्रारम्भसामर्थ्यान्न णिद्वद्भावापत्तिरित्यत आह—हे भानव इति। इत्यजन्ताः पुल्लिङ्गाः ॥

---

१ लक्षणप्रतिपदोक्तेति। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति तत्स्वरूपम्। लाक्षणिकप्रतिपदोक्तशब्दयोर्मध्ये तत्तच्छब्दानुवादविहितरूपप्रतिपदोक्तस्यैव ग्रहणं शीघ्रोपस्थितिकत्वान्नतु लाक्षणिकस्य, तस्य लक्षणानुसन्धानपूर्वकत्वेन विलम्बोपस्थितिकत्वात् शीघ्रोपस्थितिकत्वं विलम्बोपस्थितिकत्वञ्चैतत्परिभाषाबीजम्। भुवश्च महाव्याहृतेरिति सूत्रे महाव्याहृतिग्रहणादनित्या चेयम्।

## अथाजन्तस्त्रीलिङ्गप्रकरणम् ।

ननु सम्बुद्धौ प्रतिपदोक्तत्वेन शीघ्रोपस्थितिकत्वाद्धल्ङ्यादिलो-पात्प्रागेवैत्वे तत्र दीर्घाऽऽकारप्रश्लेषेण स्थानिवत्त्वाऽप्राप्त्या तेन लोपाऽप्राप्तावनेनैव लोपसम्भव इत्यत आह—एङ्ह्रस्वादिति । नच १(सन्निपात) परिभाषाबलात्सम्बुद्धिन्निमित्तीकृत्य जायमानस्यैत्वस्य सम्बुद्धिलोपनिमित्तकत्वाऽभावेन लोपो न स्यादिति वाच्यम् । तस्या २अनित्यत्वेनाऽत्राऽप्रवृत्त्या सम्बुद्धिलोपे बाधाऽभावादिति भावः

ननु रमायै इत्यादौ यत्केनचिदुक्तं 'आटश्चे'ति वृद्धिरिति तन्न याट्स्याटोष्टकारस्य समुदायाऽनुबन्धत्वाट्टकारेत्संज्ञकाऽऽशब्दाऽभा-वादुक्तसूत्रप्रवृत्त्यसम्भवादित्यत आह—'वृद्धिरेचि' रमायै इति ।

ननु आबन्तस्य गणे पाठाऽभावादसर्वनामत्वेन सर्वासामित्यादौ सुण् न स्यादित्याऽऽशङ्क्य समाधत्ते—एकादेशस्य पूर्वाऽन्तवत्त्वेन ग्रहणादिति । एकादेशपूर्वस्थानिर्घटितसमुदायवृत्तिसर्वनामत्वस्यै-कादेशविशिष्टेऽतिदेशेनाऽऽबन्तस्य सर्वेत्यस्य सर्वनामत्वात्सुलभ एव सुडितिभावः। एवं सर्वस्यामित्यत्राऽपि बोध्यम्। नचोक्तरीत्याऽऽबन्त-स्य सर्वनामत्वेऽप्येकादेशनिष्पन्नस्याऽऽप्त्वाभावादाबन्तत्वमेव न स्या-त्। अत एव, खट्वेत्यादौ परादिवद्भावेनाऽऽप्त्वमाश्रित्याऽऽबन्तत्वा द्धल्ङ्याबिति सोर्लोपः, प्रकृते उभयत आश्रयणेऽन्तादिवत्त्वाऽभावा-त्परादिवद्भावेनाऽऽबन्तत्वमानेतुमशक्यमिति वाच्यम्। उभयत आ-श्रयणे नान्तादिवदित्यस्य सिद्धान्तिभाष्यसम्मतत्वाभावात्परादिव-द्भावेनाप्त्वाश्रयणादाबन्तत्वस्य सुलभतया सर्वं सूपपन्नमित्यलम् ॥

ननु तत्तच्छब्दाऽनुवादेन विहितत्वरूपप्रतिपदोक्तत्वस्य समासे सत्त्वाच्छीघ्रोपस्थितिकत्वेन तस्यैव ग्रहणं द्वितीयस्य तु बिलम्बोपस्थि-तिकत्वाद्ग्रहणं न स्यादित्याह—"दिङ्नामाऽन्यन्तराले इति ३प्रति-पदोक्तदिक्समासस्य ग्रहणान्नेहेति ॥

---

१ सन्निपातेति। सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति स्वरूपम्। उपजीव्यविरोधो न न्याय्य इति न्यायमूलैषा ।

२ अनित्यत्वे प्रमाणञ्च, कष्टाय क्रमणे, न यासयोरित्यादिनि-र्देश एवेति बोध्यम् ।

३ प्रतिपदोक्तदिक्समासस्य ग्रहणादिति । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमितिपारिभाषयेति भावः ।

योत्तरेति। यत्तच्छब्दाभ्यामुद्देश्यविधेयत्वप्रतीत्या योत्तरात्वप्रकारकज्ञानविशेष्या सा प्रसिद्धपूर्वा यस्या इति तदर्थः। तथाच, गुणवाचकत्वादुत्तराशब्दस्य पूर्वनिपातो बोध्यः॥

ननु उक्तप्रतिपदोक्तसमासस्य बहुव्रीहीत्यादेव बहुव्रीहिलाभे सूत्रे तद्ग्रहणं व्यर्थमित्याशङ्कायामाह—बहुव्रीहिग्रहणं स्पष्टार्थमिति॥

ननु 'अम्बार्थनद्योर्ह्रस्वः' इति सूत्रभाष्येऽम्बार्थं व्यत्तरं यदीति पाठेन द्व्यच्काम्बार्थकस्यैव ह्रस्व इति नियममाश्रित्य डलकवतां ह्रस्वो नेत्यस्य प्रत्याख्यातत्वात्फलभेदाऽभावाय सामान्यतोऽपि वार्त्तिकमसंयुक्तविषयकम्, अन्यथा, वार्त्तिकसत्त्वेऽक्केऽल्ले प्रत्याख्याने अक्क, अल्ल, इति फलभेदः स्पष्ट एवेत्याशयेनाह—असंयुक्ता ये डलकास्तद्वतां ह्रस्वो नेति। द्व्यत्तरं यदीत्यस्याऽऽवृत्त्वाद्व्यत्तराम्बार्थकान्तस्याऽपि ह्रस्व इत्यर्थे जगदम्बेत्यादौ न ह्रस्वाऽनापत्तिरिति दिक्॥

यत्केचिदाहुर्मूलोक्तरीत्या जरसादेशात्प्राक् विभक्त्यादेशस्येष्टत्वेनादौ श्यादेशं विधायेनातोरिकारदीर्घोच्चारणसामर्थ्याज्जरसि कर्त्तव्ये सन्निपातपरिभाषाया अप्रवृत्त्या जरशादेशे जरसीतिरूपमिति तद्विरुद्धम्, उक्तपरिभाषाऽनित्यत्वज्ञापकप्रत्याख्यानपरभाष्यादिति तेषामुक्तिर्निर्मूलिकैवेति भावः॥

ननु जरसादेशविभक्त्यादेशयोर्युगपत्प्राप्तौ परत्वाज्जरसि तस्य स्थानिवद्भावेनाऽऽबन्तत्वमाश्रित्य 'औङ आपः' इत्यादिमूलोक्तपञ्चसूत्रीविहितैस्तैस्तैः कार्य्यैर्भवितव्यन्तथा नसन्निशपृत्स्वपीतीत्थं सन्दिह्याह—यद्यपि जरसादेशस्येति। अत्राऽल्विधौ स्थानिवद्भावाऽप्रवृत्त्याऽऽबन्तत्वाऽभावान्नोक्तकार्य्याणि भवन्तीति। नचाप्त्वमल्मात्रवृत्ति नह्याबन्तत्वन्तथेति प्रकृतेऽतिदेशादन्त्यस्याऽऽश्रयणे उक्तनिषेधाऽप्रवृत्त्या स्थानिवत्त्वस्य दुर्वारत्वादुक्तदोषस्तदवस्थ एवेति वाच्यम्। सकलाप्घटित सूत्रेषु आङावति प्रश्लेषादारूपस्यैवाऽऽपो ग्रहणादिहाऽतिदेशेनाऽऽरूपत्वाऽऽलाभेनाऽप्रवृत्तेरिति भावः। हल्ङ्यादिसूत्रेऽप्येवमाऽऽरूपस्याऽऽप ईरूपस्य ङीत्यस्य प्रश्लेषेण ग्रहणादतिखट्वो निष्कौशाम्बिरित्यादेः सिद्धिमत्त्वा दीर्घग्रहणं प्रत्याख्यातम्। नच प्रश्लेषेणाऽऽरूपस्याऽऽपो ग्रहणेऽप्यतिखट्वायेत्यत्र श्रूयमाणाऽकारेऽतिदेशेनाऽऽप्त्वमाश्रीय याडा भाव्यमिति वाच्यम्। 'याडापः' इति

सूत्रस्याऽऽपः सामानाधिकरण्याऽनुरोधेनाऽधिकृतमङ्गस्येतिपदं पञ्च-म्यन्ततया विपरिणम्य उपसर्जनस्त्रीप्रत्यये तदादिनियमेन प्रत्ययग्रह-णपरिभाषया तदादिपदमुपस्थाप्य, आबन्ततदाद्यभिन्नादङ्गात्परस्य ङितो याट् स्यादित्यर्थे यदाबन्ततदादि खट्वेति न तदङ्गं यदङ्गमति खट्वेति न तदाबन्ततदादिरिति सूत्राऽप्राप्त्या याटोऽप्राप्तेरिति भावः। प्रत्ययग्रहणपरिभाषयाऽऽबन्तस्य ग्रहणे तेनाऽङ्गविशेषणाद्द्वितीयत-दन्तविधानाच्चाबन्तान्तं यदङ्गमित्यर्थेऽतिखट्वायेत्यत्र तदवस्थैव याडापत्तिरिति वाच्यम्। अङ्गस्य विशेषणत्वेनाऽङ्गाभिन्नं यदाबन्त-तदादि ततः परस्येत्यर्थस्यैव सम्भवेनोक्तापत्तेरयोगात्। नच स्त्री-प्रत्ययमात्रे शास्त्रीयोपसर्जनत्वाभावात्कथमत्र तदादिविधिरिति वाच्यम्। शास्त्रीयोपसर्जनत्वाऽभावेऽपि लौकिकोपसर्जनत्वस्य सत्वात्। अस्यैव च ग्रहणात्पूर्वोक्तस्य तस्य स्त्रीप्रत्ययमात्रेऽसम्भवात्। नच स्त्रीप्रत्ययान्ते शास्त्रीयोपसर्जनत्वमस्तीति वाच्यम्। तत्र तत्स-त्त्वेऽपि तेन प्रत्ययग्रहणपरिभाषया तदादिनियमाऽप्रसक्तेः। लौकिको-पसर्जनत्वञ्च स्वान्तपर्य्याप्तशक्तिनिरूपकाऽर्थनिष्ठविशेष्यतानिरूपित-प्रकारतानिरूपितस्त्रीत्वनिष्ठाऽवच्छेदकताप्रयोजकत्वम्, इत्थमेतत्स-मन्वयप्रकारः, तथाहि, स्वपदेन स्त्रीप्रत्ययस्य ग्रहणं तदन्तमतिख-ट्वेति तत्पर्य्याप्ता शक्तिः स्त्रीत्वविशिष्टखट्वाकर्मकाऽतिक्रमणकर्तृ-त्वावच्छिन्ननिरूपिता तन्निरूपकोऽर्थः स्त्रीत्वविशिष्टखट्वाकर्मकाऽति-क्रमणकर्तृत्वरूपस्तन्निष्ठविशेष्यतानिरूपितप्रकारता अतिखट्वनिष्ठा तन्निरूपितस्त्रीत्वनिष्ठाऽवच्छेदकताप्रयोजकत्वं स्त्रीप्रत्ययस्यास्तीति लक्षणसमन्वयः। १ नव्यास्तु आकारस्य लाक्षणिकत्वेन खट्वायै इत्यादौ न याडिति स्पष्टम्भाष्ये। नच सूत्रस्य निशायै इत्यादौ चारितार्थ्येन खट्वायै इत्यत्र याड् न स्यादिति वाच्यम्। लक्षणप्र-वृत्तं विना यस्य रूपस्य न संभवस्तस्यैव लाक्षणिकस्य लक्षणप्रति-पदोक्तपरिभाषाविषयत्वादिति वदन्तीत्यलम्॥

गुणादीर्घोत्वानामपवाद इति। अयम्भावः, अस्ति हि शास्त्रे पक्षद्वयम् बाध्यविशेषचिन्ता बाध्यसामान्यचिन्ता, चेति, तत्र मद्वि-षये येये प्राप्तास्तेषामन्यतमो बाध्य इत्याद्यपक्षस्वरूपम्, मद्विषये यद्यत्प्राप्तं तत्सर्वं बाध्यमिति द्वितीयपक्षस्वरूपम्। प्रकृते द्वितीयपक्षा-

१ शेषरकाराः।

ऽऽश्रयणे तस्य १( मध्येऽपवादाः ) इति न्यायेन दीर्घोत्वयोरेवाऽप-वादत्वं स्यान्नतु गुणस्येति नास्येहाऽऽश्रयणम्, अस्य च पक्षद्वयस्य जातिव्यक्तिपक्षवल्लदयानुरोधाद्व्यवस्था। नच रादेशस्य प्रियतिस्रे-त्यादौ सावकाशत्वादपवादत्वं कथमिति वाच्यम्। यणा गतार्थत्वात्। एवञ्च रादेशेन तिस्रस्तिष्ठन्तीत्यत्र 'जसि चे'ति गुणस्य तिस्रः पश्य-न्तीत्यत्र 'प्रथमयोरि'ति पूर्वसवर्णदीर्घस्य प्रियतिस्रः स्वमित्यत्र 'ऋत उदि'त्युत्वस्य बाध इत्यलम् ॥

ननु स्त्रियामित्यस्य सामीप्यादङ्गत्रिचतुरोश्च विशेषणत्वसम्भव-स्तत्राऽङ्गविशेषणत्वे स्त्रियां वर्तमानं यत्त्रिशब्दान्तं चतुश्शब्दान्त-श्चाङ्गं तदवयवयोर्निर्दिश्यमानयोः त्रिचतुश्शब्दयोस्तिसृ चतस्रादेश इत्यर्थे प्रियास्त्रयस्त्रीणि वा यस्येति विग्रहे प्रियत्रिरित्यत्र त्रिशब्दा-न्ताङ्गस्य स्त्रियां वर्तमानत्वेन तिस्रादेशापत्तिः, त्रिचतुरोर्विशेषणत्वे तूक्तविग्रहे तयोः स्त्रियां वर्त्तमानत्वाभावान्नोक्तापत्तिः। प्रमाणञ्चात्र (श्रुताऽनुमितयोश्श्रुतसम्बन्धो बलवानि)ति न्याय एवेत्याशयेनाह-स्त्रियामित्यस्य त्रिचतुरोर्विशेषणत्वान्नेहेति ॥

ननु प्रियास्तिस्रो यस्य तत्कुलमिति विग्रहे त्रिशब्दस्य स्त्रियां विद्यमानत्वेन तिस्रादेशे प्रियत्रीति रूपन्न स्यादित्यत आह-स्वमोर्लु-का लुप्तत्वेनेति। अयम्भावः, प्रियत्रिशब्दात्परस्य सोः 'स्वमोर्नपुं-सकादि'ति लुकि तस्य 'नलुमताऽङ्गस्ये'ति निषेधात्प्रत्ययलक्षणाऽभा-वेन विभक्तिपरत्वाऽभावान्न तिस्रादेश इति, उक्तनिषेधसूत्रस्याऽनि-त्यत्वे तु प्रत्ययलक्षणेन विभक्तिपरत्वात्तिस्रादेशे प्रियतिस्रिति रूपं संभवत्येव, एतदनित्यत्वे प्रमाणन्तु 'इकोऽचिविभक्ता'वित्यत्राऽचि-ग्रहणमेव, तथाहि, अजादिभिन्नविभक्तिपरतो नुमोऽभावाय सूत्रे तद्ग्रहणं परञ्च भ्यां भ्यसादिषु सत्यपि नुमि नलोपः 'प्रतिपदिकान्त-स्ये'ति नलोपे विकृतरूपाऽभावाद्व्यर्थमचिग्रहणं ज्ञापयति न लुमता-ऽङ्गस्येति सूत्रमनित्यमिति। नच 'न ङिसम्बुद्ध्योरि'ति निषेधेन

१ मध्येऽपवादा इति। मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्त-रान् इति तत्स्वरूपम्। मध्यवर्तिनोऽपवादाः पूर्वोपस्थितान् विधीनेव बाधन्ते नतु पश्चादुपस्थितान् विधीनित्यर्थः। पूर्वोपस्थितबाधेन नैरा-कांक्ष्यमस्या बीजम्।

सम्बुद्धौ नलोपाऽसम्भवात्तत्र नुमापत्तिव्यावृत्त्यर्थमचीत्यस्याऽऽवश्यकत्वमिति वाच्यम्। सम्बुद्धेर्लुका लुप्तत्वेन विभक्तिपरकत्वाऽभावादेव तत्र नुमोऽप्रवृत्तेः। नच तत्राऽपि प्रत्ययलक्षणेन विभक्तिपरत्वसम्भवात्प्राप्तनुम्व्यावृत्त्यर्थं तदावश्यकमिति वाच्यम्। न लुमताऽङ्गस्येत्यस्याऽनित्यत्वं विना प्रत्ययलक्षणाऽप्रवृत्तेः। नचोत्तरार्थत्वेन ज्ञापकत्वन्तस्य न स्यादिति वाच्यम्। तथासति लाघवात्तस्यैव कर्तव्ये इह करणे वैयर्थ्यस्य स्पष्टत्वेन ज्ञापकत्वस्य युक्तत्वात्। एवञ्चास्योक्तनिषेधशास्त्रस्याऽनित्यत्वज्ञापनात्सम्बुद्धौ नुम्व्यावृत्त्यर्थमावश्यकत्वेन स्वांशे चारितार्थ्यमिति भावः। नचाऽनित्यत्वस्य सम्बुद्धिगुणमात्रविषयकत्वे कथं प्रकृते निर्वाह इति वाच्यम्। लक्ष्याऽनुरोधात्क्वचिदन्यत्रापि तदभ्युपगमेनेष्टसिद्धेः। अत एव कैयटेनाऽपि मूलोक्तरूपद्वयमङ्गीकृतमिति दिक्॥

रादेशात्पूर्वं विप्रतिषेधेन नुमिति। प्रियतिसृणी प्रियतिसृणीति भाष्योदाहरणमेवाऽत्र प्रमाणम्। अथवा 'नतिसृ चतसृ'ति ज्ञापकात्सामान्यतो नाऽऽगमविषये रादेशप्रवृत्तिः, अत एव प्रियतिसृणामित्यत्र नुट्, अन्यथा, रादेशे ह्रस्वान्तत्वाऽभावात्स न स्यादिति भावः॥

ननु द्विशब्दादौविभक्तिसमभिव्याहारे द्वि औ इति स्थितौ 'त्यदादीनामः' इत्यत्वे टापि 'औङ आपः' इति श्यादेशे गुणे द्वे इति सिद्ध्यति, अत्र (सन्निपात)परिभाषया विभक्तिसन्निपातेन जायमानस्याऽत्वस्य टाप्द्वारा विभक्तिविघाते निमितत्वाऽभावेन टापोऽप्रवृत्त्या नेष्टरूपस्य सिद्धिरिति चेन्न। 'न यासयोरि'ति निर्देशेनोक्तपरिभाषाया अप्रवृत्तेः। नचाऽन्तरङ्गपरिभाषयाऽन्तरङ्गटापदृष्ट्या बहिरङ्गाऽसिद्धत्वाट्टाब् न स्यादिति वाच्यम्। अस्या अप्युक्तनिर्देशेनैवाऽनित्यत्वात्। न च (अङ्गवृत्त) परिभाषया टाब् नेति वाच्यम्। 'द्वयोरेकस्य निर्द्धारणे' इत्यत्रैत्वनिर्देशेन तदनित्यत्वेनाऽप्रवृत्तेः। एवञ्चबाधकाऽभावादुक्तरीत्या रूपसिद्धिरित्याशयेनाह–द्वेरत्वे सत्याविति।

विभक्तौ लिङ्गविशिष्टाऽग्रहणमिति। विभक्तिनिमित्तके कार्ये कर्त्तव्ये लिङ्गबोधकप्रत्ययविशिष्टस्य ग्रहणन्नेति तदर्थः। अत्र घटघटीग्रहणेन लिङ्गविशिष्टपरिभाषाऽनित्यत्वमेव मूलमिति भावः॥

ननु ह्रस्ववाक्येऽप्यस्त्रीत्यस्य सम्बन्धात्त्रिशब्दावयवभिन्नह्रस्ववर्णान्तस्य नदीसंज्ञेत्यर्थे कथमतिस्त्रियै इत्यत्र नदीसंज्ञाप्राप्तिरित्या-

शयेनाह—अस्त्रीतितिति । अत्रहेतुमाह—तत्सम्बद्धस्यैवाऽनुवृत्ते-रिति । इयङुवङ्स्थानिसम्बद्धस्यैवाऽनुवृत्तेरित्यर्थः । अस्त्रीत्यत्र न प्रसज्यप्रतिषेधो वाक्यभेदाद्यापत्तेः ननु इयङुवङ्स्थानावित्यनेनाऽपि ह्रस्वस्य निषेधः कुतो नेत्याशङ्क्य समाधत्ते—दीर्घस्यैवाऽयं निषेधो न तु ह्रस्वस्येति । तत्र ह्रस्वपदाऽभावादिति भावः ॥

प्रधीशब्दस्येति । वृत्तिकारादीनाम्मते प्रधीशब्दस्य नदीसंज्ञा-विधौ पदान्तरं विनाऽपि स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वम् । अत एव, आध्यै प्रध्यै ब्राह्मण्यै इति १भाष्यं सङ्गच्छते । अन्यथा कैयटोक्तनित्य-स्त्रीत्वाभावात्तदसङ्गतं स्यात् । अतः स्त्रीविषयावेव यौ यू नित्यमिति भाष्ये एवकारो भिन्नक्रमः नित्यमेवेत्यस्य पदान्तरं विनाऽपीत्यर्थः । उक्तभाष्यप्रयोगे न बहुव्रीहिः कबापत्तेः, किन्तु आध्यायति प्रकृष्टं ध्यायतीति व्युत्पत्तिः, अस्याञ्च व्युत्पत्तौ लिङ्गान्तराऽनभिधायकत्वा ऽसम्भवेन नित्यस्त्रीत्वाऽभावादुक्तभाष्यप्रयोगाऽनुपपत्तिः, एवञ्चोक्त-व्युत्पत्तिकस्य सुधीशब्दस्य लक्ष्मीशब्दवदेव रूपम्, वृत्तिकाराद्युक्त-नित्यस्त्रीत्वादिति भावः । वस्तुतस्तूक्तभाष्यप्रयोगे बहुव्रीहिरेव कप्तु न वृत्तेःप्राग् यस्य नदीत्वं तदुत्तरपदकादेव कप्रोविधानात् ऋत्साह-चर्य्यात् । ततश्च नित्यपदस्य स्वारसिकाऽर्थत्यागेऽतिविप्रकृष्टाऽर्थ-परत्वे प्रमाणाऽभावेन लिङ्गान्तराऽनभिधायकत्वं नित्यस्त्रीत्वमित्येव युक्तमिति कैयटमतम् । अस्मिंश्च मते नित्यस्त्रीत्वाऽभावेन पुंवदेव रूपमित्यलम् ॥

ननु भ्रूशब्दस्योवङ्स्थानित्वेन समुदायस्याऽपि तत्स्थानित्वात् 'नेयङुवङि'ति निषेधेन नदीत्वाऽप्राप्त्या सम्बोधने ह्रस्वत्वन्न स्या-दित्यभिप्रायेणाऽऽशङ्कते-कथं तर्हि, हे सुभ्रु इति । समाधत्ते-प्रमाद-एवेति । अनवधानरूप एव प्रमादः । सच काव्ये पुष्टिकरत्वेन गुण एवेति बहवः २ (नञ्घटितमनित्यमि)ति परिभाषया निषेधशास्त्राऽ-नित्यत्वबोधनान्नात्र कश्चिद्दोष इति केचित् ॥

---

१ आध्यै प्रध्यै ब्राह्मण्यै, इत्यत्र नदीसंज्ञानिषेधमाशंक्य यत्र नदीकार्य्याश्रयेऽङ्गे बाधकाऽबाधितेयङादिस्थितिस्तत्रैव निषेध इति समाधानपरभाष्यमित्यर्थः ॥

२ एषा च परिभाषा भाष्ये न दृश्यते ।

ननु 'रषाभ्यां नोणः समानपदे' इत्यतो णकारानुवृत्त्यैव सिद्धौ 'एकाजुत्तरपदे' इत्यत्र णग्रहणं व्यर्थम् । न च 'वा भावकरणयोरि'-त्यस्माद्वाग्रहणाऽननुवृत्त्यर्थमस्तु तदिति वाच्यम् । आरम्भसामर्थ्या-देव नित्यत्वसिद्धेः । अन्यथा 'प्रातिपदिकान्तनुम्विभक्तिषु चे'त्येव सिद्धौ तस्य स्पष्टमेव वैयर्थ्यं स्यादित्याशङ्क्य समाधत्ते-आरम्भ-सामर्थ्यादेव नित्यत्वसिद्धौ णग्रहणं स्पष्टार्थमिति ॥

'न तिसृचतसृ'इति नामि दीर्घत्वप्रतिषेधज्ञापकेन ङीबभावो-पपत्तौ स्वस्रादिगणे तिसृचतस्रोः पाठो विफल एवेति 'ऋन्मेजन्तः' इत्यत्र कैयटः । इत्यजन्ताः स्त्रीलिङ्गाः ॥

---

## अथाऽजन्तनपुंसकलिङ्गप्रकरणम् ।

ननु 'अतोऽमि'त्यत्र लाघवाय मित्येव छेद इति चेन्न । तथासति ज्ञानमित्यत्र 'सुपि चे'ति दीर्घापत्तेः । नच (सन्निपात) परिभाषयैव तत्र दीर्घव्यावृत्तिर्द्वितीयैकवचने च 'आदेः परस्ये'ति आदेरादेशेऽन्त्य-मकारस्य संयोगान्तलोपे रूपमिष्टं सिद्ध्यत्येवेति वाच्यम् । सत्येवं हे ज्ञानेत्यादौ सम्बुद्धिलोपाऽनापत्तेः । प्रत्ययलोपेन मकारनिमित्तक-प्रकृतिप्रत्ययसन्निपातविघातस्य जायमानत्वात् । परत्र संयोगान्तस्य झल एव लोप इति व्याख्यानेन लोपाऽनापत्तेः । अतो नाऽत्र मिति-च्छेदः किन्त्वमित्येव, अमिति छेदस्य सूत्रकाराऽभिप्रायविषयत्वादेव, ज्ञानेत्यादौ मलोपाऽर्थं हेकतरदित्यत्र सम्बुद्ध्यलोपाऽर्थञ्चाङ्गादेप-व्यधिकरणान्वयहल्पदानुवृत्त्यय आस्थिता भाष्ये ननु मिति छेद उक्त इति भाष्यविरुद्धकल्पना नाभ्युपगन्तव्येति दिक् ॥

ननु हे ज्ञान सु इति स्थितौ परत्वात्सम्बुद्धिलोपं बाधित्वा सोर-मादेशे 'अमि पूर्वः'इति पूर्वरूपत्वे च जाते सम्बुद्धेर्हस्वाऽन्ताङ्गात्परत्वा-ऽभावेन लोपो न स्यादिति चेन्न । पूर्वाऽन्तवद्भावेनैकादेशविशिष्टेऽङ्ग-त्वसत्त्वात् । नचैवमपि पूर्वरूपत्वेनाऽमोऽकारस्याऽपहारात्सम्बुद्धे-रङ्गात्परत्वाऽसम्भवेन लोपो न स्यादिति वाच्यम् । अमोऽकारस्या-ऽपहारेऽप्युक्तरीत्या तद्विशिष्टेऽङ्गत्वसत्त्वाद्ध्रस्वान्ताङ्गात्परो यः सम्बु-द्ध्यवयवो हलित्यर्थकरणेन सम्बुद्धेरङ्गात्परत्वाऽभावेऽपि तदवयव-स्य हलो मकारस्य तथात्वेन लोपस्य सुलभत्वादित्याशयेनाऽऽह— एङ्ह्रस्वादिति हल्मात्रलोप इति ॥

ननु अदडादेशस्थानेऽदादेशेन दादेशेनाऽपि वा हेऽकृतरदित्यस्योपपत्तौ डित्करणस्यार्थमित्याशंक्य समाधत्ते—टेर्लुप्तत्वादिति। अयम्भावः, अदादेशे 'प्रथमयोरि'ति पूर्वसवर्णदीर्घाऽऽपत्तिः, दादेशे तु ह्रस्वात्परत्वेन 'एङ्ह्रस्वादि'ति सम्बुद्धिलोपापत्तिश्च स्यादिति डित्करणमावश्यकं कृते तु तस्मिन्प्रकृत्यकारस्य लोपे न दीर्घलोपयोरापत्तिरिति दिक् ॥

ननु अज़रशब्दात्सुप्रत्यये तस्याऽमादेशेऽज़र अमिति स्थितावजादिपरत्वाज्जरसादेशः स्यादिति सन्देहे समाधानमाह—सन्निपातपरिभाषया न जरसिति। आकारान्तसन्निपातेन जायमानस्याऽमादेशस्य जरसाऽऽदेशद्वारोक्तसन्निपातविघातकत्वस्योचितमुपजीव्यविरोधात्, जरसादेशेन स्पष्ट एव सन्निपातविघात इति भावः ॥

ननु अजरशब्दाज्जसि तस्य श्यादेशेऽजर इ इति स्थितौ नुमज़रसादेशयोः प्राप्तौ कतरस्य प्रवृत्तिरिति सन्देहस्य जायमानत्वादाह—परत्वाज्जरसि कृते झलन्तत्वान्नुमिति। 'विप्रतिषेध' सूत्रे परशब्दस्येष्टवाचित्वमिष्टकार्य्यत्वञ्च पूर्वविप्रतिषेधेन विभक्त्यादेशस्यैवेत्येतत्सर्वं निर्जरशब्दे प्रागुपपादितमेवेत्यलमत्र तदुपपादनेनेति दिक् ॥

वस्तुतस्तु प्रभृतिग्रहणं प्रकारार्थमिति। अयम्भावः 'पद्दन्' इति सूत्रे प्रभृतिग्रहणं प्रकारार्थम्, प्रकारश्च, भेदसादृश्यम्, सादृश्यञ्च, तद्भिन्नत्वे सति तद्गतभूयो धर्मवत्त्वम्। तथाच, शसादिभिन्ने शसादिसदृशे प्रत्यये पदाद्यादेश इत्यर्थः सम्पन्नः। शसादिसादृश्यं सुप्त्वेनैव ग्राह्यं नतु पदत्वेन तथासति 'हृदयस्य हृल्लेखे'त्यादेर्वैयर्थ्यापत्तेः। शसादिपरत्वञ्च 'न लुमते'त्यस्याऽनित्यत्वाद्बोध्यम्। एवं व्याख्यानेन मांस्पचन्या उखाया इति भाष्यप्रयोगे ङसूपरत्वेन मास शब्दस्य मांसित्यादेशोपपत्तिः सुलभैवेति। न च लुम्पेदवश्यमः कृत्ये तुङ्काममनसोरपि। समो वा हिततयो र्मांसस्य पचि युड्घञोः॥ इत्यनेनैव सिद्धाबलं प्रकारार्थप्रभृतिग्रहणेनेति वाच्यम्। ल्युडन्त उत्तरपदे तेन विधानादयस्मयादिगणे पाठेन 'अयस्मयादीनि छन्दसि' इति भसंज्ञया पदसंज्ञाबाधेन पचनस्योत्तरपदत्वाऽभावात्तदप्रवृत्तेरिति दिक्।

ननु 'पद्दन्' इति सूत्रे 'शीर्षंश्छन्दसी त्यतश्छन्दोग्रहणाऽनुवृत्त्या छन्दस्येव पदाद्यादेशप्राप्तौ लोके पदाद्यादेशः कथमिति चेन्न। माङ्भिः शरद्भिर्दुरोदरन्तवेत्यस्य सिद्ध्यर्थं 'अपोभिरि'त्यत्र (मासश्छन्दसी).

ति वार्त्तिकेन छन्दोग्रहणाऽनुवृत्त्यावश्यकत्वादत्रत्यछन्दोग्रहणाऽनुवर्त्तनेनैव पदन्न इत्यत्रापि छन्दसि विधानलाभे तत्र शीर्षंश्छन्दसीत्य-ऽतोनुवृत्तं छन्दोग्रहणं व्यर्थं सञ्ज्ञापयति लोकेऽपि क्वचित्पदाद्यादेशा भवन्तीति ज्ञापनेन सिद्धेरित्याशयेन पंक्तिमिमामवतारयति —पदन्न इत्यत्र हि छन्दसीत्यनुवर्तितं तथापीत्यादि ॥

ननु श्रियं पाति यत्कुलमिति विग्रहे श्रीपशब्दाच्चतुर्थ्येकवचने ङयि ङकारस्येत्वे लोपे च 'ङेर्य्यः' इति यादेशे 'सुपि च'ेति दीर्घे श्रीपायेति सिद्ध्यति। अत्र यकारे पूर्वस्य भत्वात् 'आतो धातोः'इत्याकारलोपः कुतोनेति चेन्न । सन्निपातपरिभाषाविरोधात्। तथाहि, अत्वजातीयमुपजीव्य जायमानस्य यादेशस्य भसंज्ञाद्वारा तज्जातीयाऽऽकारविघातनिमित्तत्वं न स्यादुपजीव्यविरोधात् । उपजीव्यविरोधो न न्याय्य इत्युक्तत्वात्। न च रामायेत्यत्र सुपि चेति दीर्घार्थमुक्तपरिभाषाऽनित्यत्वाऽभ्युपगमादिहाऽपि तदप्रवृत्तिरेव स्यादिति वाच्यम्। कष्टायेति निर्देशेन दीर्घे तदप्रवृत्तावपि लोपे तदप्रवृत्तेर्वक्तुमशक्यत्वादित्यभिप्रायेणाह—अत्र सन्निपातपरिभाषया आतो धातोरित्याकारलोपो नेति ॥

ननु वारिशब्दात्सम्बुद्ध्येकवचने सौ तस्य 'एङ्ह्रस्वादि'ति लोपे तस्य प्रत्ययलक्षणेन प्रकृतेः परत्वात् 'ह्रस्वस्य गुणः' इति प्राप्तगुणस्य नलुमताङ्गस्येति निषेधे हेवारीत्येव नतु हेवारे इति तथाच, हेत्रपो हे त्रपु इति भाष्योदाहरणासंगत्यापत्तिर्दुर्वारेति पूर्वपक्षप्रादुर्भावे समाधत्ते—न लुमतेत्यस्याऽनित्यत्वादिति । अयम्भावः अस्याऽनित्यत्वे 'इकोऽचि विभक्तावि'त्यत्राऽचिग्रहणमेव ज्ञापकम् तथाहि, हलादौ नुमभावायैव सूत्रे तद्ग्रहणं स च नुभावस्तद्ग्रहणं विनाऽप्युपपन्नः हलादौ सत्यपि नुमि लोपेन तद्व्यावृत्तेः । नच सम्बुद्धौ 'न ङिसम्बुद्ध्योरि'ति निषेधेन नलोपाभावान्नकारश्रवणापत्तिवारणार्थमचीत्यस्यावश्यकत्वेन ज्ञापकत्वन्न सम्भवतीति वाच्यम्। न लुमतेति निषेधस्य जागरूकत्वात्प्रत्ययलक्षणाऽभावेन विभक्तिपरत्वाऽभावादेव तत्र नुमोऽप्राप्त्या तद्व्यावृत्त्यर्थं कृतस्याऽचीत्यस्य वैयर्थ्येन ज्ञापकत्वस्य सुस्थत्वात्। नचोत्तराऽर्थत्वेन तस्य ज्ञापकत्वासम्भव एवेति वाच्यम्। लाघवात्तत्रैव कर्त्तुमुचितत्वेनेह करणे वैयर्थ्यस्य स्पष्टत्वात्।

एवञ्चोक्तनिषेधसूत्रस्याऽनित्यत्वेऽचिग्रहणस्य ज्ञापकत्वं युक्तमेव। तथाच, अनित्यत्वपक्षे तदप्रवृत्त्या प्रत्ययलक्षणेन सम्बुद्धिपरत्वाद् गुणे हे वारे इत्यपि साधु सत्येवं प्रयासमन्तरैवोक्तभाष्यप्रयोगोपपत्तिरित्यलं पल्लवितेन ॥

ननु भाषितपुंस्केत्यस्य भाषितः पुमान्येन शब्देनेत्यर्थकरणेऽनादिशब्दे तत्सत्त्वेऽपि पीलुशब्देनाऽपि पुंसो भाषितत्वात्तत्र पुंवद्भावातिप्रसङ्गोदुर्वारस्तस्माद्भाषितः पुमान्यस्मिन्प्रवृत्तिनिमित्तरूपेऽर्थे इति बहुव्रीहिः। प्रत्यासत्त्या भाषणक्रियया स्वकरणत्वेनाक्षिप्तशब्दश्च क्लीवेन समानाऽनुपूर्वीकः समानाऽर्थश्च गृह्यते, ततोऽर्शादित्वादचि भाषितपुंस्क इति, तत्फलितमाह—प्रवृत्तिनिमित्तैक्ये इति। तत्त्वञ्च वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितीयप्रकारत्वाश्रयत्वम् एकस्मिन्प्रवृत्तिनिमित्ते भाषितपुंस्कस्य शब्दस्य पुंवद्भाव इति तदर्थः यस्य शब्दस्य पंनपुंसकयोरेकप्रवृत्तिनिमित्तं तस्य पुंवत्त्वमिति पर्य्यवसितोऽर्थः। तथाच, अनादिशब्दस्य पुंसि क्लीवे चाऽऽरोपिताऽऽदित्वं प्रवृत्तिनिमित्तमेकमेवेति भवत्येव पुंवत्त्वम्। पीलुशब्दस्य तु वृक्षे वृक्षत्वव्याप्यजातिः प्रवृत्तिनिमित्तं फलत्वव्याप्यजातिः प्रवृत्तिनिमित्तमित्युभयत्रैकजातेस्तत्त्वाऽभावेन न पुंवत्त्वमित्यभिप्रेत्याह—पीलुने अत्र न पुंवत् प्रवृत्तिनिमित्तभेदादिति ॥

ननु अरि आमिति स्थितावच्परत्वेन प्राप्तनुमं बाधित्वा नुमचिरेति नुटि ततो हल्परत्वात् (एकदेशविकृत) न्यायेन रायो हलीत्यात्वे अराणामिति माधवः। अस्यायम्भावः नुण्निमित्तीभूतह्रस्वीयसन्निपातो दीर्घेणाऽवश्यं विनाश्य इति सन्निपातपरिभाषाया अविषयत्वेनाऽप्रवृत्त्याऽऽत्वे बाधकाऽभावाद्युक्तमेवोक्तरूपं सामान्यतो नुड्विषये उक्त परिभाषाया अप्रवृत्तेरिति तद्भावः। नचैवं रामाणामित्यत्र नामीत्यनेन नुण्निमित्तह्रस्वसन्निपातविघातस्यावश्यं जायमानत्वादुक्तपरिभाषाऽविषयत्वेन सुपिचेति दीर्घे कथमुक्तपरिभाषाप्रवृत्तिरिति वाच्यम्। नामीति दीर्घेण नित्यत्वात् सुपिचेति दीर्घस्य बाधेनाऽप्रवृत्त्याऽऽवश्यकत्वेनोक्तपरिभाषयैव तदप्रवृत्तिकल्पनादिति। पर मेतदाशयः 'श्नान्नलोप' इत्यत्र पाष्ठभाष्यकैयटविरोधादुपेक्ष्यः, तत्र हि श्नमश्शकारोच्चारणाऽभावे नान्नलोप इति न्यासे यज्ञानामित्यत्र दीर्घनलोपयोः प्राप्तौ परत्वान्नलोप इत्युक्तम्भाष्ये। सामान्यापेक्षा-

पने तु नलोपापेक्षया सुपिचेति दीर्घस्य परत्वादस्यैव प्रवृत्तौ तद-सङ्गतं स्यादिति नामीति दीर्घे कर्त्तव्य एवोक्तपरिभाषाऽनित्यत्वं नान्यत्रेत्यरुचेः 'कष्टायेऽति निर्देशेनाऽनित्यायाः सन्निपातपरिभाषा-याः सुपिचेति दीर्घेऽप्रवृत्तिकल्पनेऽपि सामान्यतो दीर्घेऽप्रवृत्तिकल्प-नायां न किमपि विनिगमकमित्यरुचेश्चाह—वस्तुतस्तु, मरीणामिति।

इत्यजन्ता नपुंसकलिङ्गाः ॥

---

## अथ हलन्तपुंलिङ्गप्रकरणम् ।

ननु 'दादे र्धातो र्घः' इत्यत्र भाष्ये घुगित्यत्र ढत्वमाशंक्याऽपवाद-त्वेन समाधाय, अथवा एवं वक्ष्यामि होढोऽदादेरिति ततो धातोर्घ इति दादेरिति वर्तते नेति निवृत्तमित्युक्तम्। एवञ्चाऽदादिधातुहका-रस्य ढत्वविधानेनैव दादिधातुहकारस्य घत्वसिद्धौ भाष्यकृताऽनुवृ-त्तस्य दादिपदस्योत्तरयोगे फलान्तराऽभावेन सामर्थ्याद्दादिपदमौप-देशिकदादित्ववदुपलक्षकमित्यभिप्रायेण फलिताऽर्थमाह—उपदेश इति नच दादिभिन्नधातुहकारस्य ढत्वमित्यर्थकस्य होढोऽदादेरितिन्यास-स्याऽभ्युपगमे धुडित्यादौ दादित्वेन तद्भिन्नत्वाऽभावाड्ढत्वानापत्ति-रिति वाच्यम् । 'वा द्रुहमुहे'ति सूत्रे वाग्रहणस्य समुच्चयार्थकत्वेन ढस्याऽनुवृत्तौ तद्विधानेनाऽदोषात्। नचैवमपि दादित्वेन दामलिडि-त्यत्र ढत्वन्न स्याद्दादिभिन्नधातुहस्यैव तद्विधानादिति वाच्यम्। उत्त-रयोगे दादिपदस्यौपदेशिकदादित्ववतं एव ग्रहणेन पूर्वयोगेऽप्यर्था-ऽधिकाराऽनुरोधात्तादृशस्यैवाऽदादिघटकदादिपदस्य ग्रहणेन तदुप-पत्तेः। उक्तव्याख्यानलब्धोपदेशपदग्रहणे किम्फलमित्याह—उपदेशे किमिति । १ अव्याप्त्यतिव्याप्तिदोषव्यावृत्त्यर्थमावश्यकमुपदेशपदम्। तथाहि, अधोगित्यत्राऽडागमे दादित्वाऽभावाद्घत्वं नेत्यव्याप्तिः, दामलिडित्यत्र दादित्वेन घत्वं स्यादित्यतिव्याप्तिरिति भावः ॥

ननु सम्भवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यमिति सिद्धान्तः, तथाच लाघवात्सामानाधिकरण्यान्वयस्याऽभ्युपगमे ए-काज्झपो यो धातुर्झषन्तस्तदवयवस्य बशो भषित्यर्थे गर्द्धबित्यादौ भष्

---

१ लक्ष्ये लक्षणाऽगमनमव्याप्तिः, अलक्ष्ये लक्षणगमनमतिव्याप्तिः ।

भावो न स्यात्तस्याऽनेकाच्त्वादिति वैयधिकरण्याऽन्वय एव युक्त इत्याशयेनाह—एकाचो धातोरिति ॥

झलीति निवृत्तम्। स्ध्वोर्ग्रहणसामर्थ्यादिति ॥ नच धुग्भ्यां धुग्भिरित्यादौ भष्भावार्थं झलीत्यस्यावश्यकत्वेन मूलोक्तमसमीचीनमिति वाच्यम्। पदान्ते इत्येव तत्र तदुपपत्तेः। नच बुबुधिध्वे इत्यत्र भष्भावनिवृत्त्यर्थं ध्वमो झलीति विशेषणस्याऽऽवश्यकत्वेन निवृत्तमित्युक्तिरसंगतेति वाच्यम्। इटो ध्वमवयवत्वाऽभावेऽपि भष्भावनिमित्तध्वशब्दानवयवत्वादेकाच्ध्वशब्दयोरिटा व्यवधानेन स्वत एव भष्भावाऽप्राप्त्या दोषाऽभावेन झलीतिविशेषणस्यानावश्यकत्वेन मूलोक्तस्य सुसंगतेरिति भावः।

ननु दुहेर्घत्वे धात्ववयवमेकाज्रूपं दु इति उघिति च तत्राऽऽद्यो न झषन्तोऽन्त्ये न बश् दुघिति तु नाऽवयव इति भष्भावो न स्यादित्यत आह—१ व्यपदेशिवद्भावेनेति। एकस्मिन्नसहाये व्यपदेशिना मुख्यव्यवहारवता तुल्यो व्यपदेशो भवतीति तदर्थः।

ननु धुगित्यादेः प्रातिपदिकत्वेन धातुत्वाऽभावेन तत्कार्य्यं भष्भावो न स्यादिति चेन्न। 'अत्वसन्तस्य चाऽधातोरि'ति सूत्रेऽधातोरिति निषेधसामर्थ्येनाऽप्रधानक्रियावाचकस्यापि धातुत्वबोधनेन तदुपपत्तेः नच २( धातोरुच्यमानं कार्य्यं तत्प्रत्यये ) इति परिभाषया धातुशब्दमुच्चार्य्य विहितप्रत्यये एव तत्कार्य्यविधानादिहाऽतथात्वेन धातुकार्य्यं न स्यादिति वाच्यम्। भष्भावस्य धातुकार्य्यस्य, पदान्तनिमित्तत्वेन प्रत्ययनिमित्तत्वाऽभावादुक्तपरिभाषाऽप्रवृत्तेः। प्रत्यये परे धातोरुच्यमानं कार्य्यं धातुशब्दमुच्चार्य्य विहितप्रत्यये एव भवतीति परिभाषाऽर्थ इति भावः। अत एव 'नशङ्कृ्यप्रशानि'ति सूत्रेऽप्रशान्ग्रहणं चरितार्थम्, अन्यथा 'मो नो धातोरि' त्यत्राप्युक्तपरिभाषाप्रवृत्तौ नत्वाप्राप्त्या नत्वासम्भवेन तद्व्यावृत्त्यर्थन्तद्ग्रहणं व्यर्थमेव स्यात्। नचो-

---

१ व्यपदेशिवद्भावोऽप्रातिपदिकेनेति परिभाषास्वरूपम्। पूर्वात्सपूर्वादिनिरित्येकयोगएव कर्तव्ये पृथग्योगकरणमस्या ज्ञापकम्।

२ धातोरिति। धातोरुच्यमानं यत्कार्यं तत् धातुविहिते प्रत्यये भवतीत्यर्थः। अत्र भ्रौणहत्ये तत्वविधानमस्या ज्ञापकम्।

क्तपरिभाषाप्रवृत्तौ सुधियावित्यादावियङ् न स्यादावित्यस्य धातुसंशब्दनेन विहितप्रत्ययत्वाभावादिति वाच्यम्। वस्तुत इयङोऽङ्गस्यैवोच्यमानत्वेन धातोरभावेनोक्तपरिभाषाऽप्रवृत्तेरिति भावः॥

ननु 'वहश्चे'ति सूत्रे 'छन्दसि सहः' इत्यतश्छन्दोग्रहणाऽनुवृत्त्या वहेरपि छन्दस्येव ण्विविधानेन लोके विश्ववाहशब्दस्य कथं प्रयोग इत्यत आह—छन्दस्येव ण्विरिति पक्षे तु णिजन्ताद्विजिति। णिजन्ताद्विश्वशब्दपूर्वकाद्वाहेर्विचि णिलोपे लोकेऽपि विश्ववाहशब्दप्रयोग उपपन्न इति भावः। नचाऽङ्गभसंज्ञाऽऽक्षिप्तप्रत्ययेन वाहो विशेषणेनाजादिप्रत्ययपरकाऽव्यवहितपूर्वस्य वाहःसम्प्रसारणमित्यर्थे णिलोपस्य स्थानिवत्त्वेन व्यवधानात्सम्प्रसारणं न स्यादिति वाच्यम्। विचः क्विपोपलक्षकत्वेन क्वौ लुप्तं न स्थानिवदिति स्थानिवत्त्वनिषेधेनाऽदोषात्। नचोक्तस्थानिवत्त्वनिषेधवचनस्य संकुचितविषयत्वेन क्वौ विधिं प्रति न स्थानिवदित्यस्य क्विप्शब्दसंशब्दनेन विहितविधावेव प्रवृत्त्यभ्युपगमेन वच्यादिभ्यो विहिते क्विति संप्रसारणमिति 'वचिंसुपी'त्यस्य व्याख्यानेन णिजन्तात्क्विपोऽविहितत्वेन निषेधाऽप्राप्त्या स्थानिवत्त्वस्य दुर्वारत्वाद्व्यवधानेन सम्प्रसारणं न स्यादिति वाच्यम्। 'विभाषा पूर्वाह्णे'ति सूत्रे भाष्ये 'प्रष्ठौह आगतं प्रष्ठवाड्रूप्यमिति लौकिकविग्रहवाक्ये प्रष्ठौह इति प्रयोगदर्शनेन लोकेऽपि क्वचिण्णिवरिति कल्पनेनोक्तापत्तेरयोगादिति दिक्॥

ननु सामान्यविहितस्य व्यापकविषयताकस्याऽऽमोऽपेक्षया नुमो विशेषविहितत्वेन व्याप्यविषयकत्वात्तक्रन्यायमूलकेन १ (येन नाप्राप्ति) न्यायेन नुमाऽऽमो बाधे पुनरामोऽप्राप्त्याऽनड्वानिति एवं सम्बोधने नुमाऽमो बाधेन हे अनड्वन्निति च नोपपद्येतेत्याशङ्क्य समाधत्ते—आदित्यधिकारादिति। 'आच्छीनद्योर्नुमि'त्यतस्तदनुवर्त्तनादनडुहशब्दाऽन्त्यावर्णात्परो नुमित्यर्थेऽम उपजीव्यत्वान्न ततः प्राङ्नुमः प्राप्तिरिति न कश्चिद्दोषः, उपजीव्योपजीवकयोर्बाध्यबाधकभावो न भवति यथा पितुरुत्पन्नः पुत्रः पितरं न हन्यात् एवं पिता पुत्रं न हन्यादिति भावः॥

१ येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवतीति न्यायस्वरूपम्।

ननु अनड्वानित्यत्र नकारस्य दत्वं कुतोनेत्याशंक्य समाधत्ते—नुम्विधिसामर्थ्याद्वसुस्रंस्विति दत्वं नेति। विधानसामर्थ्यादविकृतेनैव नुमा सर्वत्र भवितव्यन्तु विकृतेन, अन्यथा विधानस्य नैरर्थक्यापत्तेः। नकारस्य दत्वेऽवश्यमेव नुमो विकृतत्वापत्तिरिति न दत्वमिति भावः। नच विधानसामर्थ्यान्नुमो दत्ववारणेऽनड्वाँस्तत्रेत्यत्राऽपि रुत्वानापत्तिरिति वाच्यम्। तत्रोपदेशवैयर्थ्याऽभावात्। यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तं नासौ बाध्यते इति। दत्वं प्रति नुम्विधेरनर्थकत्वेन नुमा दत्वबाधो जातः, रुत्वं प्रति नुमो निमित्तत्वेन न तेन रुत्वबाध इति भावः॥

हे अनडवन्निति। नन्वत्र सम्बुद्धिलोपेऽवश्यं प्राप्तेऽम आरम्भादमोऽपवादत्वादनेन सम्बुद्धिलोपबाधेनैतद्विषये सम्बुद्धिलोपो न स्यात्। नच विषयभेदे बाध्यबाधकभावाऽभावेन नोक्तदोष इति वाच्यम्। विषयभेदेऽप्यचिरादेशस्य नुडपवादत्वमिति सप्तमे भाष्ये शङ्कितत्वादिति चेन्न। प्रत्ययलोपविधायकशास्त्रैः प्रत्ययाऽनुत्पत्तेरेवाऽन्वाख्यानेनाऽपवादत्वस्यैवासम्भवादिति भावः॥

ननु सुद्यौरित्यत्र स्थानिवत्त्वेन सोर्हलः परत्वाद्धल्ङ्याबिति लोपो दुर्वार इति सन्देहं निवर्त्तयति—अल्विधित्वेन स्थानिवद्भावाद्धल्ङ्याविति सुलोपो नेति। अल्विधावित्यत्र पञ्चमीसमासस्याऽऽश्रयणादलः परस्य विधौ न स्थानिवदित्यर्थे स्थानिवत्त्वनिषेधान्न दोष इति भावः॥

ननु णत्वापेक्षया द्वित्वस्य परत्वेन पूर्वं द्वित्वे ततो णत्वे णत्वं द्वित्वमिति मूलोक्तमयुक्तमिति चेन्न। 'पूर्वत्राऽसिद्धमि'त्यनेन पूर्वत्र कर्त्तव्ये परस्याऽसिद्धत्वबोधनाण्णत्वदृष्ट्या द्वित्वस्याऽसिद्धत्वेन प्राक् णत्वस्यैव प्रवृत्तेः। नच [1]पूर्वत्रासिद्धीयमद्वित्वे इति परिभाषया द्वित्वभिन्ने कार्य्ये कर्तव्ये उक्तशास्त्रप्रवृत्तेर्निर्णीतत्वेन प्रकृते द्वित्वस्यैव कर्त्तव्यत्वात्तदप्रवृत्तौ परत्वाद्द्वित्वे प्राक् प्रदर्शितदोषस्य तादवस्थ्यमेवेति वाच्यम्। सय्यँन्तेत्यत्र त्रियकारकरूपसिद्ध्यर्थं-

---

१ द्वित्वभिन्ने पूर्वत्र कर्त्तव्ये परमसिद्धमित्यर्थः। पूर्वत्रासिद्धमित्यधिकारभवं शास्त्रमस्या लिङ्गम्। यत्र च सिद्धत्वासिद्धत्वयोः फले विशेषस्तत्रैवास्याः प्रवृत्तिरिति बोध्यम्।

मावश्यकेन द्वित्वे परसवर्णत्वं सिद्धं वक्तव्यम् इति वार्त्तिकेनोक्तपरिभाषाया वर्णद्वित्वेऽप्रवृत्तिकल्पनात्, अन्यथा द्वित्वं प्रत्युक्तपरिभाषया पूर्वत्रेत्यस्याऽप्राप्तौ परसवर्णस्य सिद्धत्वेन द्वित्वे कृते भाष्योक्तप्रयोगोपपत्तावुक्तवार्तिकं स्पष्टमेव व्यर्थं स्यादेवञ्च द्वित्वे कर्त्तव्येऽपि पूर्वत्राऽसिद्धमित्यस्य प्रवृत्तौ द्वित्वस्याऽसिद्धत्वेन णत्वस्यैव प्रवृत्तावुक्तदोषाऽभावात् । नच वाक् वाक्क् इति भाष्योदाहरणोपपत्तये वर्णद्वित्वेऽप्युक्तपरिभाषाप्रवृत्तिरावश्यकी अन्यथा पूर्वत्रेत्यनेन चर्त्वात्प्राग्गस्यैव द्वित्वेऽन्त्यस्य चर्त्वे पूर्वत्र गश्रवणापत्तिः । नच खरिचेत्यनेन पूर्वगस्य चर्त्वेन तत्सिद्धिरिति वाच्यम् । अवसानचर्त्वस्यासिद्धत्वेन खर्परत्वाऽभावाच्चर्त्वाऽप्राप्त्या गश्रवणाऽऽपत्तेर्दुर्वारत्वात् । नच कस्य द्वित्वेऽप्यवसाने चर्त्वस्याऽसिद्धत्वाद्गकारे झशि परे पूर्वस्य जश्त्वे उक्तरीत्यैव चर्त्वाऽभावाद्गश्रवणं दुर्वारमिति वाच्यम् । 'नमुने' इति वत्पूर्वत्राऽसिद्धीयमित्यस्य द्वित्वे कृतेऽपि प्रत्यासत्त्यां द्वित्वाऽऽश्रयस्य कार्ये कर्त्तव्येऽसिद्धत्वमित्यर्थेऽवसानचर्त्वस्याऽसिद्धत्वाऽभावेन झश्परत्वाऽभावात्पूर्वककारस्य जश्त्वाऽनापत्त्या गश्रवणाऽऽपत्तिरूपदोषस्य विलयापत्तेः । एवञ्च प्रकृतग्रन्थस्य कथं संगतिरिति चेन्न । द्वित्वे कर्त्तव्येऽन्यदसिद्धम् द्वित्वन्त्वसिद्धमेवेत्युक्तपरिभाषाऽर्थकरणेन द्वित्वात्प्राङ्णत्वे ततो द्वित्वे तत्सङ्गतेरिति भावः ॥

ननु 'षट् चतुर्भ्यश्चे'ति सूत्रे १(गौणमुख्य) न्यायेन मुख्यार्थवाचकचतुर्शब्दस्यैव ग्रहणात्प्रियचतुर्शब्दस्य गौणत्वेनाऽग्रहणान्नुण् न स्यादित्याशयेनाऽऽह—गौणत्वे तु नुट् नेष्यत इति । केचित्तु सूत्रे बहुवचननिर्देशसामर्थ्याद्बहुत्वार्थकस्यैव चतुर्शब्दस्य ग्रहणादेकत्वाद्यर्थवाचकस्य तस्याऽग्रहणेन नुणेति वदन्ति तन्न, बहुवचननिर्देशस्य लाघवाऽर्थत्वेन तस्मादुक्तकल्पनायाः कर्त्तुमशक्यत्वादित्यलम् ।

ननु कमलशब्दात्तत्करोति तदाऽऽचष्टे इति णिचि, इष्टवद्भावेन टिलोपे ततः कर्त्तरि क्विपि 'णे रनिटी'ति णिलोपे ततः प्रातिपदिकत्वेन सोरुत्पत्तौ तस्य 'हल्ङ्याब्भ्य'इति लोपे कमलिति सिद्ध्यति अत्र अचः परस्मिन्नित्यत्र पञ्चमीसमासाश्रयणाट्टिलोपणिलोपयोः स्थानिवत्त्वेन सोर्हल्परत्वाऽभावाल्लोपो न स्यादिति चेन्न । पूर्वत्रा-

१ गौणमुख्येति । गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति तत्स्वरूपम् ।

ऽसिद्धे तन्निषेधेनाऽदोषादिति भावः। वस्तुतस्तु नहि पदान्ताः परेऽणः सन्ति, ननु चायमस्ति कर्तृ हरिणिति लण्सूत्रस्थभाष्यात् 'भोभगो' इति सूत्रस्थभाष्यस्यैकदेश्युक्तित्वेन वृत्तत्व् कमलित्यादेरनभिधानमेवोचितमिति दिक्॥

ननु कमलशब्दात्सप्तमीबहुवचने सुपि पूर्वोक्तरीत्याऽऽल्लोपषिलोपयोः स्थानिवत्त्वेन व्यवधानात्षत्वाऽनाऽऽपत्तिरिति चेन्न। पूर्वत्राऽसिद्धे न स्थानिवदिति तन्निषेधेन तदुपपत्तेरित्याशयेनाऽऽह—षत्वं कमल्ष्विति॥

ननु 'त्यदादीनामः' इत्यस्मात्त्यदादेरित्यनुवर्त्य त्यदादीनामिमः अः स्यादित्यर्थनैवेष्टसिद्धौ 'किमः कः' इत्यत्र ककारोच्चारणं विफलम्। नच त्यदादिप्रयुक्तकार्य्यस्य द्विपर्य्यन्तानामेवेष्टत्वेन किमस्तद्बहिर्भूतत्वादिष्टप्रयोगो नोपपद्येतेति वाच्यम्। द्वेः प्राक्किमः पाठेनैवोपपत्तेः नच इम इत्यस्य षष्ठीनिर्दिष्टत्वादलोऽन्त्यपरिभाषोपस्थितावन्त्यस्यादेशापत्तिरिति वाच्यम्। नानर्थकेऽलोऽन्त्यविधिरित्यनेन तन्निषेधात्। नच द्वेः प्राक्किमः पाठाऽभ्युपगमे सच कश्चेत्येकशेषे किमः शेषापत्तिरिति वाच्यम्। साकच्कादेशविधानपरभाष्यप्रामाण्येनैकशेषे त्यदादीनां द्विपर्य्यन्तानामिति नियमस्य बाधात् तादृशप्रयोगानभिधानाच्च। नच 'कुतिहोरि'त्याद्यर्थं किमः ककारोच्चारणमन्यथेमः कादेशे कद्वयश्रवणापत्तिरिति वाच्यम्। तत्राप्युतिहोरिति न्यासेनैव निर्वाहात्। नच 'क्वाती'त्यर्थं ककारोच्चारणमन्यथोक्तदोषाऽऽपत्तिरिति वाच्यम्। तत्र वातीतिन्यासेनैवादोषात्। एवञ्च व्यर्थमेव ककारोच्चारणमित्याशङ्कां समाधत्ते—अकचसहितस्याऽप्ययमादेश इति। व्यर्थं ककारोच्चारणं ज्ञापयति साकच्कस्य किमः कादेश इति, अन्यथाऽकज्विशिष्टस्य तस्येम आदेशे कक इत्यापद्येत यथान्यासे तु साकच्कस्याऽपि तस्य १ (तन्मध्यपतित) न्यायेन किम्शब्दत्वात्सुलभ एवादेश इति भावः। नच भिन्धकीत्यत्राऽकचि धित्वं न प्राप्नोति निर्दिश्यमानपरिभाषयेत्याशङ्क्याऽन्तरङ्गत्वाद्धित्वे ततोऽकजिति भाष्यात्साकच्कस्य निर्दिश्यमानत्वाऽभावाद्यथान्यासेऽपि कथमादेश इति वाच्यम्। किमः क इत्यस्याऽऽवृत्त्या एकेनाऽकज्रहितस्य द्वितीयेन साकच्कस्यादेश इति कैयटोक्तसमाधानेनाऽऽदेशस्य सौलभ्यादिति भावः।

१ तन्मध्यपातितस्तद्ग्रहणेन गृह्यते इति तत्स्वरूपम्।

वस्तुतस्तु अकचि धित्वं न प्राप्नोतीति भाष्यस्य अकचरत्वकं धित्वं न प्राप्नोति, निर्दिश्यमानपरिभाषया सम्पूर्णस्य स्यादित्याशयः, अत एव 'अनाऽप्यकः' इत्यत्राऽकोरिति चरितार्थम्, अन्यथा तन्मध्यपतितन्यायगृहीतस्यानिर्दिश्यमानत्वेनैवादेशाऽप्राप्तौ तस्य स्पष्टमेव वैयर्थ्यमित्यलम् ॥

ननु इद प इति स्थितौ स्मायाऽऽदेशात्परत्वादनादेशे १ (सकृद्गति) न्यायेन पुनः स्मायादेशो न स्यादित्याशङ्क्य समाधत्ते—नित्यत्वाऽत्ङेः स्मै इति । २ कृताऽकृतप्रसङ्गिनो विधेर्नित्यत्वेन,स्मायादेशस्याऽनाऽऽदेशे कृतेऽकृते च प्राप्त्या नित्यत्वादथादेशं बाधित्वा स्मायादेश एव जातः नचाऽनादेशस्याऽप्युक्तरूपनित्यत्वस्य सत्त्वादयमेव कुतो नेति वाच्यम् । लक्ष्याऽनुरोधेन बाधकाऽबाधितकृताकृतप्रसङ्गित्वरूपनित्यत्वस्याऽभ्युपगमात् । 'अनाऽप्यकः' इत्यस्य 'हलिलोपः' इत्यनेन बाधेनाऽतथात्वादिति भावः ॥

ननु अनुदात्तत्वविधानेनैव त्यदाद्यत्वे हलि लोपेनाऽऽभ्यामित्यादि समीहितरूपोपपत्तावलमश्विधानेनेत्याशंक्य समाधत्ते—अशवचनं साकच्काऽर्थमिति । शित्त्वादकज्विशिष्टस्याऽऽदेश इति भावः । नच 'त्यदादीनाम'इत्येतद्विहिताऽकारस्याऽकारविधानसामर्थ्यादेव सर्वादेशत्वसिद्धौ शित्करणं व्यर्थमेवेति वाच्यम् । अकारविधानसामर्थ्यात्सर्वादेशवत्सुपिचेति दीर्घाऽभावस्यापि ज्ञापनसम्भवात् । एवञ्च स्पष्टार्थमेवाऽशग्रहणमिति भावः । केचित्तु अनुदात्तत्वार्थमेवाऽकारविधानमिति सन्देहव्यावृत्त्यर्थमश्ग्रहणमिति वदन्ति । वस्तुतस्तु अ अ इति प्रश्लेषादकारद्वयविधानसामर्थ्यात्सर्वाऽऽदेशत्वसिद्धावश्ग्रहणं व्यर्थमेवेति बोध्यम् ॥

नलोपः, राजेति । ननु राजानित्यस्य प्रत्ययलक्षणेन सुबन्तत्वात्पदत्वेऽपि तेनैव प्रत्ययलक्षणेन प्रत्ययान्तत्वादप्रत्यय इति निषेधेन प्रातिपदिकत्वाऽभावान्नलोपो न स्यात्प्रातिपदिकसंज्ञकं यत्पदं तदन्तनकारस्यैव लोपविधानादिति चेन्न । अप्रत्यय इत्यत्र पर्युदासात्प्रत्ययान्तभिन्नस्य प्रत्ययान्तसदृशस्य प्रातिपदिकत्वमित्यर्थे यथोद्देशपक्षे प्राक्कृतां प्रातिपदिकसंज्ञामादाय नलोपोपपत्तेः । नच कार्य्यकालपक्षे

१ सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति स्वरूपम् ।

२ तदुक्तं कश्चित्कृताकृतप्रसङ्गमात्रेणापि नित्यतेति ।

तादवस्थ्यमेवोक्तदोषस्येति वाच्यम्। व्यवस्थितपक्षद्वयमध्ये एकतरपक्षेण लक्ष्यसिद्धावितरपक्षेण दोषदानस्य भाष्ये क्वाऽप्यनुपन्यासात्। नचाप्रत्यय इत्यत्र प्रसज्यप्रतिषेधाऽऽश्रयणे प्रत्ययान्तस्य प्रातिपदिकत्वाऽविधानादत्र पक्षे लोपेनेव ज्ञातनिवृत्तेरपि वक्तुं शक्यत्वेनोक्तदोषो दुर्वार एवेति वाच्यम्। 'न ङि सम्बुद्ध्योरि' ति निषेधसामर्थ्यात्प्रत्ययलक्षणेन प्रत्ययान्तत्वमादाय न निषेधप्रवृत्तिरिति ज्ञापनेनाऽदोषादिति भावः॥

ननु राजञ्शब्दाच्छशि 'लशक्वे'ति शस्येत्त्वे 'यचिभमि'ति भत्वे 'अल्लोपोऽनः' इत्यल्लोपे राजन् असित्यवस्थायाम् 'अचः परस्मिन्नि'त्यत्र पञ्चमीसमासाऽऽश्रयणादल्लोपस्य स्थानिवत्त्वेन व्यवधानाच्चुत्वाऽप्राप्तौ राज्ञ इति न सिद्ध्येदित्यत आह—नचाल्लोपः स्थानिवदिति। पूर्वत्राऽसिद्धे न स्थानिवदिति स्थानिवत्त्वनिषेधान्न चुत्वाऽनाऽऽपत्तिरिति भावः। नच षष्ठाऽध्यायस्थ'वाहऊडि'ति सूत्रस्थोठग्रहणेन ज्ञापितयाऽन्तरङ्गपरिभाषयाऽन्तरङ्गे श्चुत्वे कर्त्तव्ये बहिरङ्गाऽल्लोपस्याऽसिद्धत्वबोधनात्पूर्वोक्तस्य श्चुत्वाऽनाऽऽपत्तिरूपदोषस्य तादवस्थ्यमेवेति वाच्यम्। यथोद्देशपक्षे उक्तपरिभाषारूपप्रति श्चुत्वविधायकशास्त्रस्याऽसिद्धत्वादन्तरङ्गशास्त्राऽभावेन प्रतिपाद्याऽभावात्परिभाषाऽप्रवृत्तेः, तथा च श्चुत्वे कस्याऽपि व्यवधानरूपप्रतिबन्धकस्याऽसत्त्वादुक्तप्रयोगोपपत्तिः सुलभैव। नचकार्य्यकालपक्षे विधिशास्त्रप्रदेशे कार्य्यार्थं परिभाषाऽपकर्षणादस्या उक्तशास्त्रदेशस्थत्वादिमाम्प्रत्यन्तरङ्गशास्त्राऽसिद्धत्वाऽभावेन परिभाषाप्रवृत्तौ बाधकाऽभावात्पूर्वोक्तदोषस्तदवस्थ एवेति वाच्यम्। एकतरपक्षेण लक्ष्यसिद्धौ पक्षाऽन्तरमवलम्ब्य दोषदानस्य भाष्ये क्वाऽप्यनाऽऽश्रयणात्। वस्तुतस्तु कार्य्यकालपक्षेऽप्युक्तपरिभाषाऽप्रवृत्तेरुक्तत्वाच्चेति दिक्॥

ननु प्रतिदिवन् शब्दाच्छसि शस्येत्त्वे भत्वे अल्लोपे प्रतिदिवन् अस् इति स्थितौ पञ्चमीसमासाऽऽश्रयणादचः परस्मिन्निति स्थानिवत्त्वादिकारस्योपधात्वाऽऽभावाद्धलि चेति दीर्घाऽप्राप्तौ प्रतिदीव्न इतीष्टरूपस्य सिद्धिर्न स्यादिति सन्देहे जाते समाधानमाह—नचाऽल्लोपस्य स्थानिवत्त्वमिति। 'न पदान्त' सूत्रेण दीर्घविधौ कर्त्तव्ये स्थानिवत्त्वनिषेधाद्दीर्घे इष्टप्रयोगसिद्धिः, नचाऽन्तरङ्गपरिभाषयाऽन्तरङ्गे दीर्घे

कर्तव्ये बहिरङ्गाऽल्लोपस्याऽसिद्धत्वेन पूर्वोक्तदोषस्य तादवस्थ्यमिति वाच्यम् । यथोद्देशपक्षे षाष्ठीमुक्तपरिभाषाम्प्रति दीर्घस्याऽसिद्धत्वादन्तरङ्गाऽभावेन प्रतिपाद्यस्याऽसत्त्वात्परिभाषाया अप्राप्तेरिति भावः

ननु वृत्रघ्न इत्यत्र १(अनन्तरस्ये)ति न्यायेन 'अत्पूर्वस्ये'त्यस्य 'हन्तेरि'त्येतद्बाधकत्वेन निर्णीतत्वात् 'एकाजुत्तरपदे' इत्यनेन प्राप्तणत्ववारणाऽसम्भवाण्णत्वं दुर्वारमेवेत्याशङ्कायामाह—योगविभागसामर्थ्यादिति । हन्तेरत्पूर्वस्येत्येकेनैव योगेन णत्वसिद्धौ पृथक्योगकरणसामर्थ्यादुक्तन्यायं बाधित्वाऽत्पूर्वस्येत्यनेनाऽत्र प्रवृत्तियोग्यणत्वविधायकशास्त्रमात्रस्य बाधान्न णत्वम् । नचाऽकारस्य लोपेऽत्पूर्वत्वाऽभावात्कथं निषेध इति वाच्यम् । पूर्वसाद्विधिरिति पञ्चमीसमासाऽऽश्रयणात्स्थानिवत्त्वेन निषेधप्राप्तेः सुलभत्वात् । नचाऽल्लोपस्य स्थानिवत्त्वेन कुत्वं कथमिति वाच्यम् । नकारे परे कुत्वविधानसामर्थ्यादल्लोपस्य स्थानिवत्त्वाऽभावबोधनाद्दिति भावः ॥

यत्तु वृत्रघ्न इत्यादौ वैकल्पिकं णत्वं माधवेनोक्तमिति । अस्यायमभिप्रायः भसंज्ञायामल्लोपेऽल्विधित्वेन स्थानिवत्त्वाऽभावादुत्तरपदस्याऽनच्त्वात् 'एकाजुत्तरपदे' इत्यास्याऽप्राप्त्या 'प्रातिपदिकान्तनुम्विभक्तिषु चे'त्यस्य प्रवृत्तौ रूपद्वयमिति—तद्भाष्यविरुद्धमिति । (कुव्यवाये हादेशे णत्वप्रतिषेधो वक्तव्यः) किम्प्रयोजनं वृत्रघ्नः सुघ्नः, प्राघानि हन्तेरत्पूर्वस्येत्यत्पूर्वग्रहणं न कर्त्तव्यम्भवतीति भाष्य उक्तम् भाष्यवार्त्तिकयोर्णत्वाऽभावे तात्पर्य्येण णत्वे तु स्पष्ट एव विरोध इति भावः । न च सूत्रसत्त्वे प्रघनाघन इत्यत्र णत्वं तदसत्त्वे तन्न स्यादिति वाच्यम् । अत्पूर्वग्रहणस्य ह्स्थानिककर्णाऽभाववद्धन्तेरुपलक्षणत्वेनाऽदोषात् । अत एव योगविभागमूलकवार्त्तिके प्रत्याख्यातेऽपि फलभेदो नेति दिक् ॥

ननु मघवन्शब्दात्सौ 'मघवा' बहुलमि'ति मकारस्य त्रादेशे 'उगिदचामि'ति नुमि 'हल्ङ्याबि'ति सुलोपे 'संयोगान्तस्ये'ति तकारलोपे मघवन्निति स्थितौ संयोगान्तलोपस्याऽसिद्धत्वेन नान्तत्वाऽभावाद्दीर्घो न स्यादित्याशंक्य समाधत्ते—इद दीर्घे कर्त्तव्ये इति । मघवा बहुलमेतत्सूत्रस्थबहुलग्रहणेन दीर्घे कर्त्तव्ये संयोगान्तलोपो नासिद्ध इति कल्पनादुक्तदोषाऽवकाशो नेति ।

१ अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति न्यायस्वरूपम् ।

समाधातुरभिप्रायः। बहुलग्रहणस्याऽनेकार्थकत्वेन विपरीतनियमस्यापि सम्भवात्तेन सूत्रोक्तनियम एव कल्पनीय इत्यत्र प्रमाणं दर्शयितुमाह—तथाच श्वन्नुक्षन्नित्यादि। अयम्भावः उक्तसूत्रेण मह्धातोः कनुप्रत्ययाऽवुगाऽऽगमघकारनिपातनेन मघवा मघवानावित्यादि धनार्थकमघशब्दान्मतुपि मकारस्य वकाराऽऽदेशे 'अत्वसन्तस्ये'ति दीर्घे मघवान् मघवन्तावित्यादि च द्विविधरूपमित्थं संसाध्य 'मघवा बहुलमि'ति सूत्रं कैयटः प्रत्याख्यातवान्। एवञ्च बहुलग्रहणेनाऽसिद्धत्वाऽभावस्याऽकल्पनादारम्भे मघवन् प्रत्याख्याने मघवानिति फलभेदस्य स्पष्टत्वेन प्रत्याख्यानासङ्गतिः स्यात्, फलैक्ये प्रत्याख्यानं सम्भवति नतु फलभेद इति भाष्यात्। तथाच बहुलग्रहणेन तथा कल्पनीयं यथा फलभेदो न स्यात्। अत एव [1]अर्वणस्तृमघोनश्चेति श्लोकवार्तिकं सङ्गच्छते, अनेन च मघवन्शब्दस्य लोकेऽनभिधानं बोध्यम्। बहुलग्रहणेन तथा कल्पनायां प्रमाणान्तरं कवि प्रयोगं दर्शयितुमाह—हविर्यज्वितीत्यादि॥

ननु 'ह्वः सम्प्रसारणमि'त्यतः सम्प्रसारणपदाऽनुवृत्त्यैव सिद्धावेतत्सूत्रस्थसम्प्रसारणपदस्य सामर्थ्यात्सम्प्रसारणमात्रनिषेधकत्वेन दूरस्थस्याऽपि श्वयुवेत्यस्य व्यथो लिटीत्यस्य च निषेधः। नच न सम्प्रसारणमित्यतः सम्प्रसारणपदस्य व्यथो लिटीत्यत्राऽनुवृत्त्या व्यथिव्यधिप्रभृतिधातौ चरितार्थत्वेन यून इत्यत्र प्राक्कृतस्य सवर्णदीर्घरूपैकादेशस्याऽचः परस्मिन्निति स्थानिवत्त्वादुकारेण व्यवधानात्सम्प्रसारणपरत्वाऽभावेन निषेधो न स्यादिति वाच्यम्। व्यथोऽभ्यासस्य सम्प्रसारणं स्यान्न तु यकारस्येत्यर्थकेन व्यथो लिटि न य इति न्यासेनैव सिद्धौ सम्प्रसारणग्रहणस्य यून इत्यत्र यकारस्य सम्प्रसारणनिषेधकत्वेनैव चारितार्थ्यस्य वक्तव्यत्वेन व्यवधानेऽप्येतन्निषेधप्रवृत्तेरङ्गीकारात्'यूनस्तिरि'ति निर्देशाच्चेत्याऽऽशयेनाह—इति यकारस्य नेत्वमिति। नच कार्य्यकालपक्षे श्वयुवेत्यत्रोपस्थितस्येग्यणः सम्प्रसारणमित्यस्य पदैकवाक्यतयाऽन्वये भसंज्ञानिमित्तस्य यणाऽन्वयेन यकाराद्यजादिकप्रत्ययावधित्वाद्यसर्वनामस्थानपरकाऽव्यव-

---

1 अर्वणस्तृमघोनश्च न शिष्यं छान्दसं हि तत्। मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनादिति श्लोकवार्तिकस्वरूपम्।

हितपूर्वत्वविशिष्टस्य यणः सम्प्रसारणमित्यर्थे १ ( येन नाव्यवधान) न्यायेन पूर्वस्य सम्प्रसारणाऽप्राप्त्या व्यर्थमेव सूत्रमिदमिति वाच्यम् । उक्तपक्षेऽपि संज्ञासूत्राणां वाक्यभेदेनत्र सम्बन्धस्योक्तत्वेन सम्प्रसारणविधायकेषु यण इत्यस्याऽसत्त्वेन निमित्तस्य यणाऽनन्वयेनाऽदोषात् । अत्रैतन्निषेधशास्त्रमपि ज्ञापकं बोध्यम् ॥

ननु यून इत्यत्र सकृत्प्रवृत्त्यैवोभयोः सम्प्रसारणे जाते निषेधो व्यर्थः, किञ्चोकारस्य दीर्घे कृतेऽनल्विधाविति निषेधेन स्थानिवत्त्वाऽप्राप्त्या सम्प्रसारणपरत्वेन निषेधशास्त्रप्राप्तिरेव न, किञ्च ( लक्ष्ये लक्षणं सकृदेव प्रवर्तते) इति न्यायेन वकारस्य सम्प्रसारणविधानेन चरितार्थस्य श्वयुवेत्यस्य पुनरप्राप्तिबोधनेन निषेधशास्त्रं सर्वथा व्यर्थमेवेत्याशङ्क्य समाधत्ते—अत एव ज्ञापकादन्त्यस्य यणः पूर्वं सम्प्रसारणमिति । एतस्मादेव ज्ञापकाद्दीर्घस्याऽपि स्थानिवत्त्वेन सम्प्रसारणपरत्वे निषेधः सुलभः, एतदारम्भसामर्थ्यादचः परस्मिन्निति स्थानिवत्त्वेन न व्यवधानशङ्कालेशोऽपि । नच लक्ष्ये लक्षणन्यायेन पूर्वस्याऽप्राप्तौ व्यर्थमेवैतन्निषेधशास्त्रमिति वाच्यम् । कार्य्याश्रयवर्णभेदेन लक्ष्यभेदादुक्तन्यायस्याऽविषयत्वेनाऽप्रवृत्त्या तस्याऽऽवश्यकत्वात् । यमुद्दिश्य पूर्वं प्रवृत्तिस्तमुद्दिश्यैव पुनः प्रवृत्तौ तन्न्यायविषयत्वादिति भावः ॥

ननु अनञः किमित्यस्य सूत्रेऽसाविति पर्य्युदासेन सावप्रासावनर्वेति प्रत्युदाहरणमनुपपन्नमिति चेन्न । तस्य यज्वन्शब्दसदृशोऽनर्वन् शब्दो व्यावर्त्य इत्यत्र तात्पर्य्यादित्याशयेनाह—अनञः किम् । अनर्वेति ॥

ननु 'पथिमथ्यृभुक्षामादि'ति सूत्रे आदित्यत्र निरनुनासिकाऽऽकारोच्चारणेऽपि तपरसूत्रस्याऽनणीव विधीयमानेऽपि प्रवृत्त्यभ्युपगमेन सर्वग्रहणान्नकारस्याऽऽन्तरतम्यादनुनासिकः स्यात् । नच तपरस्तत्कालस्येत्यत्राणुदित्सूत्रादप्रत्ययपदाऽनुवृत्त्याऽविधीयमान एव तत्प्रवृत्त्या न कश्चिद्दोष इति वाच्यम् । तत्राऽप्रत्ययपदाऽनुवृत्तौ विनिगमनाविरहेण दोषस्य तादवस्थ्यादित्याशङ्क्य समाधत्ते—आ आ-

१ येन नाव्यवधानेति । येननाऽव्यवधानं तेन व्यवहितेऽपि इति स्वरूपम् ।

दिति प्रश्लेषेति । अत्र प्रश्लेषेणाऽऽकारद्वयविधानात्सर्वाऽऽदेशत्वं नाऽऽशङ्कनीयम्, विशेष्यविशेषणभावेनान्वयादनेकाल्त्वाऽभावात् । प्रश्लेषेण शुद्धाया एवाऽऽव्यक्तेर्विधानान्नाऽनुनासिकः । नच (भाव्यमानेन सवर्णानां ग्रहणं ने)ति परिभाषया सवर्णग्रहणनिषेधाद्दोषाऽभावेन प्रश्लेषो नावश्यक इति वाच्यम् । भाव्यमानोऽण् सवर्णान् न गृह्णातीत्येव पाठादतोऽण्त्वाऽभावान्निषेधाऽप्राप्त्या सवर्णग्रहणस्य दुर्वारत्वेन तद्व्यावृत्तये प्रश्लेषस्याऽऽवश्यकत्वादिति प्राञ्चः। वस्तु तस्तु भाष्येऽण्रहिताया एवोक्तपरिभाषायाः पाठेनाऽस्या गुणाऽभेदकत्वेन जातिपक्षेणाऽणुदित्सूत्रेण तपरसूत्रेण च प्राप्तसवर्णग्रहणस्य निषेधकत्वेनाऽदोषात् । अनुनासिकाऽऽकारविधानस्यैवेष्टत्वे प्रक्रियालाघवाय तथैवोच्चारणीये निरनुनासिकाऽऽकारविधानेन शुद्धाऽऽव्यक्तेरेव विधानमित्युक्तत्वाच्चेति भावः ॥

शतानि सहस्राणीति । ननु शतानीत्यनुपपन्नं विंशत्याद्याः सदैकत्वे इत्यनुशासनादिति चेन्न । एकशेषेणाऽनेकशतबोधतात्पर्य्यकत्वात् । नच कृते नुमि नान्तत्वेन षट्त्वाद्विभक्तेर्लुगिति वाच्यम् । सर्वनामस्थानसन्निपातेन कृतस्य नुमस्तत्सन्निपातविघातकलुगुपपादकत्वेन षट्संज्ञाया अपि सर्वनामस्थानसन्निपातविघातकत्वेन (सन्निपात) परिभाषया तदनिमित्तत्वबोधनात् । कुम्भकारेभ्यो नगरकारेभ्य इत्यत्राऽव्ययसंज्ञावारणपरभाष्यप्रामाण्यात्परस्परासन्निपातविघातकेऽप्युक्तपरिभाषाप्रवृत्तिस्वीकारादिति भावः ॥

ननु 'रायो हली'त्यतो हलीत्यस्याऽपकर्षाद्धलादावात्वविधानेनाष्टावित्यत्राऽऽत्वन्न स्यादित्यत आह—अष्टभ्य इति वक्तव्य इति । आत्वस्य लक्षणवशसम्पन्नत्वे हि वैकल्पिकत्वेन लाघवाद्ध्रस्वघटित एव निर्देष्टव्ये कृताऽऽत्वाऽनुकरणं ज्ञापयति क्वचिदजादावप्यात्वमिति भावः । दीर्घान्तादष्टनः पराऽसर्वनामस्थानविभक्तिरुदात्तेत्यर्थके 'अष्टनो दीर्घादि'ति सूत्रे दीर्घग्रहणं ज्ञापयति वैकल्पिकमिदमात्वमिति, तथाहि, दीर्घाऽन्तादेवाऽष्टनः परस्या असर्वनामस्थानविभक्तेरुदात्तत्वाय दीर्घग्रहणं तिष्ठति, आत्वस्य नित्यत्वे तु दीर्घग्रहणाऽभावेऽपि ह्रस्वान्तादष्टनः परस्या उक्तविभक्तेरुदात्तत्वाऽप्राप्त्या दीर्घग्रहणं स्पष्टमेव व्यर्थं स्यादिति दिक् ॥

ननु प्रियाष्टन् शब्दाच्छसि शस्येरचे लोपे च कृते भस्येऽल्लोपे

प्रियाण्न् अस् इति स्थितौ टकारयोगे नकारस्य ष्टुत्वं कुतो नेत्यत आह—इह पूर्वस्मादपीति। अचः परस्मिन्निति सूत्रे पूर्वविधावित्यत्र पूर्वस्माद्विधिः पूर्वविधिरिति पञ्चमीसमासाऽऽश्रयणादल्लोपस्य स्थानिवद्भावादकारेण व्यवधानात्ष्टुत्वन्नेति। नच (पूर्वत्राऽसिद्धे न स्थानिवदि) ति स्थानिवत्त्वनिषेधादुक्तदोषस्तदवस्थ एवेति वाच्यम्। संयोगादिलोपलत्वणत्वेषु विधिषु कर्त्तव्येषूक्तवचनस्य न प्रवृत्तिरित्यर्थकेन (तस्य दोषः संयोगादिलोपलत्वणत्वेषु) इति वार्त्तिकेन णत्वे कर्त्तव्ये तदप्रवृत्तिबोधनेनादोषात्। नच तस्य दोष इति वार्त्तिके प्रतिपदोक्तणकारस्यैव ग्रहणं नतु लाक्षणिकस्य ष्टुत्वनिष्पन्नस्येति वाच्यम्। तत्र तादृशणकारग्रहणे प्रमाणाऽभावात्। मूर्द्धन्यपदानुवर्त्तनेनैव सिद्धौ रषाभ्यामित्यत्रत्यणकारस्य भाष्यकृता प्रत्याख्यातत्वेन प्रतिपदोक्तत्वाऽलाभाच्चेति भावः। ननु रषाभ्यामित्येतदारम्भसामर्थ्यात्पञ्चमीसमासस्याऽनित्यत्वेन स्थानिवत्त्वाऽभावात्ष्टुत्वापत्तिर्दुर्वारैवेत्यत आह—कार्य्यकालपक्ष इति। कार्य्येण हेतुना काल्यते स्वसन्निधिं प्राप्यते इति कार्य्यकालपक्षशब्दार्थः। अत्र पक्षे स्वप्रदेशे विधिशास्त्रेण कार्य्यहेतोरपकृष्टायाः परिभाषायाः पृथगेव वाक्यार्थबोधो भवति नतु विधिशास्त्रेण सहेति विवेकः। एवञ्च प्रकृते ष्टुत्वविधायकशास्त्रेणाऽन्तरङ्गपरिभाषाऽपकर्षात्तया तस्याऽन्तरङ्गत्वबोधनेन तत्र कर्त्तव्ये तदपेक्षया बहिरङ्गस्याऽल्लोपस्याऽसिद्धत्वान्न ष्टुत्वमिति दिक्॥

ननु 'युजेरसमासे' इत्यनेनाऽसमास एव नुमो विधानेन सोपपदे 'चोः कुरि'ति कुत्वेनैव सिद्धत्वात्क्विनि क्विपि च न कोऽपि विशेष इत्यत आह—निरुपपदाद्युजेः क्विन्निति॥

ननु 'सृजिदृशोर्झल्यमकिती'ति सूत्रे रज्जुसृड्भ्यामिति भाष्यप्रयोगात्कास्यच् सूत्रे उपयट्काम्यतीति प्रयोगाच्च 'क्विन्प्रत्ययस्य कुः' इति कुत्वन्नेत्याशयेनाऽऽह—इह सृजियज्योः कुत्वन्नेति क्लीबे वक्ष्यत इति।

परिमृडिति। नन्वत्र 'मृजेर्वृद्धिरि'ति कुतो न वृद्धिरिति चेन्न। उक्तसूत्रेण धातुविहितप्रत्ययपरे वृद्धेर्विधानेन (धातोरुच्यमानं कार्य्यं तत्प्रत्यये) इति परिभाषयाऽत्र सुब्निमित्तकवृद्धेरप्राप्तेः। नच क्विनो

धातोर्विहितत्वेन तन्निमित्तिका वृद्धिर्दुर्वारैवेति वाच्यम्। क्ङिति चेति निषेधात्तन्निमित्तिकाया अपि वृद्धेरप्राप्तेरिति दिक्॥

ननु 'विश्वस्य वसुराटोः' इत्यनेन वसुशब्दे राट्शब्दे च परे दीर्घविधानादेतद्दृष्ट्या षत्वादीनामसिद्धत्वाद्राट्शब्दपरत्वाऽभावेन दीर्घो न स्यादित्यत आह—राडिति पदान्तोपलक्षणमिति। राडित्यस्य पदान्तोपलक्षकत्वेन पदान्तराजशब्दे परे दीर्घ इत्यस्य फलितत्वान्न काऽप्यनुपपत्तिरिति भावः। नचोक्तसूत्रेण वसुशब्दे दीर्घविधानादादित्यविश्ववसव इत्यमरश्लोके कुतो न दीर्घ इति वाच्यम्। तत्र सूत्रे 'नरे: संज्ञायामि' त्यतः संज्ञापदाऽनुवर्तनेन संज्ञायामेव तद्विधानादित्यलम्॥

ननु त्वं स्त्री अहं स्त्री इत्यत्र मपर्य्यन्तस्य त्वाहादेशयोः कृतयोर्लोपेन दकारनिवृत्तौ त्व अम् अह अमित्यवस्थायां परमपि पूर्वरूपं बाधित्वाऽपरनिमित्तकत्वेनाऽन्तरङ्गत्वाट्टाप् स्यात्। नच युष्मदस्मदोरलिङ्गत्वात्स्त्रियां विहितस्य टापोऽप्राप्तिरेवेति वाच्यम्। (शिशी लुङ्नुम्विधिभ्यो युष्मदस्मदोर्विभक्त्याऽऽदेशाः पूर्वविप्रतिषेधेने)ति वार्त्तिकप्रामाण्येन तयोर्लिङ्गवत्त्वप्रतीतेरिति चेन्न। शेष इति षष्ठ्यर्थे सप्तमी तथा च मर्य्यन्ताच्छेषस्याऽदशब्दस्य लोप इत्यर्थेऽद इत्यस्य लोपेनाऽदन्तत्वाऽभावादुक्ताऽऽपत्तेरयोगात्। अन्यथा, आत्वयत्वयोरपवादत्वेन तन्निमित्तेतरविकावेव लोपप्रसक्तौ शेषग्रहणस्य वैयर्थ्याऽऽपत्तेरिति भावः। वस्तुतस्तु अन्त्यलोपपक्ष एव सिद्धान्तः, अत एव नचाऽऽदेशो हलादिरस्तीति 'युष्मदस्मदोरनादेशे' इति सूत्रस्थभाष्योक्तिः सङ्गच्छते। एतेनाऽम्यमादेशस्यैव न्याय्यत्वमुक्तम्। तथा च प्रकृते टाबापत्तिस्तदवस्थैवेति चेदुच्यते, अन्तरङ्गपरिभाषया टापः प्रागन्तरङ्गत्वादतो गुणे इत्यस्यैव प्रवृत्तिरिति न तदापत्तिरिति दिक्॥

ननु युष्मच्छब्दादस्मच्छब्दाच्च प्रथमाद्वितीययोर्द्विवचने औ तस्य 'ङे प्रथमयोरम्' इत्यमि 'युवाऽऽवौ द्विवचने' इति क्रमेण युवाऽऽवाऽऽदेशे युवाम् आवामित्यनयोर्मपर्य्यन्ताऽधिकारं विनाऽपि सिद्धौ व्यर्थमेवाऽधिकारसूत्रमित्याऽऽशयेनाऽऽशङ्कते—मपर्य्यन्तस्य किमिति। समाधत्ते—साकच्कस्य मा भूदिति। अधिकारसूत्राऽभावेऽकज्विशिष्टस्यापि युष्मदोऽस्मदश्चाऽऽदेशे युवकामाऽऽवकामित्यनयोर्न

सिद्धिरित्याऽऽवश्यकं तदिति भावः। ननु ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकजन्यत्र तु सुबन्तस्य टेः प्रागित्यस्य त्वयके-त्यादि सिद्धये वक्ष्यमाणत्वादिहाऽरुचः प्रागादेशे ततः सुबन्तस्य टेः पूर्वमकचि कृते प्रयोगद्वयसिद्धिः सुलभैवेति नेदमधिकारसूत्रस्य प्रयोजनमित्यरुचेराह—त्वया, मयेति। अत्रोकाऽधिकारसूत्राऽभावे समुदायस्याऽऽदेशे 'योऽचि'त्यनेनाऽकारस्य यत्वे नेष्टप्रयोगसिद्धि-रित्याऽऽवश्यकन्तदिति भावः। नन्वत्राऽव्यजादौ विभक्तावकार-स्यैत्वमित्यर्थकेन 'अव्यये' इति न्यासेनैवोक्तप्रयोगोपपत्तौ व्यर्थमेव-तदित्यरुचेराह— युवकाभ्याम। आवकाभ्यामिति। अत्रोक्तनिय-मबलेनाऽन्तरङ्गत्वात्सर्वनाम्नष्टेः प्रागकचि ततश्चाऽऽदेशे नोक्तप्रयो-गसिद्धिरिति तदाऽऽवश्यकमिति दिक्॥

ननु अन्त्यलोपपक्षे जसोऽमादेशेऽपि तस्य स्थानिवद्भावेन जस्-बुद्ध्या 'जसः शी'ति श्यादेशो दुर्वार इत्याऽऽशङ्कते—इह शेषे लोपोऽन्त्यलोप इति पक्षे जसः शी प्राप्त इति। समाधत्ते— अङ्गकार्य्ये कृते पुनर्नाङ्गकार्य्यमिति न भवतीति। अयम्भावः, (अङ्गवृत्ते पुनर्वृत्तावविधिः) इति परिभाषास्वरूपम्। अङ्गेऽङ्गाधिकारे वृत्तं निष्पन्नं यत्कार्य्यं तस्मिन्सति पुनरन्यस्याङ्गकार्य्यस्य वृत्तौ प्रवृ-त्तावविधानं भवतीत्यर्थः, तथाच, अङ्गाऽधिकारवृत्ते कार्य्येऽमि सति पुनरन्यस्याङ्गाधिकारवृत्तकार्य्यस्य श्यादेशस्य न विधानमिति न दोषः। इयं परिभाषा 'ज्यादादीयसः' इत्याद्विधानेन ज्ञापिता, अन्य-थेकारलोपेन 'अकृत्सार्वधातुकयोरि'ति दीर्घेण च ज्यायानिति सिद्धावाद्विधानं स्पष्टमेव व्यर्थं स्यात्। ननु 'द्वयोरि'त्यादिनिर्देशे-नोक्तपरिभाषाया अनित्यत्वात्किञ्चाऽङ्गोद्देश्यककार्य्ये पुनरङ्गोद्देश्य-ककार्य्यमेवेत्यर्थकरणादुक्तपरिभाषाऽप्रवृत्तेः। किञ्चाऽस्या लक्ष्यसि-द्ध्यर्थम्भाष्येकाप्यनाश्रयणाच्च श्याऽऽदेशाऽऽपत्तिस्तदवस्थैवेत्यत आह—'ङे प्रथमयोरि'ति। ङे प्रथमयोरम् शसोनेति संहितापाठ इति भावः, नातस्संयोगान्तलोपे ऋत्वग्रहणाऽनुवृत्त्याऽपि दोषः। वस्तुतस्तु, न प्रश्लेषेणाऽपि निर्वाहस्तस्य भाष्येऽदर्शनादेवञ्च (सन्नि-पात) परिभाषयैवोक्ताऽऽपत्तिवारणमिति न कश्चिद्दोष इति दिक्॥

ननु 'भ्यसो भ्यमि'ति सूत्रे भाष्ये भ्यम् अभ्यम्वाऽऽदेश इति सन्देहे यदि भ्यमाऽऽदेशस्तदा 'शेषे लोप' इत्यन्तलोपे एत्वं प्राप्नोति,

अथाऽभ्यमाऽऽदेशः शेषे लोपष्टिलोप इत्यन्तस्योदात्तनिवृत्तिस्वरः प्राप्नोतीत्युक्त्वा यथेच्छसि तथाऽस्त्वित्युक्तन्तदाह——आद्यः शेषे लोपस्याऽन्त्यलोपत्व एवेति। अत्र पक्षे नैत्वमाशङ्कनीयम्, अङ्गवृत्तपरिभाषयैव तद्वारणात्। अस्या अनित्यत्वे तु सन्निपातपरिभाषयैवैत्वं वारणीयम्। अभ्यमाऽऽदेशस्तु टिलोपपक्षेऽन्त्यलोपपक्षे च साधुर्नतु कश्चिद्दोषः। नचाऽन्त्यलोपपक्षेऽकारोच्चारणसामर्थ्यात्पररूपं बाधित्वा सवर्णदीर्घाऽऽपत्तिरिति वाच्यम्। अकारोच्चारणस्यैत्वनिवृत्त्या चारितार्थ्येन सामर्थ्यविरहात्पररूपाऽबाधेन परत्वादस्यैव प्रवृत्तेः। नचाऽङ्गवृत्तपरिभायैव दीर्घव्यावृत्तावभ्यमित्यत्राऽकारोच्चारणं व्यर्थमिति वाच्यम्। तस्योक्तपरिभाषाऽनित्यत्वज्ञापनार्थत्वेन साफल्यात्। नचाऽन्त्यलोपपक्षे 'एकाऽऽदेश उदात्तेनोदात्त इत्यनेन युष्मभ्यमित्यत्र युष्मोत्तराऽकारस्योदात्तत्वं टिलोपपक्षे तु, अभ्यमोऽनुदात्तत्वेन युष्मोत्तराऽकारस्याऽनुदात्तत्वमिति फलभेद इति वाच्यम्। यत्राऽनुदात्ते वर्णे परे उदात्तो लुप्यते स वर्ण उदात्त इत्यर्थकेन 'अनुदात्तस्य च यत्रोदात्तलोप' इत्यनेन तस्योदात्तत्वस्यैव विधानेन फलभेदाऽभावादिति दिक्॥

ननु आकमाऽऽदेशात्पूर्वमनादेशत्वेन 'यत्वस्य प्राप्त्या शेषे लोप इत्यस्य यत्वनिमित्तेतरनिमित्ताऽपेक्षितत्वेनाऽन्त्यलोपाऽप्राप्ताववर्णान्तत्वाऽभावात्सुडागमाऽप्रसक्त्या साम इति ससुट्कनिर्देशो व्यर्थः सूत्राऽसंगतिश्चेत्याऽऽशंक्य समाधत्ते—भाविनः सुटो निवृत्त्यर्थं ससुटकनिर्देश इति। आकमि शेषे लोपे कृतेऽकारान्तत्वात्प्राप्तस्येत्यर्थः अयम्भावः, यथाऽऽर्द्धधातुकविषये 'अस्तेर्भूरि'त्यनेन भूप्रयोगोऽस्तेरप्रयोगो बोध्यते, एवं सामः प्रसङ्गे आकमित्यनेन सुडामोरत्यन्तमप्रयोगो बोध्यते, यद्यपि आम् दशायां साम इति स्थानिनोऽसत्त्वेन प्रकृताऽऽदेशाऽप्राप्त्या यत्वेऽन्त्यलोपाऽप्राप्तौ सुटोऽसम्भवेन सर्वथा साम इति स्थानिस्वरूपाऽसिद्धिरेव तथापि भाविनं सुटं निवर्त्तयितुं ससुट्कनिर्देशसामर्थ्यादाम्येव सामत्वाऽऽरोपेणोक्तस्थानिस्वरूपस्य सिद्धत्वादादेशप्रवृत्तौ स्थानिवत्त्वेन सामत्वस्यैवाऽऽनयनान्नत्वाऽऽमत्वस्येति न सुडागमाऽऽपत्तिरिति। यत्तु साम इत्यत्र तन्त्रेणाऽऽमोऽपि सत्त्वात्तस्य पूर्वमाकमि ततोऽन्त्यलोपेऽकारान्तत्वात्सुटि तस्याऽप्याकमि न कोऽप्यनुपपत्तिरिति केचित्तन्न। तन्त्राऽऽ-

श्रवणे गौरवात् । केचित्तु 'आम आकमि'त्येव सिद्धे सकारोच्चारणं व्यर्थमिति सन्देहे पङ्क्तिमिमामवतारयन्ति—भाविनः सुटो निवृत्त्यर्थमिति । आकमः स्थानिवद्भावादाम् वुद्धौ प्राप्तसुटो व्यावृत्त्यर्थमुक्तनिर्देशः साम आकमादेशे तु स्थानिवत्त्वेन सामत्वमेव नाऽऽमत्वमिति न कश्चिद्दोषः । वस्तुतः, 'आमो डाकमि'ति न्यासे आमः स्थाने डाकम्विधानाड्डित्वाट्टिलोपेनेष्टसिद्धावलमेतदाऽऽयासेनेति । नन्वाऽऽकमि दीर्घोच्चारणम्व्यर्थमकारोच्चारणसामर्थ्येन पररूपस्य बाधादिति चेन्न । अकारोच्चारणस्यैत्वनिवृत्त्या चरितार्थत्वादित्यलम् ॥

'युवावौ द्विवचने' 'त्वमावेकवचने' इति सूत्रद्वयेऽपि द्विवचनैकवचनशब्दयोरर्थपरत्वं नतु प्रत्ययपरत्वमिति तत्फलं प्रदर्शयति—समस्यमान इत्यादिना । द्व्येकत्ववाचिनीति । द्वित्वैकत्वविशिष्टवाचिनीत्यर्थः । समासार्थ इति । मुख्यविशेष्यमित्यर्थः । अन्यसंख्यायुक्तश्चेदिति । युष्मदाद्यर्थगतसंख्येतरसंख्यायुक्तश्चेदित्यर्थः ॥

ननु 'युष्मदस्मदोः षष्ठीचतुर्थी'ति सूत्रेऽपदादावित्यधिकारो व्यर्थः पदात्परयोर्युष्मदस्मदोः षष्ठ्यादिविशिष्टयोर्वांनावित्याऽऽदेशौ स्त इत्यर्थेनैव सिद्धेरित्याशयेन शङ्कते—अपदादौ किमिति । समाधत्ते—वेदैरशेषैरिति । उक्तसूत्रेऽपदादावित्यस्याऽभावेऽत्र पूर्वाऽन्तवद्भावेनैकाऽऽदेशस्य पूर्वपदत्वादेकदेशविकृतन्यायेन स्मानित्यस्य द्वितीयाऽन्ताऽस्मच्छब्दत्वाद्वादेशः स्यात् तत्सत्त्वेतु नोक्तदोषोऽपदादावविद्यमानत्वादिति भावः । आदेशे सति नः कृष्णः सर्वदाऽवत्विति पादादित्वाऽपत्त्योपजीव्यविरोधान्नादेश इति केचित् स्मानित्यस्याऽपदादौ विद्यमानत्वादादेशः, सत्यादेशेऽपदादित्वस्य विघातः पादादित्वस्य चाऽऽपत्तिरिति स्पष्ट एवोपजीव्यविरोध इति दिक् ॥

ननूक्तरीत्या षष्ठ्याद्यन्तानामेवादेशा भविष्यन्ति स्थग्रहणं व्यर्थमिति सन्देहादाह—स्थग्रहणाच्छ्रूयमाणविभक्तिकयोरेवेति । अत्र स्थशब्दोऽहानौ वर्त्तते । यथा समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः नायं सङ्कुचितः पन्था येन वाली हतो गत इति रामायणश्लोके समयं मा हासीरित्यर्थकः स्थाधातुरिति ॥

स्थग्रहणस्य फलमाह—नेह युष्मत्पुत्रो ब्रवीतीति । अत्र विभक्तेरश्रवणान्नाऽऽदेशः प्रत्ययलक्षणेनाऽपि नादेशापत्तिः । अनेन विभ-

क्तिवुद्धावपि वस्तुतस्तदभावात्। स्थग्रहणसामर्थ्याद्वस्तुतस्तत्सत्त्वे एवाऽऽदेशविधानादिति भावः। एकतिङ्वाक्यमिति। तिङ्पदेन तिङन्तं गृह्यते। एकं तिङन्तं यस्येति बहुव्रीहिः। एकतिङन्तघटितं वाक्यमित्यर्थः। तेन पचतीत्येतन्मात्रस्य न वाक्यत्वम्। इदं स्वशास्त्रे कार्योपयोग्येकवाक्यत्वलक्षणं, तेन न पश्य मृगो धावतीत्यादावव्याप्तिः। वस्तुतस्तु एकतिङन्तार्थनिष्ठमुख्यविशेष्यताकबोधजनकं वाक्यमिति तल्लक्षणम्। अत एव पश्य मृगो धावति पचति भवतीत्यादेश्चैकवाक्यत्वसिद्धिः। अत एव 'तिङ्ङतिङः' इत्यत्राऽतिङिति पर्य्युदासस्य सार्थक्यम्। लौकिकवाक्यत्वञ्च, सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्वितेत्यमरेणोक्तम्। तत्र वा शब्दश्चेदर्थे, कारकाऽन्वितक्रिया चेद्बोध्येति शेषः, तथाच कारकाऽन्वितक्रियाबोधकसुबन्तचयस्तथा तिङन्तचयस्तथा सुप्तिङन्तचयश्च वाक्यमित्यर्थ इत्यलम्

ननु 'तुल्यार्थैरतुलोपमाभ्यामित्यादिवत् 'नचवाहाहैवैः' इति तृतीयानिर्देशेनैव सिद्धौ युक्तग्रहणं व्यर्थमित्यत आह—युक्तग्रहणमिति। साक्षाद्योग इति। युष्मदस्मदर्थगतसमुच्चयादिद्योतकत्वे इत्यर्थः। परम्परासम्बन्धेति। स्वार्थाश्रयान्वय्यन्वयित्वादिरूपे इत्यर्थः। यत्र युष्मदस्मदर्थगतान् समुच्चयादीन् चादयो द्योतयन्ति तदा चादिभिः सहार्थद्वारा युष्मदस्मदोः साक्षाद्योगस्तत्राऽयं निषेधः यत्रैतादृशो योगो न तत्र नायं निषेध इति भावः॥

परम्परासम्बन्धेऽप्ययं निषेध इति। नच वाहाहैव युक्ते इति सूत्रस्थयुक्तग्रहणसामर्थ्याज्ज्ञाप्यते साक्षाद्योग एवाऽयं निषेधो नतु परम्परासम्बन्धेऽपीति पश्यार्थैरित्यत्र तु युक्तग्रहणाऽभावेनोक्तज्ञापकाऽसम्भवात्परम्परासम्बन्धेऽप्येतन्निषेधप्रवृत्तिरिति भावः॥

इह युष्मदस्मदोरादेशस्तिङन्तनिघात आमन्त्रितनिघातश्च नेति। अग्ने तव देवास्मान्पाहीत्यादौ सम्बोधनपदस्याऽऽमन्त्रितसंज्ञाविधानेनाऽविद्यमानवद्भावात्पदात्परत्वाऽभावेन न युष्मदस्मदोरादेशः। एवमग्ने नयेत्यादौ 'तिङ्ङतिङः' इति तिङन्तनिघातो न। अग्न इन्द्र, अग्ने वरुणेत्यादौ च 'आमन्त्रितस्य च' इत्यामन्त्रितनिघातो नेति विवेकः॥

ननु सर्वदा रक्ष देव न इत्यत्र देवेति सम्बोधनस्याऽऽमन्त्रितसंज्ञाविधानादविद्यमानवद्भावेन पदात्परत्वाऽभावादस्मदो नसादेशो

न स्यादित्याशंक्य समाधत्ते—सर्वदा रत्न देव न इत्यत्रलिति । उक्तरीत्या देवेत्यस्याऽविद्यमानवद्भावेऽपि रत्नशब्दमाश्रित्याऽऽदेशो बोध्य इति भावः । एवं इमंमे गङ्गे यमुने इतिमन्त्रे सम्बोधनपदानामविद्यमानवद्भावेनाऽऽदेशाऽप्राप्त्या मे शब्दाऽऽश्रयणादादेश इति दिक् ॥

ननु प्रति अच् अस् इति स्थितौ यण्लोपयोः प्राप्तौ बहिर्भूतनिमित्तकत्वेन बहिरङ्गलोपाऽपेक्षयाऽन्तरङ्गत्वाद्यणाऽऽदेशः स्यादित्याशङ्क्य समाधत्ते—अच इति लोपविषयेऽन्तरङ्गोऽपीति । अयम्भावः, बहिरङ्गशास्त्रेणाऽन्तरङ्गशास्त्रनिमित्तविनाशे पश्चात्सम्भाविते पूर्वमन्तरङ्गशास्त्रं न प्रवर्त्तते इत्यर्थिकया १ (अकृतव्यूह) परिभाषयाऽन्तरङ्गस्य यणोऽप्राप्त्या लोपे दीर्घे च कृते इष्टरूपसिद्धिः । नचोक्तपरिभाषाया भाष्येऽसत्त्वादुक्तदोषस्तदवस्थ एवेति वाच्यम् । एतदभावे लुप्ताऽकारनकारेऽञ्चतौ परेऽन्तरङ्गशास्त्रस्य न प्रवृत्तिरित्यर्थकेन (चौ प्रत्यङ्गस्य प्रतिषेधो वक्तव्यः.) इति भाष्योक्तवार्त्तिकेनैवोक्तदोषाऽयोगादिति दिक् ॥

आन्तरतम्यादिति । सूत्रे उपदे ह्रस्वदीर्घयोः समाहारद्वन्द्वे घ्यन्तत्वाद्ध्रस्वस्य पूर्वनिपाते सवर्णदीर्घे नपुंसकह्रस्वत्वम् । तेनोभयोर्ग्रहणमिति प्राञ्चः । वस्तुतो नैतद्युक्तम् उस् ऊस् इति द्वन्द्वे सुलोपे घ्यन्तत्वाद्ध्रस्वस्य पूर्वनिपाते नपुंसकह्रस्वसवर्णदीर्घयोः प्राप्तौ दीर्घस्य शब्दाऽन्तरप्राप्त्याऽनित्यत्वेन नित्यत्वादपरनिमित्तकत्वेनाऽन्तरङ्गत्वाच्च ह्रस्वत्वे ततः सवर्णदीर्घत्वे उ इति रूपाऽनुपपत्तेः । अत एव 'ऊकालोज्झ्रस्वदीर्घप्लुतः' इत्यत्र, उकाल इति न कृतम् । तस्मात् 'दिव उत्' 'ऋत उदि'त्यत्र च तपरकरणेन ज्ञापितया (भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति) इति परिभाषया सिद्धिर्बोद्धया ॥

ननु 'ष्यङः सम्प्रसारणमि'त्यत्र भाष्ये (अनन्त्यविकारेऽन्त्यसदेशस्ये)ति परिभाषा पठिता । अन्त्यसदेशाऽनन्त्यसदेशयोरेकप्रयोगे

---

१ अकृतव्यूहेति । अकृतव्यूहाः पाणिनीयाः इति परिभाषास्वरूपम् । अत्र ज्ञापकं समर्थानां प्रथमाद्वेति सूत्रे समर्थानामिति, तथाहि कृतदीर्घेभ्यःसुस्थितादिभ्यःप्रत्ययोत्पत्त्यर्थमेव तद्ग्रहणं परिभाषाऽसत्त्वे तु अन्तरङ्गत्वाद्दीर्घे कृत एव प्रत्ययोत्पत्तिरिति व्यर्थं तद्ग्रहणं परिभाषां ज्ञापयतीति ।

युगपत्प्राप्तावन्त्यसदेशस्यैव भवतीति तदर्थः। अनन्त्यविकार इति तत्र लिङ्गम्। तामर्थतः पठति—अन्त्यबाध इति। अन्यथा 'णो नः' इत्यादि शास्त्रं नेतेत्यादावेव प्रवर्त्तेत ननु नमतीत्यादाविति भावः। अन्त्यस्य बाधे कार्य्याऽप्राप्तावित्यर्थः—अन्त्यसदेशस्येति। अन्त्येन समानो देशो यस्येत्यर्थः। तत्त्वञ्च, अन्त्यवर्णतद्वर्णयोरितराव्यवधानम्। तथा च [1]चलीक्लृप्यते इत्यादौ ऋकारान्तर्गतरेफस्योः सराजूभागेन व्यवधानादन्त्यसदेशत्वाऽसम्भवेन नैतत्परिभाषाप्रवृत्तिः। [2]अत एव 'न सम्प्रसारणे सम्प्रसारणमि'ति सूत्रोदाहरणस्य विद्ध इत्यादेरनया परिभाषया न सिद्धिः [3]अत एवोक्तनिषेधसूत्रं सफलमन्यथा [4]विद्ध इत्यत्र तत्परिभाषयैवाऽन्त्यसदेशस्य यकारस्यैव कार्य्यप्राप्तौ वकारस्याऽप्राप्त्या तन्निषेधार्थं व्यर्थमेवोक्तसूत्रमिति। नच नैतस्याः परिभाषायाः प्रयोजनानीति न सम्प्रसारण इति सूत्रस्थभाष्यादेतत्परिभाषाया अभावबोधनात्तत्स्वीकारे तु भाष्यविरोधो दुर्वार इति वाच्यम्। एतत्सूत्रसाध्यानि विद्ध इत्यादीन्युदाहरणानि नैतत्परिभाषाप्रयोजनानीत्युक्तसूत्रस्थभाष्याऽभिप्रायवर्णनेन विरोधपरिहारादिति भावः॥

ननु'अदसोऽसेर्दादुदोमः' इति सूत्रेऽसेरित्यस्य सस्य यकारस्य स्थाने अः सोऽसिस्तस्यासेरिति व्याख्यानात्त्यदादीनामत्वविषय एव मुत्वप्राप्तिरित्याशयेनाऽऽह—इति पक्षे तु अदम्र्यङिति। अत्र तन्त्रेणाऽर्थद्वये सूत्रतात्पर्य्यं तत्र लक्ष्याऽनुरोधाद्व्यवस्था, अत्र प्रमाणमाह उक्तञ्च, अदसोऽद्रेरित्यादि। लत्ववदिति। यथा चलीक्लृप्यते इत्यत्र 'कृपो रोलः' इत्यनेन रीगृकारयोरुभयोर्लत्वं भवति तथैवेत्यर्थः। अत्रादमुयङिति रूपवादिमतं युक्तम्, उक्तरीत्या लत्वे (अन्त्यबाधेऽन्त्यसदेशस्ये)त्यस्याऽप्रवृत्तावपीह तदप्रवृत्तौ विनिगमकाऽभावात्। अत एव, प्रकृतसूत्रे भाष्ये (अदसो नोऽद्रेरि) ति

---

१ अन्त्यसदेशत्वलक्षणे इतराव्यवधाननिवेशस्य फलमिदम्।

२ इतराव्यवधाननिवेशादेवेत्यर्थः।

३ अनया तदुदाहरणाऽसिद्धेरेवेत्यर्थः।

४ विद्ध इति। व्यध धातोः क्तप्रत्यये ग्रहिज्येति सम्प्रसारणे रूपम्।

वार्त्तिकप्रत्याख्यानायाथवाऽसेरिति पक्षं प्रतिपाद्य यद्येवममुमुयङिति न सिद्ध्यति अदद्र्यङिति प्राप्नोति । अदमुयङिति भवितव्यम्, अनन्त्यविकारेऽन्त्यसदेशस्येत्युक्तम् । अत्रेति प्राप्नोतीत्युक्त्याच तत्र मुत्वाघटितरूपेऽसम्मतिः प्रदर्शिता । इति भवितव्यमित्यनेन पृथङ्मुत्वमिति पक्षसम्मत्यभावो दर्शितः । इति भवितव्यमित्युक्त्या च तत्र शब्देऽप्रयुक्तत्वं सूचितमित्यलम् ॥

विष्वग्देवयोः किमिति । चकारस्याऽप्युपलक्षणमिदम्, चेन सर्वनाम्नः परामर्शात् । तथाच सूत्रे तयोरग्रहणेऽन्यशब्दस्यापि टेरद्र्यादेशाऽऽपत्तावश्वाचीति न स्यादित्याशयेन प्रत्युदाहरति—अश्वाचीति ॥

ननु उत्तरपदाधिकारादञ्चुरूपे उत्तरपदे विष्वग्देवशब्दयोष्टेरद्र्याऽऽदेश इत्यर्थे विष्वगञ्चनमित्यादिव्यावृत्तौ व्यर्थमेवाऽप्रत्ययग्रहणमित्याशयेनाऽऽशङ्कते—अप्रत्ययग्रहणं किमिति । समाधत्ते—विष्वगञ्चनमिति । अयम्भावः, व्यर्थमप्रत्ययग्रहणं ज्ञापयति धातुग्रहणे तदादिविधिरिति । तेनाऽञ्चादावुत्तरपदेऽद्र्यादेश इत्यर्थे विष्वगञ्चनमित्यत्राऽऽदेशाऽऽपत्तिरित्याऽऽवश्यकमप्रत्ययग्रहणमिति स्वांशे चरितार्थं जातम् । ज्ञापनफलञ्च 'अतः कृकमी'ति सूत्रे तदादिविधौ करोत्यादावुत्तरपदे सत्त्वसिद्धिरित्यत आह—तेनाऽयस्कार इत्यादि । अन्यथा, अतः कृ इत्यत्र 'नित्यं समासे' इत्यतोऽनुवृत्तेन समासग्रहणेनोत्तरपदाऽऽक्षेपेऽपि कृधातुरूपे उत्तरपदे इत्यर्थाऽऽपत्तावयस्कृदित्यादावेव सत्त्वं स्यान्नत्वयस्कार इत्यादावाविति दिक् ॥

तिरश्च इति । नन्वत्र श्चुत्वे कर्त्तव्येऽल्लोपस्य स्थानिवत्त्वेनाऽकारेण व्यवधानात् श्चुत्वं न स्यादिति चेन्न । पूर्वत्राऽसिद्धीये तन्निषेधादिति भावः ।

ननु 'विप्रतिषेधशास्त्रबलेन पूर्वस्मात्परं बलवत्, ततोऽपि नित्यं कृताऽकृतप्रसङ्गित्वात्, तथाच; धीमत्सु इति स्थितौ नुम्दीर्घयोःप्राप्तौ परत्वान्नित्यत्वाच्च दीर्घं बाधित्वा नुमि कृते दीर्घो न स्यादुपधात्वाऽभावादित्याशङ्कां समाधत्ते—परं नित्यं च नुमं बाधित्वा वचनसामर्थ्यादादौ दीर्घ इति । वाक्यार्थबोधकाले विरोधाऽभावादुपधापदसम्बन्धे कृते सामर्थ्यात्पूर्वं दीर्घप्रवृत्तिरेव कल्प्यत इति भावः ।

ननु (एकानुबन्धकग्रहणे न द्व्यनुबन्धकग्रहणमि)ति परिभाषयाऽनुपदेन मतुपोऽग्रहणाद्धीमानित्यादौ 'अत्वसन्तस्ये'ति दीर्घो न स्या-

त्। नच सूत्राऽऽरम्भसामर्थ्याद्दीर्घः स्यादेवेति वाच्यम्। अनुनासिकोकारविशिष्टे भवतुशब्दे सूत्रस्य चारितार्थ्यादिति चेन्न। पकारस्य समुदायाऽनुबन्धत्वेऽप्यतुमात्रस्य द्व्यनुबन्धाऽभावात्। अतु इति लुप्तषष्ठ्यन्तं पृथक् पदं तथाचाऽधातोरित्यसन्तस्यैव विशेषणं नत्वत्वन्तस्य, तु शब्दादित्यभिप्रायेणाह—धातोरप्यत्वन्तस्य दीर्घ इति॥

ननु 'उगिदचामि'ति सूत्रेऽधातोरित्यस्य सत्त्वेन धातोर्नुमोऽप्राप्त्या क्वजन्तादिगोमच्छब्दस्य धातुत्वाऽभावान्नुम्न स्यादित्यत आह—उगिदचामिति सूत्रेऽजग्रहणं नियमार्थमिति। अयमाशयः, अञ्चते रुगित्वादेव नुमि सिद्धेऽजग्रहणसामर्थ्याद्धातोश्चेदुगित्कार्य्यं तर्ह्यञ्चतेरेवेति नियमादन्यधातो र्नुमोऽप्राप्त्या तद्व्यावृत्त्यर्थं कृतमधातुग्रहणं व्यर्थं सज्ज्ञापयति अधातुभूतपूर्वस्याऽपि नुम्भवतीति तेन गोमतः सम्प्रति धातुत्वाऽभावेऽपि भूतपूर्वधातुत्वमादाय नुम्सिद्धिरिति। नच पूजाऽर्थकस्य नुम्नेति नियमसम्पादनायाऽञ्चतेश्चेन्नलोपिन एवेति नियमकरणादज्ग्रहणस्य चारितार्थ्येनोक्ताऽर्थे ज्ञापकत्वन्न सम्भवतीति वाच्यम्। अचामित्यत्र नलोपस्याऽविवक्षितत्वेन सामान्याऽपेक्षनियमस्यैवौचित्यात्। अजग्रहणकृतस्य धातोश्चेदुगित्कार्य्यमिति नियमस्य फलं तु उखास्रत्, पर्णध्वदित्यादौ नुम्ङीपोरभावरूपमिति दिक्॥

ननु तादृश इति स्थितौ निशादिशब्दे ऋत्विगादिशब्दे च चरितार्थयोःव्रश्चेति क्विन्प्रत्ययस्येति सूत्रयोः परत्वात्क्विन्प्रत्ययस्येति कुत्वशास्त्रे प्राप्ते पूर्वत्राऽसिद्धमित्यनेन षत्वविधायकशास्त्रदृष्ट्या कुत्वविधायकशास्त्रस्याऽसिद्धत्वप्रतिपादनात्षत्वमेवेत्याऽऽशयेनाह—कुत्वस्याऽसिद्धत्वाद्व्रश्चेति ष इति॥

ननु क्विन्प्रत्ययस्य कुरित्यस्य स्थाने कुःक्विन्यत इति न्यासेन दृष्ट इत्यध्याहारेण च बहुव्रीहिफलोपपत्तौ तदर्थं कृतस्य प्रत्ययग्रहणस्यान्यपदार्थांशे वीप्सागर्भबहुव्रीहिलाभाऽर्थत्वेन प्रतिलक्ष्यं लक्षणोपप्लवात्तादृशादिक्विन्नन्तविषयस्य लक्षणस्य कुत्वविधायकस्याऽचरितार्थत्वेन षत्वाऽपवादत्वात्कुत्वमेवेत्यभिप्रेत्याह—षत्वाऽपवादत्वात्कुत्वेनेति। खकार इति। अघोषमहाप्राणसाम्यादिति भावः। कैयट इति। क्विन्प्रत्ययस्य कुरित्येतत्सूत्रस्थकैयट इत्यर्थः। जशत्वं प्रति

कुत्वस्याऽसिद्धत्वादिति । नच कुत्वस्य जश्त्वस्याऽप्यपवादत्वेन कथं मूलोक्तसङ्गतिरिति वाच्यम् । कुत्वस्य शस्थानिकजश्त्वस्यैवाऽपवादत्वं नतु खकारस्थानिकस्याऽपीत्यदोषात् । वस्तुतस्तु प्रत्ययग्रहणस्य बहुव्रीहिमात्रफलकत्वस्यैव भाष्यकृतोक्तत्वाच्चिन्त्यमिदम् । तस्माद्दृत्विगित्याद्यंशे चरितार्थस्य कुत्वस्य न जश्त्वापवादत्वं युक्तमिति तन्मत इति वदता सूचितमित्यलम् ॥

ननु 'नुम्विसर्जनीयशर्व्यवायेऽपी'ति सूत्रेण नुमादिव्यवहितसकारस्य षत्वविधानान्निंस्वेत्यत्र नुम्शर्भ्यां व्यवहितप्रत्ययभूतसकारस्थानिकषत्वस्य दुर्वारत्वात्तन्निवृत्त्यर्थं कृतस्य निंसेः प्रतिषेधो वक्तव्य) इति वार्त्तिकस्य प्रत्याख्यानं विधाय, योगविभागात्सिद्धम्, तद्यथा नुम्व्यवाये शर्व्यवाये इति स तर्हि योगविभागः कर्त्तव्यो न कर्त्तव्यो व्यवायशब्दस्य प्रत्येकं परिसमाप्तत्वात्प्रत्येकव्यवधान एव षत्वं नत्वनेकव्यवधान इति भाष्यकृतोक्तत्वान्नोक्तस्थले षत्वाऽऽपत्तिरूपदोष इत्येतदेवाह—प्रत्येकमिति व्याख्यानादनेकव्यवधाने न षत्वं निंस्स्वेति ॥

ननु सर्पींषीत्यादौ षत्वप्राप्तिकाले नुमोऽसत्त्वात्षत्वाऽर्थं नुम्ग्रहणस्याऽनुस्वारोपलक्षणाऽर्थत्वमित्यवश्याऽश्रयणादनुस्वारस्य शर्त्वेनैव गतार्थत्वान्नुम्ग्रहणं निष्फलमेवेति चेन्न । अनुस्वारव्यवधाने षत्वं चेन्नुम्स्थानिकाऽनुस्वारेणैव व्यवधानं इति नियमार्थत्वेन साफल्यात । अत एव मस्थानिकाऽनुस्वारव्यवधाने पुंस्वित्यादौ न षत्वाऽऽपत्तिरित्याऽऽशयेनाह—नुम्ग्रहणं नुम्स्थानिकाऽनुस्वारोपलक्षणार्थमिति ।

तक्षिरक्षिभ्यां ण्यन्ताभ्यामिति । णिजन्तात् तक्षधातोः रक्षधातोश्च क्विप्प्रत्ययः । क्विपः सर्वापहारः प्रत्ययलक्षणेन तस्मिन् णिलोपे कृदन्तत्वात्प्रातिपदिकत्वे तक्ष् सु रक्ष् सु इति स्थितौ स्कोः संयोगाद्योरन्ते चेति न संयोगादिलोपप्राप्तिः, अचः परस्मिन्पूर्वविधावित्यनेन क्विपि लुप्तस्य णिचः स्थानिवद्भावेन णिचा व्यवधानेन झल्परकत्वाभावात । न च पूर्वत्रासिद्धे न स्थानिवदित्यनेन णिलोपस्य स्थानिवद्भावनिषेधान्न संयोगादिलोपानुपपत्तिरिति वाच्यम् । संयोगादिलोपलत्वणत्वेषु पूर्वत्रासिद्धे न स्थानिवदित्यस्या-

प्रवृत्त्योक्तलोपानुपपत्तेस्तादवस्थ्यादेवञ्च संयोगान्तलोप एव भवतीति भावः ।

ननु पदसंस्कारपक्षे सेद्वस् असिति स्थितौ पूर्वोपस्थितनिमित्तकत्वेनाऽन्तरङ्गत्वादिटि न संप्रसारणप्राप्तिरित्यत आह—अन्तरङ्गोऽपीडागमः सम्प्रसारणविषये न प्रवर्त्तत इति । अयम्भावः, इटो निमित्तस्य वलादित्वस्य सम्प्रसारणेन विनाशभावित्वात् (अकृतव्यूह) परिभाषया न पूर्वमिटः प्राप्तिरिति प्राञ्चः । नव्यास्तु, पदावधिकेऽन्वाख्याने सेद्वस् असितिस्थिताविटसम्प्रसारणयोः प्राप्तौ प्रतिपद्विधित्वेन शीघ्रोपस्थितिकत्वात्पूर्वं सम्प्रसारणे वलादित्वाऽभावादिटोऽप्राप्त्या सेदुष इत्यादिसिद्धावुक्तपरिभाषा निष्फलैव । लघ्याऽनुरोधात्पदाऽवधिकाऽन्वाख्यानपक्ष एवाऽत्रेत्याहुरिति दिक् ॥

सान्तमहत इत्यत्र सान्तसंयोगोऽपि प्रातिपदिकस्यैव गृह्यते नतु धातोः, महच्छब्दसाहचर्य्यादिति । नच महत्यतेः क्विपि महतोऽपि धातुत्वस्य सम्भवात्कथमेतत्साहचर्य्यात्तथा ग्रहणमिति वाच्यम् । क्विपि कृते महतो धातुत्वेऽपि तस्यौपदेशिकधातुत्वाऽसम्भवेन साहचर्य्यादौपदेशिकधातुभिन्नसान्तसंयोगस्य ग्रहणमित्याशयात् ।

ननु 'अनङ् सावि'त्यस्य स्थाने सोर्डेतिन्यासेनैव सिद्धावनङ्विधानसामर्थ्यात्क्वचिदन्यतोऽप्यनङ् भवतीति ज्ञापनादुशनश्शब्दस्य सम्बुद्धौ तत्सिद्धिरिति प्राञ्चस्तत्फलितमाह—अस्य सम्बुद्धावित्यादि । वस्तुतस्तूक्तन्यासाऽभ्युपगमे पुरुदंसेत्यत्र सोर्डादेशे टिलोपे सान्तमहत इति दीर्घाऽऽपत्तिः । नच (संज्ञापूर्वको विधिरनित्यः) इति परिभाषया ( अङ्गवृत्त ) परिभाषया वा नोक्तापत्तिरिति वाच्यम् । उभयोरेकस्या अपि भाष्येऽनाऽऽश्रयणात् । एवञ्च वार्त्तिकमिदमपूर्वमेवेति भावः ॥

इति हलन्ताः पुल्लिङ्गाः ॥

## अथ हलन्तस्त्रीलिङ्गप्रकरणम् ।

निपातनाद्दलोपषत्व इति । पूर्वपदान्तस्य लोपो धातोः सस्य षत्वमित्यर्थः । नच 'आदेशप्रत्यययोरि'त्यनेनैव षत्वे सिद्धे निपातनात्षत्वविधानमनावश्यकमिति वाच्यम् । पदादादिः पदादिरिति पञ्चमीसमासपक्षे 'सात्पदाद्योरि'त्यनेन तन्निषेधादिति भावः ॥

क्विबन्तत्वात्कुत्वेन हस्य घ इति । कैयटादिमते षत्वस्यैव ढत्वस्यापि कुत्वेन बाधादिति तदाशयः । उष्णिगङिन्त्रतिनिर्देशात्कुत्वस्य जश्त्वेनाऽसिद्धत्वं स्वरीत्या तु ठडगका इति बोध्यम् ॥

द्यौरिति । 'दिव औत्' इत्यौत्वे यणि रूपम् । नचाऽन्तरङ्गपरिभाषयाऽन्तरङ्गे यणि कर्त्तव्ये बहिरङ्गस्यौत्वस्याऽसिद्धत्वादच्परत्वाऽभावाद्यणादेशो न स्यादिति वाच्यम् । अजिनष्ठाऽस्याऽऽनन्तर्य्यनिमित्तके कार्य्ये कर्तव्ये न बहिरङ्गत्वप्रयुक्ताऽसिद्धत्वस्य प्राप्तिरित्यर्थिकया [1](नाऽजानन्तर्य्ये बहिष्ट्वप्रक्लृप्तिः) इति परिभाषयोक्तपरिभाषाबाधेनाऽप्रवृत्तेः । एवञ्च यण्दृष्ट्यौत्वस्याऽसिद्धत्वाऽभावाद्नोक्तरूपोपपत्तौ किमपि प्रतिबन्धकमिति भावः ॥

चतस्र इति । ननु 'चतुरनडुहोरामुदात्तः' इत्यनेन कुतो नाऽऽमिति चेन्न । 'विप्रतिषेध' सूत्रेणाऽऽमोऽपेक्षया चतस्राऽऽदेशस्य परत्वबोधनेन परत्वादामं बाधित्वा चतस्राऽऽदेशस्यैव प्रवृत्तेः । नच कृते चतस्राऽऽदेशे कुतो नाऽऽमिति वाच्यम् । (सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव) इत्यनया परिभाषया पुनरामोऽप्राप्तेरिति भावः ।

सर्वावदिति । नन्वत्र पुंवद्भावः कुतो नेति चेन्न । सर्वाशब्दवदिति तदर्थात् । शब्दपरस्य कदाऽपि सर्वनामत्वाऽभावात्सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इत्यस्य न प्रवृत्तिरिति भावः ॥

---

[1] नाजानन्तर्यं इति । अत्र षत्वतुकोरसिद्ध इति सूत्रस्थं तुग्ग्रहणं ज्ञापकम्, तथाहि परिभाषासत्त्वे अधीत्य प्रत्येत्यादौ समासोत्तरं ल्यप्प्रवृत्त्या पूर्वं समासे जाते तत्र संहिताया नित्यत्वाद्ल्यबुत्पत्तिपर्यन्तमप्यसंहितयाऽवस्थानासम्भवादेकादेशे स्यपि तुगपेक्षया पदद्वयसम्बन्धिवर्णद्वयापेक्षैकादेशस्य बहिरङ्गत्वेनासिद्धत्वात्तुक्सिद्धौ सूत्रस्थं तुग्ग्रहणं व्यर्थं सत्परिभाषां ज्ञापयतीति ।

अमूभिरिति । अदन्तत्वाऽभावादेत्वाऽभावेन 'एत ईद्'इत्यस्याऽप्रवृत्तौ मुत्वमेवेति भावः ॥ इति हलन्ताः स्त्रीलिङ्गाः ॥

---

## अथ हलन्तनपुंसकलिङ्गप्रकरणम् ।

दत्तमिति । ननु 'वसुस्रंसुध्वंस्वनडुहां दः' इति सूत्रेऽनडुह्शब्दस्यैवोपादानात्स्वनडुह्शब्दस्य दत्वं न स्यादिति चेन्न । तस्याऽङ्गाधिकारस्थत्वेन तदन्तेऽपि प्रवृत्तेः । एवमाङ्गत्वादामोऽपि तदन्ते प्रवृत्तिरिति बोध्यमिति भावः ॥

ननु राजपुरुष इत्यत्र यथा प्रत्ययलक्षणेन पूर्वपदस्य पदत्वान्नलोपादिकार्य्यं भवति तद्वद्विमलदिवीत्यत्राऽपि प्रत्ययलक्षणेनाऽन्तर्वर्त्तिनीम्विभक्तिमाश्रित्योत्तरपदस्य दिव इत्यस्य पदत्वेन 'दिव उद्' इत्युत्वं स्यादित्याशङ्कायामाह—उत्तरपदत्वे चेति । ( उत्तरपदत्वे चाऽपदादिविधौ प्रतिषेधः ) इति वार्त्तिकस्वरूपम् । तत्रोत्तरेति लुप्तषष्ठ्यन्तं पृथक्पदम् । तच्च लक्षणयोत्तरपदपरम् । प्रकृतिजन्यबोधे प्रकारीभूतो भाव इति नियमेन पदत्व इत्यस्य पदसंज्ञायामित्यर्थः प्राचीनमते, नव्यमते तु पदत्वप्रयुक्ते कार्य्ये इत्यर्थः । तथा च, उत्तरपदस्य पदत्वप्रयुक्ते कार्य्ये कर्त्तव्ये लुमता लुप्ते प्रत्ययलक्षणन्नेति प्रथमखण्डार्थः । तेन विमलदिवीत्यादावुत्वं, परमवाचेत्यादौ कुत्वं, सुधियावित्यादौ शाकलह्रस्वत्वञ्च न । किमविशेषेणाऽयं निषेधो नेत्याह—अपदादिविधाविति । न पदादिविधिरपदादिविधिः, पदादिविधिश्चाऽत्र प्रतिपदोक्तत्वात्सात्पदाद्योरित्येव, पदादिविधौ त्वयं निषेधो न प्रवर्त्तत इति द्वितीयखण्डाऽर्थः । एतत्फलं पृच्छति—अदादिविधौ किमिति । एतदंशाऽसत्त्वे दधिसेचावित्यादौ सेचरूपोत्तरपदस्य पदत्वप्रयुक्तकार्य्यस्य कुत्वस्य कर्त्तव्यत्वान्निषेधप्रवृत्त्या प्रत्ययलक्षणप्रतिषेधेन पदत्वाऽभावात्सात्पदाद्योरिति निषेधाऽप्राप्त्या षत्वाऽऽपत्तिस्तदंशसत्त्वे तु षत्वरूपपदादिविधेः कर्त्तव्यत्वादुक्तनिषेधाऽप्रवृत्त्या प्रत्ययलक्षणेन पदत्वस्य सुलभत्वात्सात्पदाद्योरित्यस्य प्रवृत्त्या न तदापत्तिरिति तत्फलमिति भावः । पदादिविधिश्च सात्पदाद्योरित्येवेत्युक्तन्तत्फलं परमवुधावित्यादौ भष्भावो नेति । अयं निषेध उत्तरपदस्य कार्य्यित्व एव प्रवर्त्तत इति ।

१अत एव मापकुम्भवापेनेत्यत्र 'पदव्यवायेऽपी'ति णत्वनिषेधः सिद्ध्यति। २ अन्यथा षष्ठीतत्पुरुषीयकुम्भेत्युत्तरपदस्य पदत्वे कर्त्तव्ये प्रत्ययलक्षणप्रतिषेधात्तस्य पदत्वाऽभावादुक्तनिषेधो दुर्लभः स्यात्। कार्य्यित्वनिवेशे तु तादृशकुम्भरूपोत्तरपदस्य पदत्वप्रयुक्तकार्य्यस्याऽकर्त्तव्यत्वान्निषेधाऽप्राप्त्या प्रत्ययलक्षणेन तस्य पदत्वेन निषेधः सुलभ एव। नच कार्य्यित्वनिवेशे पूर्वदण्डिप्रिय इति त्रिपदबहुव्रीहावबाऽन्तरतत्पुरुषीयोत्तरपदस्य दण्डिनः पदत्वप्रयुक्तनलोपाऽऽदिकार्य्यस्य कर्त्तव्यत्वान्निषेधप्रवृत्त्या प्रत्ययलक्षणप्रतिषेधेन पदत्वाऽभावान्नलोपाऽऽदिकार्य्यं न स्यादिति वाच्यम्। उत्तरपदशब्देन मध्यमपदत्वाऽनाक्रान्तोत्तरपदस्य ग्रहणेन दण्डिनो मध्यमपदत्वाऽऽक्रान्तत्वान्निषेधाऽयोगेन पदत्वात्तत्प्रयुक्तकार्य्यस्य सुलभत्वादिति दिक्॥

ननु अहः, अहोभ्यामित्यादौ 'रोऽसुपि' 'अहन्' इत्यनयोश्चारितार्थ्येनाऽपवादरूपत्वान्नलोपसूत्रस्य बाध एवेति चेन्न। नलोपोत्तरमुक्तसूत्रद्वयस्य चारितार्थ्येनाऽपवादत्वाऽसम्भवात्। असम्भवे सत्येवाऽपवादत्वं सम्भवतीत्युक्तत्वात्। एवञ्च नलोपदृष्ट्या रत्वरुत्वयोरसिद्धत्वान्नलोपो दुर्वार एवेत्याशयेनाह—रत्वरुत्वयोरसिद्धत्वान्नलोपे प्राप्त इति। नच नलोपे जाते हकारोत्तराऽऽकारस्य रत्वे रुत्वे वा कृते विशेषाऽभावादन्यतरविधानेनैवोपपत्तावुभयोरत्वरुत्वयोर्विधानसामर्थ्यान्नकारस्य लोपो न स्यादिति वाच्यम्। सम्बुद्धौ 'न ङि सम्बुद्ध्यो'रिति नलोपप्रतिषेधेनाऽऽहर्गच्छेत्यादावुत्वाऽभावेन दीर्घाहो निदाघेत्यादावुत्वसम्पादनेन चोभयोश्चारितार्थ्येन सामर्थ्यविरहान्नलोपबाधे मानाऽभावात्। नच नकारोच्चारणसामर्थ्यलब्धेन नकारान्ताऽनुकरणेन नान्तस्याऽहन्शब्दस्य रुरितिव्याख्यानान्नलोपो न स्यादिति वाच्यम्। दीर्घाहो निदाघेत्यादौ प्रवृत्त्या भ्यामादौ व्यावृत्त्या च नकारोच्चारणस्य चरितार्थत्वेन सामर्थ्यविरहादुक्तव्याख्यानासम्भवेन नलोपबाधकत्वासम्भवादिति भावः। आवृत्त्येति। अहन्सूत्रस्याऽऽवृत्त्या सूत्रद्वयस्य जायमानत्वादेकेन रुत्वविधानमप-

१ उत्तरपदस्य कार्य्यित्व एव निषेधप्रवृत्तेरेवेत्यर्थः।
२ कार्य्यित्वनिवेशाऽभावे इत्यर्थः।

रेण नलोपबाध इति भावः। आवृत्तौ (रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्) इति वार्त्तिकमेव प्रमाणमन्यथा नलोपेऽकारस्य रेफाऽऽदेशेनैव सिद्धौ वार्त्तिकमिदं व्यर्थमेवेति। नच सम्बुद्धिविषये 'न ङिसम्बुद्ध्योरि'ति निषेधेन नलोपाऽभावात्तत्राऽस्य चारितार्थ्येन ज्ञापकत्वं न सम्भवतीति वाच्यम्। सत्यपि सम्भवे बाधनं भवतीति भाष्येण सम्बुद्धिविषयेऽपि नलोपस्य प्राप्तिमात्रेण रत्वरुत्वयोर्येन नाप्राप्तिन्यायेन तदपवादत्वादुक्तवार्त्तिकस्य वैयर्थ्येन ज्ञापकत्वसम्भवात्। अत एव, अपवादो रुर्नलोपं बाधिष्यत इत्युक्तम्भाष्ये इति दिक्॥

ननु अहन्सूत्रे पदाधिकारात्तं प्रत्यहन्शब्दस्य विशेषणत्वेन येन विधिरित्यनेन तदन्तविधावहन्शब्दाऽन्तस्याऽपि रुरित्यर्थे दीर्घाहन्शब्देऽपि रुत्वमित्यत आह—तदन्तस्याऽपि रुत्वरत्वे इति। नच [1](ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति) इति परिभाषया तदन्तविधिनिषेधात्कथमत्र तदन्तविधिरिति वाच्यम्। उक्तपरिभाषायाः प्रत्ययविधिविषयकत्वेनाऽत्राऽप्रवृत्तेः। नच तदन्तेऽपि रुत्वविधानादीर्घाऽहावित्यादावप्यन्तर्वर्त्तिविभक्त्या पदत्वाद्रुत्वाऽऽपत्तिरिति वाच्यम्। उत्तरपदत्वे चेति निषेधेनाऽपदत्वादुक्ताऽऽपत्तेरयोगादिति भावः॥

इह हल्ङ्यादिलोपे इति। दीर्घनिमित्तस्य सोर्हल्ङ्यादिसूत्रेण पश्चाद्विनाशसम्भवादकृतव्यूहपरिभाषया दीर्घात्प्राक् हल्ङ्यादिलोप एवेति भावः। वस्तुतस्तु सोर्लोपेऽपि प्रत्ययलक्षणेन सुबुद्ध्या दीर्घनिमित्तस्य सोर्विनाशाऽभावादुक्तपरिभाषाऽप्रवृत्तेस्तस्या अनित्य-

---

१ ग्रहणवतेति। ग्रहणवत्प्रातिपदिकप्रयोज्यं तदन्तकर्मकं ग्रहणं नेति तदर्थः। ग्रहणवत्प्रातिपदिकप्रयोज्यं तदन्ते विधानन्न भवतीति यावत्। अत्र ज्ञापकं सपूर्वाच्चेति सूत्रमेव, तथाहि पूर्वादिनिरित्यत्र तदन्तविधिना पूर्वशब्दान्तादिनि रित्यर्थे सपूर्वादपि पूर्वशब्दादिनिप्रत्ययोपपत्तौ पृथक् सपूर्वाच्चेतिसूत्रं व्यर्थं सत्परिभाषां ज्ञापयति, ज्ञापितायामस्यां तु परिभाषयां तदन्तविधिनिषेधात्सपूर्वात्पूर्वशब्दात् पूर्वादिनिरित्यनेन प्रत्ययानुपपत्तौ तदर्थं सपूर्वाच्चेति सूत्रं स्वांशे चरितार्थमिति भावः।

त्वादसत्त्वाच्च परत्वाद्दीर्घ एव, अत एव परत्वादुपधादीर्घ इत्युक्तिः सङ्गच्छत इत्यलम् ॥

तस्याऽसिद्धत्वान्नान्तलक्षण उपधादीर्घ इति । ननु रुत्वात्प्राक् परत्वाद्दीर्घप्रवृत्तौ कथं मूलोक्तसङ्गतिरिति चेन्न । अकृतव्यूहपरिभाषया ततः पूर्वं दीर्घाऽप्रवृत्तेः । नच तस्या असत्त्वादुक्ताऽऽपत्तिस्तदवस्थैवेति वाच्यम् । उक्तपरिभाषाऽसत्त्वाऽभ्युपगमे हल्ङ्यादिलोपात्प्राक् परत्वाद्दीर्घस्यैव प्रवृत्तावेतत्पंक्त्यसंगतेः स्पष्टत्वादिति भावः ।

असृजः पदान्ते कुत्वमिति । अयम्भावः, असृजशब्दस्य पदान्तविषये कुत्वं भवति । यद्यपीह क्विप्प्रत्ययो नतु क्विन् तथापि कुत्वमेव, 'क्विन्प्रत्ययस्य कुरि'त्यत्र क्विन्यतः कुरिति वक्तव्ये प्रत्ययग्रहणसामर्थ्येनाऽत्र वीप्सागर्भबहुव्रीहिलाभस्तथाच यस्माद्यस्मात्क्विन् दृष्टस्तस्य तस्य कुत्वं भवतीति फलिताऽर्थः, ऋतश्च स्रगित्यत्र सृजेः क्विनो विधानादसृगित्यत्र क्विप्प्रत्ययेऽपि कुत्वप्राप्तेः । नचैवं विश्वसृडित्यत्राऽपि कुत्वाऽऽपत्तिरिति वाच्यम् । 'सृजिदृशोर्झल्यमकिति' इति सूत्रे रज्जुसृड्भ्यामिति भाष्यप्रयोगादव्ययपूर्वपदे कुत्वाऽभावबोधनादुक्तप्रयोगीयाऽऽपत्त्यसम्भवात् । उक्तभाष्यप्रयोगेणाऽव्ययपूर्वपदे कुत्वं च बोध्यते इत्यपि बोध्यम् । ननु षत्वविधायकसूत्रे सृजमृजयजेति विशिष्य ग्रहणात्षत्वस्य कुत्वाऽपवादत्वात्षत्वस्यैव प्राप्तिर्नतु कुत्वस्येत्यरुचेराह—यद्वा व्रश्चेति सूत्र इति । अनेन पदाऽन्ते षत्वं विधीयते, षत्वं तु कुत्वाऽपवादः, तेनाऽसृजः क्विप्प्रत्ययाऽन्तस्य षत्वमेवोचितम् स्रगिति तु ऋत्विगित्यादिना निपातनाद्बोध्यः । अयमभिप्रायः, निपातनं नाम, अन्यादृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणम् । निपातनेनाऽपवादशास्त्राऽप्रवृत्तिमात्रं बोध्यते । कुत्वं तु सूत्रेणैवेति बोध्यम् । असृगिति तु अस्यते रौणाऽऽदिकेन रिच्प्रत्ययेन बोध्यः ॥

ननु वेभिद्यतेः क्विपि अल्लोपे यलोपे च कृते वेभिदिति रूपम्, तस्माज्जसि तस्य शौ तस्य सर्वनामस्थानत्वेन तस्मिन्झलन्तलक्षणो नुम् दुर्वार इति चेन्न । अल्लोपस्य स्थानिवत्त्वेनाऽझलन्तत्वादित्याशयेनाह—अल्लोपस्य स्थानिवत्त्वादझलन्तत्वान्न नुमिति । नचाजन्तलक्षणनुमेव कुतो नेति वाच्यम् । अजन्तलक्षणे नुमि कर्त्तव्ये स्थानिवत्त्वाऽप्राप्तेः । स्वविधौ स्थानिवद्भावो न भवतीति भाष्योक्तेः । नच

(क्वौ लुप्तं न स्थानिवत्) इति स्थानिवत्त्वनिषेधाज्झलन्तलक्षणनुमाऽऽपत्तिस्तद्वस्थैवेति वाच्यम्। उक्तनिषेधवचनस्याऽसार्वत्रिकत्वेनेहाऽप्रवृत्तेः क्वौ विधिं प्रति न स्थानिवदित्येव सार्वत्रिकमिति भावः॥

जायन्ते नव सौ, तथाऽमि च नव, भ्यां भिस्भ्यसां सङ्गमे षट संख्यानि, तथैव सुप्यथ जसि, त्रीण्येव तच्छ्छसि। चत्वार्य्येन्यवचःसु, कस्य विबुधाः शब्दस्य रूपाणि तज्जानन्तु प्रतिभास्ति चेन्निगदितुं षाण्मासिकोऽत्राऽवधिः। इति प्राचीनस्य तार्किकस्य प्रश्ने तदनुसारेणैव श्लोकद्वयेनोत्तरमाह—गवाक्शब्दस्येति॥

ननु गवाक्शब्दस्य सप्तमीबहुवचने सुपि 'खरि चे'ति चर्त्वेन ककारे तस्य (चयो द्वितीया) इत्यनेन खकारे षड्रूपाणि स्युरिति चेन्न। चर्त्वस्याऽसिद्धत्वेनोक्तवार्त्तिकाऽप्रवृत्तेरित्याशयेनाह—नचेह चयो द्वितीया इति पक्ष इत्यादि। कुक्पक्षे तु जश्त्वदृष्ट्या कुकोऽसिद्धत्वाज्जश्त्वाऽप्राप्त्या द्वितीयाऽऽदेशे रूपत्रयवृद्धिर्भवत्येवेतिभावः।

अश्वाक्षिभूतानीति। सप्तविंशत्यधिका पञ्चशतीत्यर्थः। तथाहि, सौ नवानामन्त्यस्य 'अनचि चे'ति द्वित्वे अष्टादश। औङि चतुर्णां मध्ये पूजार्थानां त्रयाणां अद्वित्वे सप्त। जशि अद्वित्वेऽणोऽप्रगृह्यस्येत्यनुनासिकत्वे च द्वादश। सङ्कलनया सप्तत्रिंशत्। एवं द्वितीयायामपि विभक्तौ सप्तत्रिंशत्। तथा च सङ्कलनया चतुःसप्ततिः। टाविभक्तौ चतुर्णां मध्ये पूजार्थानां त्रयाणां अद्वित्वे सप्त। तेषां च सप्तानामनुनासिकविकल्पे चतुर्दश। संकलनयाऽष्टाशीतिः। भ्यामि षट्सु रूपेषु भकारात्पूर्वस्य द्वित्वे कृते द्वादश। तेषामपि (यणो मयः) इति यद्वित्वे चतुर्विंशतिः। तेषामपि मकारस्य द्वित्वेऽष्टचत्वारिंशत्। संकलनया षट्त्रिंशदधिकशतम्। भिसि चतुर्विंशतिः। भकारात्पूर्वस्य विसर्गस्य द्वित्वे संकलनया षष्ठ्युत्तरशतम्। ङे ङसि ङस् ओस् आम् ङि ओस् एतेषु अकारविसर्गमकाराणां द्वित्वे, अणोऽप्रगृह्यस्येत्यनुनासिके च यथासम्भवमष्टादीनि रूपाणि। भ्यां भ्यसोः, अनचि च, यणो मयो द्वे वाच्ये इति द्वित्वे, अष्टचत्वारिंशत्। सुपि पूर्वोक्तयथासंभवकार्य्यैं षडधिकनवति रूपाणीति स्वयमूहनीयमिति॥

ननु सुष्ठु आपो यस्मिन् सरसि इति विग्रहे स्वप्शब्दाज्जसि प्राप्तयोर्नुम्दीर्घयोर्मध्ये यद्यपि परत्वान्नित्यत्वाच्च नुम एव प्राप्तिस्त-

थापि प्रतिपदोक्तत्वान्नुमं बाधित्वा दीर्घस्यैव प्रवृत्तिरित्याशयेनाह—नित्यात्परादपि नुमः प्रागित्यादि । प्रतिपदोक्तत्वं निरवकाशत्वे सत्येव बाधप्रयोजकमिति भाष्यान्निरवकाशरूपप्रतिपदोक्तत्वपक्षे दीर्घस्याऽतथात्वेन नुमेव ननु दीर्घ इति बोध्यम् ॥

पिपठिषीत्यत्र नुमभावोपपादनप्रकारो बेभिदीत्यत्र प्रदर्शित एवेत्यलमत्र तत्प्रदर्शनेनेति दिक् ॥ इति हलन्ता नपुंसकलिङ्गाः ॥

---

## अथाऽव्ययप्रकरणम् ।

यस्मात्सर्वा विभक्तिरिति । वचनत्रयाऽऽत्मिका विभक्तिरिति तदर्थः । नोत्पद्यत इति । किन्त्वेकवचनाऽऽत्मिकैव विभक्तिरुत्पद्यत इत्यर्थः । ननु स्वादिविधायकशास्त्रस्य 'द्व्येकयोर्द्विवचनैकवचने' इत्यादिसंख्याबोधकैः 'प्रातिपदिकाऽर्थमात्र इत्यादिकारकबोधकैश्च सहैकवाक्यतया सुपां विधानमिति पक्षेऽव्ययाऽर्थे संख्याकारकयोरभावाद्विभक्त्यनुत्पत्त्यैकवचनोत्पत्तेरप्यसम्भवः । नचाव्ययाद्विभक्त्यनुत्पत्तौ 'अव्ययादाप्सुपः' इत्यस्यैव वैयर्थ्यमिति वाच्यम् । उक्तज्ञापकाऽऽश्रयणादव्ययाद्विभक्त्युत्पत्तिकल्पने तु सर्वासामपि विभक्त्युत्पत्तिसम्भवात् । किञ्च १विहितानां नियम इति पक्षेऽपि सर्वेषु प्रातिपदिकार्थकर्माद्यर्थेषु प्रथमादिविभक्तीनां विधेयत्वात् २प्रधानप्रत्ययानुरोधेन गुणभूतप्रकृतिभेदकल्पनात्सर्वविभक्त्युत्पत्तौ लोपेनैव जातस्य निवृत्तिः तन्निवृत्तौ च कल्पितस्य गुणभूतप्रकृतिभेदस्वरूपस्य

---

१ ननु 'स्वौजस' इत्यादिसामान्यसूत्रेण विहितानां सर्वासां विभक्तीनां 'कर्मणि द्वितीये'त्यादि सूत्रेण नियमः क्रियते इति पक्षे 'तद्धितश्चासर्वविभक्ति'रित्यस्योपपत्तिर्भविष्यतीत्यत आह—किञ्च विहितानां इति पक्षेऽपीति ॥

२ नन्वेकस्मात्प्रातिपदिकात्सर्वेषां प्रत्ययानां विधानमेवाऽनुपपन्नं प्रत्ययविधौ निर्दिष्टपरिभाषया प्रातिपदिकाऽव्यवधानेनैवोत्पत्तिर्भवति अव्यवधानञ्चैकत्रैव सम्भवति ननु सर्वत्रेति चेन्न । प्रकृतिभेदकल्पनेन तत्तत्प्रकृतिपरत्वस्य तत्र तत्र प्रत्यये सम्भवादित्यत आह—प्रधानप्रत्ययाऽनुरोधेनेत्यादि ॥

स्वत एव निवृत्तावेकवचनस्याऽप्यसम्भवात् । नियमो द्विविधोऽर्थनियमः प्रत्ययनियमश्च । तत्र प्रकृताऽर्थाऽपेक्षसामान्याऽपेक्षभेदेन प्रत्ययनियमोऽपि द्विविधः । तत्र १कर्म्माऽद्यर्थयोग्यप्रातिपदिकाच्चेद् विभक्तिस्तदा द्वितीयैव । कर्मादिरहिते कर्म्मादियोग्यप्रातिपदिकाऽर्थे प्रातिपदिकात्प्रथमैवेत्यादिरर्थनियमः । अस्मिन्पक्षे विभक्तीनां २अनियतत्त्वादव्ययेभ्यः सर्वासां सप्तानामपि विभक्तीनां लाभः। कर्म्माद्यर्थयोग्यप्रातिपदिकाच्चेद्द्वितीया तदा कर्म्मण्येव नतु करणादौ। कर्म्मादियोग्ये कर्म्मादिरहितप्रातिपदिकाऽर्थ एव प्रथमा नतु कर्म्मादौ । संख्यावदर्थयोग्यप्रातिपदिकादेकत्वाऽऽदावेवैकवचनादि नतु द्वित्वादावित्यादिः प्रकृतार्थापेक्षनियमः । अस्मिन्नपि पक्षे विभक्तीनामनियतत्त्वेनाऽव्ययेभ्यः सर्वविभक्तिलाभः । अथ प्रातिपदिकाच्चेद्द्वितीया तदा कर्मण्येव नान्यत्र प्रातिपदिकाच्चेत्प्रथमा तदा मात्रग्रहणात्पर्य्युदासन्यायेन कर्म्मादियोग्ये तद्रहितप्रातिपदिकार्थ एवेत्यादिः सामान्यापेक्षः प्रत्ययनियमस्तदा नाऽव्ययेभ्यो विभक्त्युत्पत्तिरिति चेन्न । विभक्तिविधावुद्देश्यतावच्छेदकाऽवच्छिन्नादेकवचनमित्यर्थकेन 'एकवचनमि'त्येतावतैव 'सूत्रेणाऽभीष्टसिद्धावेकग्रहणेन सामर्थ्यादेकत्ववत्यपि भवत्येकवचनमिति ज्ञाप्यते । नचैवं द्वित्वबहुत्वयोरप्येकवचनाऽऽपत्तिरिति वाच्यम् । तत्र द्विवचनबहुवचनयोस्तद्बाधकत्वात् । एवञ्चालिङ्गासंख्येभ्योऽव्ययेभ्यश्चैकवचनस्य सुलभत्वात् । द्विवचनाऽऽदिविधायकयोर्द्विबहुग्रहणसामर्थ्यादेकत्वाऽभावेऽप्येकवचनप्रवृत्तिरिति भावः । द्वित्वबहुत्वयोर्द्विवचनबहुवचनयोर्विधानादर्थादेकवचनमित्येतद्वचनं विनाऽपि द्वित्वाद्यभावे कर्म्मादावेकचनस्य सिद्धत्वेन सामर्थ्यादुक्तवचनस्याऽप्राप्तप्रापणाऽर्थत्वेन कर्म्माद्यभावेऽपि प्रवृत्त्या विनिगमनाविरहात्सर्वविभक्त्येकवचनम-

---

१ कर्माद्यर्थयोग्येति । कर्मणि द्वितीयैवेति नियमेन यत्र कर्मादिसम्भवस्तत्रैवाऽन्यासां विभक्तीनां निवृत्तिसम्पादनात्प्रत्यासत्त्या कर्माद्यर्थयोग्यत्वस्य लाभः ॥

२ अनियतत्वादिति । अव्ययानां कर्माद्यर्थयोग्यत्वाऽभावेन तत्तदर्थविभक्त्यन्तरव्यवच्छेदेन नियतान्तताद्विभक्तीनामनियमादित्यर्थः ।

व्ययेभ्य इति बोध्यम् । अत एव 'अव्ययादाप्सुप' इत्यत्र प्रत्याहारग्रहणं चरितार्थं तृतीया सप्तम्योरिति च चरितार्थमित्यलम् ॥

कृन्मेजन्त इति । मान्त इति न कृदन्तविशेषणं किन्त्वेजन्त एव, अन्यथा श्रुत्या मान्तत्वात्प्रत्ययलक्षणेन कृदन्तत्वाख्यानेन सूत्रेणैनाऽव्ययत्वे सिद्धे गणे प्रशामशब्दपाठस्य वैयर्थ्याऽऽपत्तेः । अत एव, प्रतामौ लवमाचक्षाणौ लौरित्यत्र नाऽव्ययत्वाऽतिप्रसङ्गः । नच कृदन्तस्यैजन्तविशेषणत्वे आधये हेआधे इत्यत्र गुणे कुम्भकारेभ्य इत्यत्रैत्वे च कृते कृत एजन्तत्वादव्ययसंज्ञा दुर्वारा । नचाऽव्ययसंज्ञाया अन्तरङ्गत्वेन तद्दृष्ट्या बहिरङ्गगुणाऽऽदेरसिद्धत्वान्नोक्ताऽऽपत्तिरिति वाच्यम् । संज्ञायाः कार्य्यार्थत्वेन संज्ञाकार्य्यस्य बहिरङ्गत्वेन संज्ञाया अपि बहिरङ्गत्वादुक्ताऽऽपत्तेस्तादवस्थ्यात् । नच लिङ्गसंख्याद्यनन्वयिन एवाऽव्ययसंज्ञाविधानादुक्तप्रयोगाणां लिङ्गसंख्याद्यन्वयित्वेन नाऽव्ययसंज्ञापत्तिरिति वाच्यम् । अव्ययीभावादाविव लिङ्गसंख्याद्यन्वयित्वेऽप्यापत्तेरिति वाच्यम् । सन्निपातपरिभाषयाऽव्ययसंज्ञाबाधात् । नच लुक एव सन्निपातविघातकत्वादव्ययसंज्ञायास्तद्विघातकत्वेन परिभाषायास्तद्बाधकत्वं न स्यादिति वाच्यम् । अनया सन्निपातविघातकशास्त्रस्येव सन्निपातविघातकशास्त्रप्रवृत्तिनिमित्तातिदेशसंज्ञानामपि निवृत्तेरभ्युपगन्तव्यत्वात् । साक्षात्परम्परया वा स्वसन्निपातविघातकस्य स्वयमनिमित्तमिति परिभाषाऽर्थः । परम्परया सन्निपातविघाते परिभाषाऽप्रवृत्त्यभ्युपगमे तु उपादास्तेत्यत्र कित्त्वाऽऽपत्त्यैस्त्वापत्तिः । एज्विषयसन्निपातनिमित्तकात्वीयैज्विषयत्वरूपसन्निपातविघातस्य क्ङिति चेत्यस्य परिभाषया निवृत्तावपि कित्त्वस्य परिभाषयाऽनिवृत्तेरिति भावः ॥

ननु उच्चैरतिक्रान्तावत्युच्चैसावित्यादौ उच्चैरित्यव्ययात्परस्य सुपो लुङ्माभूदिति हेतोर्विहितविशेषणमित्यत आह—अथ विहितविशेषणान्नेहेति । अङ्गसंज्ञाया विहितत्वांशप्रवेशेन विहितप्रत्ययनिरूपिताङ्गविशेषणादित्यर्थः । आप्सुपभ्यामाक्षिप्तस्याऽङ्गस्य प्रत्यासत्याऽव्ययरूपस्यैव ग्रहणमिति तदाशयः । तेन कुम्भकारेभ्य इत्यादौ सन्निपातपरिभाषयाऽव्ययसंज्ञानिवृत्तिद्वारा लुग्निवृत्तिपरभाष्येण न विरोधः ननु विहितविशेषणेऽप्येष दोषः, अव्ययमसंज्ञाविधौ प्रयोजनं सर्वनामाऽव्ययसंज्ञायामिति भाष्यात्तदन्तविधिलस्त्वेनाऽत्युच्चैस् इति समुदायस्याऽप्युक्तसंज्ञाया दुर्वारत्वादिति चेन्न । अव्ययमिति महासं-

द्वाकरणसामर्थ्यात्लिङ्गसंख्याद्यन्वययोग्यस्यैव संज्ञाविधानेनेह समुदायस्य तदसत्त्वादित्यत आह—यद्यप्यव्ययसंज्ञायां तदन्तविधिरस्ति तथापि न गौण इति। स्वरादीनामितरविशेषणत्वरूपगौणत्वसत्त्वे तदन्तस्य लिङ्गसंख्याद्यन्वये बाधकाभावादिति भावः। वस्तुतस्तु अत्र प्रधानाऽप्रधानन्यायेन सर्वनामसंज्ञासाहचर्येण च प्रसिद्धान्तरङ्गपदान्तराऽनपेक्षादुपसर्जनीभूतस्यैव लिङ्गसंख्याद्यनन्वयिनोऽर्थस्य ग्रहणान्न समुदायस्य नाऽप्यवयवस्य संज्ञा। अत एव, सर्वनामसंज्ञासूत्रस्थोपसर्जनप्रतिषेधाऽनुवृत्त्याऽत्युच्चैसावित्यादावव्ययत्वाऽभावप्रतिपाद्योपसर्जनप्रतिषेधप्रत्याख्यानप्रकारेणेवेहाऽपि तत्प्रत्याख्यानमुक्तम्भाष्ये। एवञ्चाऽव्ययात्परत्वस्याऽप्यभावाद्विहितविशेषणभङ्गाक्षेपश्च व्यर्थं एवेति। नचोच्चैरौ, उच्चैराभ्यामित्यादावव्ययसंज्ञावारणाय तदस्त्विति वाच्यम्। तादृशप्रयोगाऽनभिधानादिति दिक्॥

नतु अव्ययानामलिङ्गत्वेन टापश्च स्त्रियां विधानादव्ययादविहितत्वेन व्यर्थमाप्ग्रहणमित्याह—आव्ग्रहणं व्यर्थमलिङ्गत्वादिति॥

ननु इदं सदृशं त्रिष्विति विरुद्धमत आह—लिङ्गेत्यादि। यथोपक्रमोपसंहाराभ्यां ब्रह्मप्रतिपादिकाया अन्यस्याः श्रुतेर्भाष्यप्रामाण्यादत्रोपसंहारस्तथा लिङ्गाद्यभावपरताऽपीति भावः। तत्र विभक्तिवचनशब्दौ कारकसंख्याऽभावपरौ नतु प्रत्ययपरौ तथा सत्यन्यतरवैयर्थ्यापत्तेः॥

॥ इति फक्किकारत्नमञ्जूषायामव्ययप्रकरणम् ॥

## ॥ अथ स्त्रीप्रत्ययप्रकरणम् ॥

नतु प्रत्ययविधौ तदन्तविधिनिषेधापवादभूतेन (उगिद्वर्णग्रहणवर्जम्) इत्यनेन तदन्तलाभादकारान्तशब्दवाच्यस्त्रीत्वे द्योत्ये टाबित्यर्थेऽजादीनामप्यकारान्तत्वस्याऽव्यभिचरितत्वादत इत्येव सिद्धे व्यर्थमजादिग्रहणं तत्राऽकारान्तशब्दग्रहणञ्चेति पूर्वपक्षस्य जायमानत्वादुत्तरमाह—अजाद्युक्तिर्ङीषो ङीपश्च बाधनायेति। अजादेरुक्तिरजादावुक्तिरिति चार्थः (येन नाप्राप्ति) न्यायेन बाध्यसामान्य-

चिन्ताश्रयणाद्यथाक्रमं जातिलक्षणवयोलक्षणप्राप्तयोर्ङीषङीपोर्बाधः। तथाहि अजादिग्रहणाभावे अथवा तत्राऽकारान्तग्रहणाऽभावे च-न कुञ्चादिहलन्तशब्देषु टावनापत्तिः। क्रुञ्चानालभेत उष्णिहककुभौ देवदिशावित्यादिप्रयोगेण तेषामप्यकारान्तत्वादेव तदुपपत्तेः। एव-ञ्च तदभावे अजत्वजातिविशिष्टा स्त्रीत्यर्थकेऽजेत्यत्र 'जातेरस्त्रीविष-याद्योपधादि'ति ङीषापत्तिः, प्रथमवयोविशिष्टा स्त्रीत्यर्थके बाले-त्यत्र च 'वयसि प्रथम' इति ङीबापत्तिश्च दुर्वारा। नच टावेव-कुतो नेति वाच्यम्। टावपेक्षया जातिलक्षणङीषो वयोलक्षणङीपश्च परत्वात्। अतस्तद्व्यावृत्त्यर्थमजादिग्रहणं कृते च तस्मिन् सामर्थ्या-त्परस्याप्युक्तङीषो ङीपश्च बाधेन टापि न कश्चिद्दोषः। 'स्त्रियामि' त्यधिकारात् 'स्त्रीत्वे द्योत्ये टाबिति सूत्रार्थः,तत्र स्त्रीत्वञ्च प्रत्यासत्त्या-ऽजादिवाच्यमेव। वागादि शब्देषु प्रत्ययं विनापि स्त्रीत्वबोधनेन प्रत्ययवाच्यमित्यस्य वक्तुमशक्यत्वात्। ह्रस्वो नपुंसके प्रातिपदिक-स्य' स्वमोर्नपुंसकादि'त्यादि सूत्रस्वरसाच्च। अत एव व्यावक्रोशीत्यत्र 'कर्मव्यतिहारे णच् स्त्रियामि'ति णचि 'णच् स्त्रियामि' त्यञि च ङीप्-सिद्धिः, नच (प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यम्)' इति व्युत्पत्तेः सत्त्वात्स्त्रीत्वस्य प्रधानत्वेन प्रकृतिवाच्यत्वं न स्यादिति वाच्यम्। उक्तव्युत्पत्तेर्यत्र प्रत्ययस्य वाचकत्वं तद्विषयकत्वेनेहाप्रवृ-त्तेरित्यलम्॥

ननु प्रत्ययविधौ पञ्चम्या युक्ततया पञ्चमीनिर्देशमङ्गीकृत्य तस्य-प्रातिपदिकादित्यनेन सामानाधिकरण्येन तदन्तविधावजाद्यन्तप्राति-पदिकेभ्यष्टाबित्यर्थ एव युक्तस्तं विहाय षष्ठ्यन्ततया व्याख्यानेना-जादीनां स्त्रीत्वविशेषणतया मूलोक्तार्थोपगमो विफल एवेति चेदत आह—अजादिभिः स्त्रीत्वस्य विशेषणान्नेहेति। पञ्चाजीति। पञ्चानामजानां समाहारे इत्यर्थे 'तद्धितार्थोत्तरपदसमाहारे चे'ति समासे विभक्त्योर्लुकि 'संख्यापूर्वो द्विगुरि'ति द्विगुसंज्ञायाम् (अका-रान्तोत्तरपदो द्विगुः 'स्त्रियामिष्टः) इति स्त्रीत्वे 'द्विगोः' इति सूत्रेण ङीपि पञ्चाजीति सिद्ध्यति, अजादीनां स्त्रीत्वाभावे अजादिभ्यष्टा-प् स्त्रीत्वे द्योत्ये इत्यर्थे पञ्चाजशब्दान्ङीपं बाधित्वा टाप्स्यात्। नच पञ्चाजशब्दो नाऽजादिगणे पठितः, पठितश्चाऽजशब्दो नहि तदर्थ-गतं स्त्रीत्वमस्ति येन ततष्टाप् स्यादिति समुदायादवयवाच्च टापोऽ-

प्रसक्तिरेवेति वाच्यम् । अमहत्पूर्वग्रहणेनाऽनुपसर्जनाधिकारेण च तदन्तविधिज्ञापनेनाऽजाद्यन्तेभ्यष्टावित्यर्थे टाप्प्रसक्तेर्दुर्वारत्वात् । नचैवमपि स्त्रियामिति श्रुतत्वादेवाऽजादिविशेषणं स्यात् ततश्चोक्ताऽऽपत्त्यसम्भवे षष्ठ्यन्ततया व्याख्यानमनुपयुक्तमेवेति वाच्यम् । अनुपसर्जनाधिकारेण तदन्तग्रहणस्यैव स्त्रियामित्यस्य तदन्तविशेषणतायाः अपि ज्ञापनात् । अत एवातिसुत्वरीत्यादिसिद्धिः, इह तु षष्ठ्यन्ततया व्याख्यानसामर्थ्यादेव गृह्यमाणविशेषणत्वम्, पञ्चाजशब्दवाच्यस्याजशब्दवाच्यत्वेऽप्यजादिमात्रवाच्यत्वस्य विवक्षितत्वान्नेह टाबिति भावः ॥

शूद्रा चामहत्पूर्वा जातिरिति । अत्र शूद्राचेत्येको योगः, अमहत्पूर्वा जातिरित्यपरो योगः, तत्र पूर्वयोगे जातेरित्यनुकर्षात् शूद्रशब्दष्टापं लभते जातिश्चेद्वाच्येति वाच्योऽर्थः, स्त्रीत्वं तु प्रत्यासत्त्या शूद्रशब्दार्थसमवेतमेव गृह्यते, तथाच, शूद्रशब्दार्थसमवेते स्त्रीत्वे द्योत्ये जातिवाचकाच्छूद्रशब्दाट्टाप्प्रत्ययः स्यादिति फलितोऽर्थः, तथाच पञ्चानां शूद्राणां समाहारः पञ्चशूद्री, अत्र समाहारनिष्ठस्त्रीत्वस्य शूद्रशब्दार्थसमवेतत्वाभावान्न टाप्, शूद्रस्य स्त्री शूद्रीत्यत्र तु जातिवाचकत्वाभावान्न टाप् जातिमात्रप्रवृत्तिनिमित्तकस्यैव जातिवाचकत्वात, इह तु शूद्रशब्दसम्बन्धित्वं प्रवृत्तिनिमित्तं नतु शूद्रत्वम् नचेह शूद्रशब्दस्य सम्बन्धिनि लक्षणया बोधकस्य लाक्षणिकत्वरूपगौणतया १(गौणमुख्य) न्यायेन टापो वारणमिति वाच्यम् । पदकार्य्ये एवोक्तन्यायप्रवृत्तेः । विभक्तिनिमित्तकत्वे सति स्त्रीत्वानिमित्तकत्वं हि पदकार्य्यत्वम्, टापः स्त्रीत्वनिमित्तकत्वेन तत्त्वायोगात् ॥

अमहत्पूर्वाजातिरिति द्वितीययोगस्य महत्पूर्वकशूद्रशब्दष्टापं न लभते जातिश्चेद्वाच्येत्यर्थः । महाशूद्रीति । आभीरजातिवाचकान्महाशूद्रशब्दादुक्तयोगेन टापो निषेधाज्जातिलक्षणे ङीषि सिद्ध्यतीति फलम् । ननु आभीरजातिवाचकमहाशूद्रघटकशूद्रो नाभीरजातिवाचको नापि तदर्थगतं स्त्रीत्वमिति शूद्रशब्दान्महाशूद्रशब्दाच्च प्रापकाभावाट्टापोऽप्रसक्त्या विफल एव निषेध इति चेन्न । स्त्रीप्रत्यये तदन्तविधिर्भवतीत्यर्थज्ञापनेन शूद्रशब्दान्ताट्टाबित्यर्थे महाशूद्रशब्दात्प्रा-

१. गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः इति तत्स्वरूपम् ।

ग्रस्य टापो निषेधेन साफल्यात् । नन्वेवमपि १ (अर्थवद्ग्रहण) परिभाषयाऽर्थवच्छूद्रशब्दान्तादेव टाप् स्यात् इह तु महाशूद्रशब्दोऽखंडस्तु तदवयवः शूद्रशब्द इति पुनस्तदन्तस्यमेव टापोऽप्रसक्त्या निषेधवैयर्थ्यमिति चेन्न । शूद्रत्वारोपेण महाशूद्रशब्दस्याभीरे प्रयोगाच्छूद्रशब्दस्यार्थवत्त्वानपायात् । प्रतिपादितश्चैतच्छेखरे । नच महाशूद्रशब्दस्य जातिवाचकत्वाऽव्यभिचारेणोत्तरयोगे जातिरिति व्यर्थम् । महतीशूद्रेत्यर्थं तु समासात्प्रागेवाऽन्तरङ्गत्वाट्टापि महाशूद्रेत्येवेति वाच्यम् । मृगक्षीरकुक्कुटाण्डमित्यत्रेव पूर्वं स्त्रीत्वस्याविवक्षया टापोऽप्रसक्त्या शूद्रशब्दस्य महच्छब्देन समासे निष्पन्नस्य महाशूद्रशब्दस्य जातिवाचकत्वाभावेन निषेधाऽप्राप्त्या महाशूद्रेत्येव भवति, जातिग्रहणाभावे टापो निषेधाज्जातिलक्षणङीषि उक्तरूपानुपपत्तेः । नच जातिवाचकत्वाऽभावे ङीपोऽप्यसंभव इति वाच्यम् । शूद्रशब्दस्य जातिवाचकत्वेन तदन्तान्ङीपो दुर्वारत्वादिति भावः ॥

ननु 'वनोरच' इति सूत्रे वन इति निरनुबन्धकस्य ग्रहणेन (तदनुबन्धकग्रहणे नातदनुबन्धकग्रहणमि)ति परिभाषाया अप्रवृत्तिरित्याशयेनाह—वन इति सामान्यग्रहणमिति ॥

ननु 'वनो रचे'त्यनेन वन्नन्तप्रातिपतिकान्ङीबादिविधानेऽप्यतिधीवरीत्यादौ वन्नन्तत्वाभावान्ङीप् न स्यादित्यत आह—प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणमिति । एतत्सिद्धिप्रकारश्चेत्थम्, तथाहि यस्मात्प्रत्ययविधिस्तदादि प्रत्यये इति योगविभागः गृह्यमाणे, उपतिष्ठते इति च शेषः, तथा चायमर्थः प्रत्यये गृह्यमाणे यस्मात्प्रत्ययविधिस्तदादीत्युपतिष्ठते इति तदाद्यंशसिद्धिः,तदन्तांशस्य सिद्धिस्तु वन्नन्तेति विशेषणं प्रातिपदिकमिति विशेष्यञ्चादाय 'येन विधिरि'त्यनेनैवेति, देवदत्तश्चिकीर्षतीत्यादौ देवदत्तादेः सन्नन्तत्वप्रयुक्तकार्य्याभाव एतत्फलम्बोध्यम् । न च (ग्रहणवते)ति निषेधात्कथमिह तदन्तविधिरिति वाच्यम् । अनुपसर्जनाधिकाराऽमहत्पूर्वग्रहणाभ्यामिह प्रकरणे तदन्तविधेर्ज्ञापनात् । वन इत्यस्य प्रातिपदिकत्वाभावेन निषेधायोगाच्चेत्यलम् ॥

---

१ अर्थवद्ग्रहणेति । अर्थवद्ग्रहणे नानर्थकग्रहणमिति परिभाषास्वरूपम् ॥

ननु (अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा) इति न्यायेन 'न षट् स्वस्रादिभ्यः' इत्यनेनाऽव्यवहितङीप एव निषेधः स्यान्नतु ङीपटापोरिति चेन्न। स्त्रियां यत्प्राप्तन्तन्नेति व्याख्यानेनोभयोर्निषेधादित्याशयेनाह–पञ्च, चतस्र इत्यादि। अयम्भावः, पञ्चेत्यत्र नलोपे तस्य षट्संज्ञां प्रत्यसिद्धत्वान्नान्तत्वेन षट्संज्ञायां 'न षट्स्वस्रादिभ्य' इति निषेधे न टाविति, इदमसिद्धत्वोपवर्णनं कार्य्यकालपक्ष एव नतु यथोद्देशपक्षे, अत्र च पक्षे पञ्चन्निति नान्ते जायमानषट्त्वस्यैकदेशविकृतन्यायेनादन्तेऽपि सुलभत्वात्। नचोक्तन्यायस्य स्थानिवत्सूत्रे उपसंख्यानादल्विधौ प्रवृत्तिर्न स्यादिति वाच्यम्। षट्त्वस्याऽल्धर्म्मत्वाभावात्तदाश्रयविधीनामपि तत्त्वाभावेन निषेधाऽप्राप्त्या न्यायप्रवृत्तौ बाधकाभावात्। नचाऽन्तरङ्गपरिभाषयैवाऽन्तरङ्गे टापि कर्त्तव्ये बहिरङ्गनलोपस्यासिद्धत्वेन नान्तत्वात्षट्त्वेन निषेधोपपत्तौ मूलोक्तप्रयासस्य वैफल्यमिति वाच्यम्। परिभाषायां संज्ञाकृतबहिरङ्गत्वानाश्रयणेन तदप्रवृत्त्या मूलोक्तप्रयासस्य साफल्यात्। न च 'न लोपः सुप्स्वरे'ति सूत्रे संज्ञापदेन घिसंज्ञाग्रहणात्तां प्रति नलोपाऽसिद्धत्वेन 'द्वन्द्वे घी'त्यस्याऽप्राप्त्या विनिगमनाविरहात्पर्य्यायेणोभयोः पूर्वप्रयोगे दत्तदण्डिनौ दण्डिदत्ताविति भाष्योदाहरणोपपत्तिः, नच 'द्वन्द्वे घी'ति पूर्वपदत्वे नलोपे च सति घित्वं घित्वे च पूर्वप्रयोग इति परस्परापेक्षारूपान्योन्याश्रयदोषापत्तिरिति वाच्यम्। यस्य पूर्वपदत्वे घित्वं भावि तत्पूर्वं प्रयोज्यमिति तत्सूत्रार्थकरणादन्योऽन्याश्रयापत्तेरभावात्। तथाच तत्र घिसंज्ञाया एव ग्रहणे षट्संज्ञां प्रति नलोपासिद्धत्वानापत्तौ षट्त्वाभावान्निषेधाऽप्राप्त्योक्तदोषस्तदवस्थ एवेति वाच्यम्। निषेधशास्त्रस्य स्त्रियां यत्प्राप्नोति तन्नेति भाष्यसिद्धान्तभूतार्थाश्रयणबलेन भूतपूर्वषट्त्वमादाय निषेधेनादोषादिति दिक्॥

ननु 'प्रत्ययस्थात्कादि'ति सूत्रे पूर्वस्येत्यस्याभावे पञ्चमीसप्तमीभ्यां निर्देशात् 'तस्मादित्युत्तरस्य' 'तस्मिन्निति निर्दिष्टे पूर्वस्ये' 'त्यनयोः प्राप्तौ १ (उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्) अनया 'तस्मादि'ति परिभाषोपस्थित्या प्रत्ययस्थककारादव्यवहितपरस्याऽकारस्यै-

१ पञ्चमीनिर्देशस्याऽनवकाशत्वमस्याः प्रवृत्तौ बीजम्। उभयनिर्देशस्य चारितार्थ्येऽपि पञ्चमी निर्देशस्य परत्वञ्चैतत्प्रवृत्तौ बीजम्।

त्वमित्यर्थे कटुकेत्यत्र कटुक आ इति स्थितावन्तरङ्गत्वात्प्राप्तमपि सवर्णदीर्घं १( वार्णादाङ्गं बलीयः ) इत्यनया परिभाषया २( येनना॰ प्राप्ति ) न्यायेन अपवादत्वाच्च बाधित्वेत्त्वापत्तिरतस्तदावश्यकम्। नच सर्विका कारिकेत्यादावेव परस्येत्त्वापत्तिवारणाय तदावश्यकत्वे कटुकेति प्रत्युदाहरणोपन्यासो न युक्त इति वाच्यम्। इहाऽदिति तपरकरणादद्ग्रहणाच्च तस्मादिति परिभाषाबाधेऽपि न सर्वथा बाधः, परांशबाधेनैवोपपत्तावव्यवहितांशबाधे मानाभावस्तथाच प्रत्ययस्थककाराव्यवहितस्यात इत्त्वमित्यर्थे पूर्वपरयोः प्राप्तौ पूर्वस्यैवेत्यर्थस्याऽनुनासिक इत्यादि निर्देशेनोपपत्तौ सर्विकेत्यादावदोषात्। एवञ्च युक्त एव कटुकेति प्रत्युदाहरणोपन्यास इत्याशयेनाह—पूर्वस्य किम्। परस्य माभूत्कटुकेति। केचित्तु 'प्रत्ययस्थे की'ति न्यासमङ्गीकृत्य पूर्वस्येति खण्डयन्ति, तेषामयमाशयः, तथा न्यासे सप्तमीनिर्देशात्तस्मिन्निति परिभाषोपस्थितौ प्रत्ययस्थककाराद्व्यवहितपूर्वस्याऽत इदित्यर्थे परस्याऽकारस्येत्त्वाऽप्राप्तौ कटुकेत्यत्र दोषाभावादलन्तद्ग्रहणेनेति॥

आतः किम्। सांकाश्यिकेति। ननु स्त्रीबोधकाकारस्येत्त्वमिति 'उदीचामि'ति सूत्रस्यार्थेऽकारस्य स्त्रीप्रत्ययावयवत्वेऽप्यस्त्रीबोधकत्वेन न तत्रेत्वापत्तिरिति चेन्न। संकाशेन निर्वृत्तं नगरं सांकाश्यम् 'संकाशादिभ्यो ण्यः' इत्यनेन ण्यप्रत्यये तत्र भवेति विग्रहे 'धन्वयोपधादि'ति वुञि तस्याऽकादेशे सांकाश्यिकेत्यत्र स्त्रीप्रत्ययावयवाऽकारस्येत्वमिति सूत्रस्यार्थकरणे दोषस्य तादवस्थ्यात्। नच स्थाने ग्रहणस्य सद्भावादवयवषष्ठ्यभावेन न दोष इति वाच्यम्। भाष्यकृता तस्य प्रत्याख्यातत्वात्। नच साक्षाद्विधेयविशेषणे चरितार्थानां परिभाषाणां विधेयविशेषणविशेषणे न प्रवृत्तिरित्यर्थकश्विधौ परिभाषोपतिष्ठते नानुवादे इत्येतत्परिभाषाज्ञापनार्थं स्थाने-

---

१ वार्णादाङ्गमिति। वर्णत्वावच्छिन्नोद्देश्यककार्यापेक्षयाऽङ्गोद्देश्यककार्यस्य बलवत्त्वमित्यर्थः।

२ येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवतीति तत्स्वरूपम्।

३ परिभाषाणामवश्यप्राप्तपरम्पराधिकपरम्परया विधेयोपकार-

ग्रहणस्याऽऽवश्यकत्वेन कथं भाष्यकृता तत्प्रत्याख्यातमिति वाच्यम्। एतत्परिभाषाया अपि भाष्येऽदर्शनात्। एतस्या असत्त्वादेव 'उरण् रपरः' इत्यत्र 'उदात्तयणो हल्पूर्वादि'त्यत्र च स्थानार्थलाभः [1]अन्यथा तया 'षष्ठी स्थाने योगा' इत्यस्या अप्रवृत्तिबोधनात्तत्र स्थानार्थलाभो न स्यात्। नच [2]प्रतिपदोक्तपरिभाषया स्त्रियां विहितस्य स्त्रीप्रत्ययस्यैव ग्रहणात् [3]भवार्थविहितस्य स्त्रीप्रत्ययस्य स्त्रियामविहितत्वेनाग्रहणान्न दोष इति वाच्यम्। सूत्रे विशेष्यरूपेण स्त्रीप्रत्ययस्यानुच्चारणादुक्तपरिभाषाया अप्रवृत्तेः। प्रतिपदोक्तत्वञ्च यस्मिन्पदे परिभाषा प्रवर्त्तनीया तत्पदवृत्त्यानुपूर्व्यवच्छिन्नसाक्षाद्विधेयतोद्देश्यताऽन्यतरविषयताप्रयोजकपदघटितशास्त्रत्वमित्यलम्॥

ननु सूत्रे नञ्पूर्वाणामित्यस्य सत्त्वे नञ्पूर्वाणां भस्त्रैषाजाज्ञाद्वास्वेत्येतेषामात इदित्यर्थस्य भस्त्राद्यन्तानामेषामात् इदित्येतत्फलितत्वेन तस्य च [4](पदाङ्गाऽधिकारे तस्य च तदन्तस्य चे)ति तदन्तविधिनैव लाभान्नञ्पूर्वाणामिति व्यर्थमित्याशयेनाह—तदन्तविधिनैव सिद्धौ नञ्पूर्वाणामपीति स्पष्टार्थमिति।

ननु सूत्रे भस्त्राशब्दस्येत्वार्थं ग्रहणन्तच्चानुपसर्जनानुक्तशब्दादुत्तरसूत्रेणैव सिद्धमितीह व्यर्थन्तद्ग्रहणमित्यत आह—भस्त्राग्रहणमुपसर्जनार्थमिति। एवञ्चाऽनुपसर्जने आदाचार्याणामित्यात्वम्भ-

---

कत्वं न भवतीत्यर्थः। परिभाषायाः प्रधानीभूतविधेयोपकारके सम्पादनीये यावती परम्पराऽवश्यप्राप्ता ततोऽधिकपरम्परा यत्र शास्त्रे विधेयोपकारके तत्र शास्त्रे परिभाषा न प्रवर्तते इति यावत्।

१ एतत्परिभाषासद्भावे इत्यर्थः।

२ लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति परिभाषास्वरूपम्।

३ तत्रभवेति विग्रहे जातो वुञ् प्रत्ययः स्त्रियमाहेति तस्य स्त्रीप्रत्ययत्वं परन्त्वसौ स्त्र्यधिकारे विहित इति भावः।

४ पदाधिकारेऽङ्गाधिकारे च कार्यं सूत्रोपात्तसजातीयस्य सूत्रोपात्तसजातीयान्तस्य च भवतीत्यर्थः।

वत्येव । नचानेनोक्तसूत्रस्य बाधे कथन्तेनाऽऽत्वमिति वाच्यम् । उपसर्जनेऽस्य चारितार्थ्येन बाधे मानाभावात् । अन्यस्येति । अनुपसर्जनस्येत्यर्थः । उत्तरसूत्रेणेति । अभाषितपुंस्काच्चे'त्यनेनेत्यर्थः ॥

ननु न सु एतद्सु इत्यवस्थायामकचि कृते वा ततः पूर्वमेव नञ्तत्पुरुषसमासे कृते ततोऽकचि (अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते) इति न्यायेनान्तरङ्गात्त्यदाद्यत्वात्प्राक् विभक्त्योर्लुकि पुनर्विशिष्टात्सुपि त्यदाद्यत्वे पररूपत्वे च कृते टापि, अनेषकेति सिद्ध्यति । अत्र टापः सुपः परत्वादसुप इति प्रतिषेधान्नेत्वमित्यत आह—एषा द्वा एतयोस्तु सपूर्वयोर्नेत्वमित्यादि ॥

ननु 'अभाषितपुंस्काच्चे'त्यस्य न भाषितः पुमान्येन शब्देन सोऽभाषितपुंस्कस्तस्माद्विहिताऽऽत्स्थानिकस्याऽत इद्वेत्यर्थस्तत्र विहितविशेषणस्य फलमाह—बहुव्रीहेर्भाषितपुंस्कत्वात्ततो विहितस्य नित्यमिति । अयम्भावः, अविद्यमाना खट्वा यस्या इति विग्रहे 'शेषाद्विभाषे'ति समासान्तकपो वैकल्पिकत्वेन तदभावपक्षे 'गोस्त्रियोरुपसर्जनस्ये'त्युपसर्जनह्रस्वेऽखट्वशब्दाट्टापि सुपि, अज्ञातादौ के सुब्लुकि 'केणः' इति ह्रस्वे पुनष्टापि अभाषितपुंस्काद्विहिताऽऽकारस्थानिकाऽकारस्याऽभावादेव तद्विकल्पाऽप्राप्तौ प्रत्ययस्थेति नित्यमेवेत्वम् । परविशेषणत्वाऽभ्युपगमे तु आत्स्थानिकाऽकारस्याऽभाषितपुंस्कखट्वशब्दात्परत्वेन वैकल्पिकेत्वाऽऽपत्तिरूपदोषः स्यादेवेति ॥

शैषिके कपितु विकल्प एवेति । अयम्भावः, न खट्वास्विति स्थितौ कपि सुब्लुकि प्रत्ययलक्षणेन भागद्वयस्य सुबन्तत्वात्समाससंज्ञायां 'समासान्ता' इति शास्त्रबलेन कबन्तस्यैव समासत्वादुपसर्जनस्त्रीप्रत्ययान्तसमासरूपप्रातिपदिकाऽभावात् 'गोस्त्रियोरि'ति ह्रस्वत्वाऽभावेन 'केण' इति प्राप्तह्रस्वत्वस्य 'न कपी'ति निषेधेन 'आपोऽन्यतरस्यामि'ति ह्रस्वे कपः प्राग्वर्त्तिखट्वशब्दात्परस्याऽऽपोऽभाषितपुंस्काद्विहितत्वेन तत्स्थानिकाऽकारस्य वैकल्पिकेत्वेऽखट्विका, अखट्वकेति, ह्रस्वाऽभावेतु अखट्वाकेति, त्रिविधं रूपं निर्बाधमेवेत्यलम् ॥

अयमेव स्त्रीप्रत्ययेषु तदन्तविधिं ज्ञापयतीति । नन्वयमेवेत्यनुपपन्नं शूद्रा चामहत्पूर्वा जातिरित्येतत्सूत्रस्थाऽमहत्पूर्वग्रहणस्याऽपीह तदन्तविधिज्ञापकत्वादिति चेन्न । एवशब्दस्याऽन्यर्थकत्वेनाऽ-

दोषात्। शंखः पाण्डुरेवेत्यस्य यथा शंखः पाण्डुरपीत्यर्थस्तथाऽयमेवेत्यस्याऽयमपीत्यर्थो बोध्यः। नचाऽनड्वानिवाऽऽचरति अनडुहति ततः कर्तृक्विवन्तादनडुह् शब्दात् 'षिद्गौरादिभ्यश्चेति ङीषो वारणायाऽनुपसर्जनाऽधिकारस्याऽऽवश्यकत्वात्तदन्तविधिज्ञापकत्वं न सम्भवतीति वाच्यम्। तदन्तविधिज्ञापकतापरभाष्यप्रामाण्यादाचारक्विबन्तप्रकृतिककर्तृक्विबन्तानामनभिधानेन ज्ञापकत्वस्य सुस्थत्वात्। नच पञ्च स्त्रीगोव्यक्तयो धनानि यस्य स पञ्चगवधन इत्यत्र पञ्चमवेत्यस्योपसर्जनत्वेन तत्र ङीब्निवृत्त्यर्थंतस्य चरितार्थत्वेन कथं ज्ञापकत्वमिति वाच्यम्। अर्थवत्सूत्रोक्तस्य (एतत्संज्ञाफलभूतविभक्तीतरसमभिव्याहाराऽनपेक्षया लोकेऽर्थविषयकबोधजनकत्व) रूपाऽर्थवत्त्वस्याऽभावेन टजन्तस्य प्रातिपदिकत्वाऽभावेन ङीपोऽप्रसक्तेः। प्राचीनमतेऽपि स्वपर्य्याप्तत्वस्वप्रयोज्यबोधजनकत्वप्रकारकवक्तृतात्पर्य्यीयविशेष्यतापर्य्याप्त्यधिकरणत्वैतदुभयसम्बन्धेन शक्तिविशिष्टत्वरूपाऽर्थवत्त्वस्य पञ्चगवेत्यत्राऽसत्त्वेन तदप्रसक्तेः। नचाऽऽपिशलिना प्रोक्तमधीते या सा आपिशला ब्राह्मणीत्यत्र ङीब्व्यावृत्त्यर्थमुपसर्जनाधिकारस्य चारितार्थ्यमिति वाच्यम्। प्रोक्ताऽर्थकस्याऽणः स्त्रियामवर्त्तनेन तदप्राप्तेः। नचाऽध्येत्रर्थकाऽण्निमित्तको ङीप्तु दुर्वार एवेति वाच्यम्। तस्य लुप्तत्वेन तन्निमित्तकस्य ङीपोऽप्रसक्तेः। नच प्रत्ययलक्षणेन तत्सत्ता सुलभैवेति वाच्यम्। अण्योऽकार इति व्याख्यानेन वर्णाऽऽश्रये प्रत्ययलक्षणाऽभावात्। नचाऽध्येत्रर्थगतस्त्रीत्वमादाय प्रोक्ताऽण्निमित्तको ङीप् स्यादिति वाच्यम्। स्त्रियामित्यस्य गृह्यमाणविशेषणत्वेन प्रोक्ताऽणोऽध्येत्रर्थगतस्त्रीत्वेऽविद्यमानत्वेन तदप्राप्तेः। अत एव काशकृत्स्निप्रोक्तां मीमांसामधीते काशकृत्स्ना ब्राह्मणीत्यत्राऽपि न ङीप्। नच प्रोक्तार्थगतस्त्रीत्वमादाय पुनर्ङीप् कुतो नेति वाच्यम्। लक्ष्ये लक्षणन्यायस्य जागरूकत्वात्। तस्मादनुपसर्जनाऽधिकारस्य बहुकुरुचरेत्येव व्यावर्त्यम्। तत्र तदन्तविधिं विना प्राप्तिरेव नेति तदन्तविधिज्ञापनमावश्यकमेव। सति तु तस्मिन् विशेष्यत्वादनुपसर्जनाऽधिकारसामर्थ्याच्च स्त्रियामिति प्रातिपदिकविशेषणमेव। स्त्रियामित्यस्य प्रातिपदिकविशेषणत्वादेव धीवानमतिक्रान्ताऽतिधीवरीति सिद्धम्। १ एवञ्च आपिशला ब्राह्मणीत्यप्यस्यैव व्यावर्त्यम्। अनुपसर्जनादिति च सामर्थ्या

१ अनुपसर्जनादिति सूत्रे कृते चेत्यर्थः।

द्गृह्यमाणविशेषणमेव, १ अन्यथाऽधिकारसूत्रं व्यर्थमेव स्याद्धितेऽपि लशुने न शान्तो व्याधिरिति न्यायादतो गुणः कृतात्मसंस्कारः प्रधानमनुरुध्यते इति न्यायादृगृह्यमाणविशेषणत्वमेव तस्येति भावः। तदन्तविधिफलन्तु कौम्भकारेयसिद्धिः। अन्यथा कुम्भकार्य्या अपत्यमिति विग्रहेऽपि केवलकारीशब्दादपि स्त्रीप्रत्ययान्तत्वात् 'स्त्रीभ्यो ढक्'इति ढगाऽऽपत्त्या कुम्भकारेय इत्यापद्येत। नचैकार्थीभावरूपसामर्थ्यस्य समुदायवृत्तित्वेनैकदेशाऽवृत्तित्वात्तस्मात्तद्धितोत्पत्तिर्न स्यादिति वाच्यम्। 'तद्धितार्थोत्तरपदसमाहारे च' त्यनेनोत्तरपदे समासविधानसामर्थ्याद्पर्यास्याऽप्येकार्थीभावमादाय वृत्तेः स्वीकारात्। नच २( कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमि )ति परिभाषया समुदायादेव ङीबुत्पत्त्या तस्मादेव च ढकि न काऽप्यनुपपत्तिरिति वाच्यम्। उक्तपरिभाषायाः कृन्मात्रग्रहण एव प्रवृत्तेः स्वीकारादित्यलम्॥

ननु टिड्ढाणञिति सूत्रेऽनुपसर्जनादित्यधिकारादनुपसर्जनं यट्टिदाद्यन्तं तदन्तं यददन्तं प्रातिपदिकं ततो ङीबित्यर्थे बहवः कुरुचरा यस्यामिति बहुव्रीहौ कुरुचरशब्दस्याऽन्यपदार्थे विशेषणत्वेनोपसर्जनत्वान्न तद्धटितबहुकुरुचरशब्दान्ङीपः प्रसक्तिरित्याशयेनाऽऽह—उपसर्जनत्वान्नेह, बहुकुरुचरेति। नच ( समासप्रत्ययविधौ प्रतिषेधः ) इत्यनेन तदन्तविधिनिषेधाट्टिद्रूपं यत्प्रातिपदिकमित्यर्थस्यैव सम्भवेन नोक्तस्थलीयोक्तापत्तिः। नचोक्तार्थस्वीकारे कुरुचरशब्दस्याऽपि टिद्रूपप्रातिपदिकत्वाऽभावान्ङीपोऽप्रसक्त्या कुरुचरीत्यपि न स्यादिति वाच्यम्। ( अवयवेऽचरितार्था अनुबन्धाः समुदायोपकारका भवन्ती )ति न्यायात्कुरुचरघटकचरेत्यत्राऽनुबन्धस्याऽच-

---

१ अनुपसर्जनादित्यस्यापि प्रातिपदिकविशेषणत्वे इत्यर्थः।

२कृद्ग्रहण इति। अत्र गतिरनन्तर इति सूत्रेऽनन्तरग्रहणं प्रमाणम्। तथाहि, अभ्युद्धृतमित्यादावभेः प्रकृतिस्वराऽभावायाऽनन्तरग्रहणं तिष्ठति, परं प्रत्ययग्रहणपरिभाषयोद्धृतस्य क्तान्तत्वाभावादेवाभेः प्रकृतिस्वराप्राप्तौ तदर्थं कृतमनन्तरग्रहणं व्यर्थं सत्परिभाषां ज्ञापयति, ज्ञापितायान्त्वस्यामनयोद्धृतस्य क्तान्तत्वात्तस्मिन्नभेः प्राप्तस्य प्रकृतिस्वरस्य वारणार्थमनन्तरग्रहणं स्वांशे चरितार्थमिति भावः।

रितार्थत्वेन कुरुचरेति समुदाये टित्त्वस्य बोधनात्। नचोक्तन्यायेन बहुकुरुचरेति समुदायस्याऽपि टिद्रूपत्वादुक्ताऽऽपत्तेस्तादवस्थ्यमेवेति वाच्यम्। यं समुदायं यो न व्यभिचरति स तस्योपकारको भवतीति स्वीकारेणोक्तसमुदाये टिद्रूपत्वस्य व्यभिचारात्तत्राऽऽपत्तेरसम्भवादिति वाच्यम्। अनुपसर्जनाऽधिकारेण स्त्रीप्रत्यये तदन्तविधिज्ञापनात्तत्र चोक्ततदन्तविधिनिषेधकवार्त्तिकाऽप्रवृत्तेश्च ज्ञापनात्। नचोक्ताधिकारेण तदन्तविधिज्ञापनेऽपि बहुकुरुचरेति समुदायेऽनुपसर्जनत्वस्यैव सत्त्वान्ङीपो दुर्वारत्वेन कथमेतदनुपसर्जनाऽधिकारव्यावर्त्त्यमिति वाच्यम्। १तेनैव सामर्थ्याद्गृह्यमाणविशेषणत्वस्याऽपि ज्ञापनात्तस्य गृह्यमाणविशेषणत्वात्समुदायस्याऽनुपसर्जनत्वेऽपि गृह्यमाणस्य कुरुचरेत्यस्योपसर्जनत्वेन व्यावर्त्त्यत्वसम्भवात्। नचाऽनुपसर्जनादित्यस्य गृह्यमाणविशेषणत्वेऽपि स्त्रियामित्यस्याऽपि गृह्यमाणविशेषणत्वात्तस्य च स्त्रियामविद्यमानत्वेन दोषाऽभावात्कथं व्यावर्त्त्यमिति वाच्यम्। अनुपसर्जनादित्येतत्सामर्थ्यात्स्त्रियामित्यस्य तदन्तविशेषणत्वज्ञापनादिति भावः॥

ननु ब्रूधातोर्लृटि तत्स्थाने शतृचि स्यप्रत्यये वच्यादेशे मुगागमे चकारस्य कुत्वे सकारस्य षत्वे कषोर्योगे वक्ष्यमानशब्दाट्टापि णत्वे सति वक्ष्यमाणेति सिद्धम्। अथाऽत्र लृट्टित्वोगित्वयोः स्थानिवद्भावेनाऽऽदेशभूते शानचि सुलभत्वाट्टापं बाधित्वा २ङीपा भवितव्यम्। नचाऽनल्विधाविति निषेधात्स्थानिवद्भावाऽप्राप्त्या टित्वोगित्वयोरनतिदेशेन नोक्ताऽऽपत्तिलेशोऽपीति वाच्यम्। 'न ल्यपी'ति ज्ञापकात् (अनुबन्धकार्ये) इत्पदघटिताऽल्मात्रवृत्तिधर्मघटितधर्मावच्छिन्नोद्देश्यताके कार्येऽनल्विधाविति निषेधाऽप्रवृत्तिज्ञापनात्। ३अन्यथा प्रधाय, प्रदायेत्यादावनल्विधाविति निषेधेन स्थानिवद्भावाऽप्राप्त्या किंत्वस्याऽनतिदेशात् 'घुमास्थागापे'तीत्वाऽप्राप्त्या तन्निषेधार्थं न ल्यपीत्यस्य स्पष्टमेव वैयर्थ्यं स्यात्। ४अत एव रमायामित्यादौ परत्वात् 'ङेराम्'

१ अनुपसर्जनाऽधिकारेणैवेत्यर्थः।

२ टिड्ढाणञिति, उगितश्चेति सूत्राभ्यामित्यर्थः।

३ अनुबन्धकार्येऽप्यनल्विधाविति निषेधप्रवृत्तावित्यर्थः।

४ नल्यपीति ज्ञापकेनाऽनुबन्धकार्येऽनल्विधाविति निषेधाऽप्रवृत्तेरेवेत्यर्थः।

त्यामि कृते स्थानिवद्भावेनाऽऽमो ङित्वात् 'याडापः' इति याडाग-मस्य सिद्धिरित्याशयेनाऽऽशङ्कते—वक्ष्यमाणेत्यत्र टिड्ढाणञिति ङीप्प्राप्त इति। समाधत्ते—यासुटो ङित्वेनेति। अयम्भावः, यासुट् परस्मैपदेषूदात्तो ङिच्चे'ति सूत्रेण लिङादेशतिबादीनां यासुडाग-मस्य ङित्वं विधीयते परमेतद्विफलं लिङ्गतङित्वस्य स्थानिवद्भावेन तत्स्थानिकादेशे सुलभत्वात् १( यदागम ) परिभाषया यासुड्विशि-ष्टेऽप्यतिदेशात्। एवञ्चोक्तसूत्रविहितं ङित्वं व्यर्थं सज्ज्ञापयति ला-ऽऽश्रयमनुबन्धाकार्यं नादेशानामिति। लकारवृत्तीत्पदघटिताऽत्मांत्र वृत्तिधर्म्माऽतिदेशोऽनल्विधाविति निषेधः प्रवर्त्तत एवेति तदर्थः। तथाच प्रकृतेऽनल्विधाविति निषेधाट्टित्वोगित्वयोरनतिदेशान्न तत्प्र-युक्तोक्ताऽऽपत्तिरिति। ननु 'सार्वधातुकमपिदि'ति सूत्रेऽपिदिति योगं विभज्य तत्र 'गाङ्कुटादिभ्यो ञ्णिन्ङिदि'त्यतो ङिद्ग्रहणमनुवर्त्योभ-योरावृत्तिं कृत्वाऽपिदिति प्रसज्यप्रतिषेधञ्चाश्रित्य ङिच्च पिन्न भवती त्युक्तम्भाष्ये, अत एव ब्रुतादित्यत्र 'ब्रुव ईट्' इतीण् न भवति तथाच रुयात् स्तुयादित्यादावुक्तभाष्यात्तदुभयोस्समावेशाऽसम्भवात्साक्षा-त्पित्वेनाऽऽतिदेशिकङित्वबाधे गुणनिषेधाऽनुपपत्त्या गुणनिषेधाय ङित्वविधानस्य साफल्ये लाऽऽश्रयेतिवचनज्ञापनाऽसम्भवाद्वक्ष्यमा-णेत्यत्र दोषस्तदवस्थ एवेत्यरुचेराह—श्नःशानचः शित्वमिति। शानचि शित्वस्य 'सार्वधातुकमपिदि'ति ङित्वेन 'क्ङिति चे'ति निषेधेन पुषाण, मुषाणेत्यादौ गुणाऽभावः प्रयोजनम् तच्च तत्र शित्करणमन्तराऽपि श्नावृत्तिशित्वस्य स्थानिवद्भावादानचि सुलभत्वादुक्तरीत्योपपन्नमे-वेति व्यर्थं शानचि शित्वं ज्ञापयति क्वचिदनुबन्धकार्य्येऽप्यनल्विधा-विति निषेधः प्रवर्त्तत इति। तथा चैतेन ज्ञापितार्थेन न ल्यपीति ज्ञापि-ताऽर्थबाधेन न ङीबापत्तिः सच बाधो न सार्वत्रिक इति तत्र क्वचिदि-त्युक्तम्। नच शानचः शित्वस्य भाष्ये प्रत्याख्यातत्वादुक्ताऽर्थे तस्य ज्ञापकत्वाऽसम्भवेन कथमत्र ङीबभाव इति वाच्यम्। सत्यभिधाने वक्ष्यमाणेत्यस्याऽजादौ पाठेन तदुपपत्तेः। टापो ङीबादेर्बाधकत्वान्न ङीबिति भावः। 'नमुने' इति सूत्रे टायामादेश इति भाष्यप्रयोगाद-जादेस्त्वाकृतिगणत्वे न कश्चिद्विवाद इति दिक्॥

---

१ यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते इति परिभाषास्वरू-पम। अत्र नेटि, णेरनिटीतिसूत्रेऽनिटीति च ज्ञापकम्।

ननु चुराशीलमस्या इति विग्रहे 'शीलं छत्रादिभ्य' इतिणोऽणत्वाऽभावेन टिड्ढाणञित्यास्याऽप्राप्त्या ङीबभावेन चौरीति ङीवन्तप्रयोगो न स्यादित्याशङ्क्य, समाधत्ते—ताच्छीलिके णेऽपीति। उक्तसूत्रेण णप्रत्यये कृतेऽण् परत्वाऽभावादेव 'अन' इति प्रकृतिभावस्याऽप्राप्त्या 'नस्तद्धिते' इति टिलोपेनैव कार्म्म इति सिद्धावन इत्यस्य बाधनार्थं कृतं ताच्छील्येऽर्थे कार्म्म इति निपातनं व्यर्थं सज्ज्ञापयति अणि सति यत्कार्य्यं तत्ताच्छीलिके णेऽपि भवतीति नोक्तप्रयोगाऽसिद्धिरूपदोषाऽवकाश इति भावः। उक्तज्ञापने ताच्छीलिकेत्यस्य फलं 'तदस्यां प्रहरणमि'ति विहितणान्ते दाण्डेत्यादौ ङीबभावरूपम्, णे इत्यस्य फलं पुष्पाण्याहरति तच्छीला पुष्पाहरेत्यच्प्रत्ययान्ते ङीबभावरूपमिति बोध्यम्॥

ननु 'प्राचां ष्फ तद्धित' इत्यत्र यञ एवाऽनुवृत्त्यर्थं टिड्ढाणञिति सूत्रात्पृथक् 'यञश्चे'ति योगविभागः कृतस्तत्र वार्त्तिककारेणाऽपत्यग्रहणं कर्त्तव्यमिति यद्यपि पठितं तथापि तदपत्याधिकारपरं तादृशश्च 'गर्गादिभ्यो यञि'ति विहित एव तदन्तादेव च ङीप् नाऽन्यस्मादित्याशयेनाह—अनपत्याधिकारस्थान्न ङीबिति। अपत्याधिकारस्यभिन्नादित्यर्थः। अपत्यार्थभिन्नादपत्यार्थेऽप्यपत्याधिकारस्थभिन्नाच्च न ङीबिति पर्य्यवसितोऽर्थः। तथाच द्वीपे भवा द्वैप्येत्यत्र न ङीप्। तत्र 'द्वीपादनुसमुद्रं यञ्' इति विहितयञो भवार्थकत्वेनाऽपत्यार्थभिन्नत्वात्। एवं देवस्याऽपत्यं दैव्येत्यत्राऽपि न ङीप्, अत्र 'देवाद्यञञावि'ति विहितस्य यञः प्राग्दीव्यतीयत्वेनाऽपत्याऽधिकार बहिर्भूतत्वात्। 'तेन दीव्यति जयती'त्यतः प्राग्येऽपत्यादयोऽर्थास्तत्रैवास्य यञो विधानं नत्वपत्याधिकार इति भावः। नचोक्तस्याऽपत्यग्रहणं कर्त्तव्यमिति वार्त्तिकस्य भाष्यकृता प्रत्याख्यातत्वात्कथमुक्तकल्पनेति वाच्यम्। उक्तयोगविभागाऽकारप्रश्लेषादिकरणात् यञश्चेत्यत्राऽपत्याधिकारस्थस्यैव यञो ग्रहणमिति भाष्यकारव्याख्यानाद्योकार्थकल्पनासम्भवादित्यलम्॥

ननु षित्वविधानसामर्थ्यादेव प्रातिपदिकत्वाऽभावेऽपि ङीष्सिद्धौ 'प्राचां ष्फतद्धित' इत्यत्र तद्धितग्रहणं व्यर्थमित्याशंक्य समाधत्ते—तद्धितान्तत्वात्प्रातिपदिकत्वमिति। अयम्भावः, अत्र सूत्रे तद्धितग्रहणे कृते सति ष्फप्रत्ययस्य तद्धितसंज्ञाविधानेन तदन्तस्य प्राति-

पदिकत्वात् 'शिङ्गौरादिभ्य' इति ङीष्सिद्धिः। तदग्रहणे तु न स्यात्। नचोक्तङीष्विधायकशास्त्रे प्रातिपदिकविशेषणे सति तद्धितग्रहणस्याऽऽवश्यकत्वम्भवति परमुक्तविशेषणस्यैव तत्र फलाऽभावाद्वैफल्यमिति वाच्यम्। १तस्य अपा क्षमा भृजेत्यादौ धातोःषित्वान्ङीष्व्यावृत्त्यर्थत्वेन साफल्यात्। एवञ्च प्रातिपदिकत्वाऽर्थं तद्धितग्रहणमावश्यकमेव परमेतदयुक्तम्, अपा क्षमेत्यादौ। धातोः षित्वस्याङ्प्रत्ययसम्पादनाच्चारितार्थ्ये सामर्थ्यविरहात्तत्र ङीषोऽप्राप्त्या तदर्थं ङीष्विधायकशास्त्रे प्रातिपदिकविशेषणस्याऽनावश्यकत्वेन तद्धितग्रहणस्याऽप्यनावश्यकत्वात्। नच गार्ग्यशब्दात्ष्फप्रत्यये कृते यञोऽकारस्य 'यस्येति चे'ति लोपाऽर्थं तद्धितग्रहणमस्त्विति वाच्यम्। सवर्णदीर्घेणाऽपि रूपसिद्धेः। एवञ्च व्यर्थीभूतं तद्धितग्रहणं ज्ञापयति क्वचिदिन्तादपि ष्फो भवतीति तेन (आसुरेरुपसंख्यानम्) इति वचनं सिद्धम्। तद्धितग्रहणज्ञापितार्थफलितमेवैतद्वचनं नाऽपूर्वमिति दिक्॥

ननु ष्फप्रत्ययस्य स्त्रियामेव विधानादुक्तार्थानामिति न्यायेन पुनस्तदर्थं ङीष् न स्यादिति प्रादुर्भूतं पूर्वपक्षं निराकरोति—षित्सामर्थ्यात्ष्फेणोक्तेऽपीत्यादिना। अयम्भावः षित्वविधानसामर्थ्यादुक्तन्यायबाधेन ष्फप्रत्ययस्य स्त्रियां विधाने न कश्चित्प्रतिबन्धक इति। वस्तुतस्तु पञ्चकं प्रातिपदिकाऽर्थं इति सिद्धान्तसम्मते पक्षे प्रत्ययानां द्योतकत्वस्यैव युक्तत्वात्। तथाच द्योतकविषये नोक्तार्थानामप्रयोग इति न्यायप्रवृत्तिः। अत एव (द्विर्बद्धं सुबद्धमि)ति न्यायबलेन व्यतिलुनीते इत्यादौ द्योतकसमुच्चयस्य दर्शनम्। एतद्विषये उक्तन्यायाऽप्रवृत्ताविदं षित्वमपि ज्ञापकमन्यथा स्पष्टमेवैतस्य वैयर्थ्यं स्यात्। अत एव, अक्ष्णा काण इति प्रयोगो 'येनाङ्गविकार' इति सूत्रभाष्योक्तः सङ्गच्छते। अन्यथा काणशब्दस्याऽक्षिगतविकारवाचकत्वेन तदुपादानादेवाऽर्थादक्ष्णो लाभे पुनरक्षिशब्दप्रयोगस्योक्तन्यायेनाऽप्राप्त्याऽक्ष्णा काण इति प्रयोग एव न स्यादित्यलम्॥

सर्वत्र लोहितादीति। सर्वत्रेत्यस्य सर्वेषाम्मते इत्यर्थस्तेन नित्यत्वलाभस्तथाच लोहितादिभ्यो यञन्तेभ्यः कतशब्दान्तेभ्यश्च यञन्तेभ्यो नित्यं ष्फप्रत्ययः स्यात्। लौहित्यायनी, कात्यायनीति। लौहित्यशब्दात्कात्यशब्दाच्च ष्फप्रत्यये तस्याऽऽयनादेशे षित्वान्ङीषि

१ प्रातिपदिकविशेषणस्येत्यर्थः।

तत्सिद्धिः। नन्वत्र प्राचामित्यस्य निवृत्त्यैव नित्यत्वसिद्धौ तदर्थं कृतं सर्वत्रग्रहणं व्यर्थमेवेति चेन्न। तस्य प्राचां ष्फ तद्धित इत्यत्राऽपकर्षणेन बाधकविषयेऽपि प्राचामित्यस्य प्रवृत्तिसम्पादनेन सार्थक्यात्। उक्तसूत्रस्य बाधकविषयेऽपि प्रवृत्त्यभ्युपगमेन, आवट्यायनीत्यत्र 'आवट्याच्चे'ति चापं बाधित्वा प्राचाम्मते ष्फप्रत्यय एव। नच चापोऽपवादत्वात्तेन ष्फप्रत्ययबाधे कथमसाविति वाच्यम्। उदीचाम्मते ङीब्बाधनेन चापश्चारितार्थ्यात् प्राचां ष्फ इत्यत्र सर्वत्रग्रहणाच्चापो ङीप्बाधकत्वमेव नत्वनन्तरष्फबाधकत्वम्। चापि कृते न ष्फप्राप्तिरत इत्यधिकारादित्यलम्॥

टाप्ङीषोरपवाद इति। 'कौरव्यमाण्डूकाभ्यां चे'त्येतद्विहितः ष्फप्रत्ययस्तयोर्बाधक इत्यर्थः। 'जातेरस्त्री'ति सूत्रेण योपधभिन्नाज्जातिवाचकान्ङीष्विधानात्कौरव्यशब्दस्य जातिवाचकत्वेऽपि योपधभिन्नत्वाऽभावादुक्तसूत्रविहितङीषोऽप्राप्त्या तस्माट्टाप् मण्डूकशब्दस्य जातिवाचकत्वाद्योपधभिन्नत्वाच्च ङीषिति विवेकः। टाप्ङीपोरित्येव पाठो यद्यपि प्रायो दृश्यते तथापि ङीषिति लेखकप्रमाद एव, अथवा पारिभाषिकस्य पुत्रपौत्रप्रभृतिगोत्रस्यैव जातित्वेन न ङीषिति मतान्तरेण तादृशः पाठ उपपाद्य इति। कौरव्यसाहचर्यान्मण्डूकशब्दोऽप्यपत्यप्रत्ययान्त एवात्र गृह्यते। तेन मण्डूकस्येयं भार्येत्यर्थे 'तस्येदमि'त्यणन्तस्य माण्डूकशब्दस्याऽग्रहणात् यद्यसौ कूपमाण्डूकीति भट्टिप्रयोगोपपत्तिरिति दिक्॥

परिमाणान्तात्तु, द्व्याढकीति। ननु न तद्धितलुकीत्येव सिद्धे सूत्रेऽपरिमाणग्रहणं व्यर्थमिति चेन्न। अपरिमाणग्रहणाऽभावे आढकस्य परिमाणत्वेन तदन्तादपि ङीप्निषेधाऽऽपत्त्या द्व्याढकीत्यस्याऽसिद्ध्यापत्तेः। नच परिमाणान्तान्ङीप्निषेधाऽभावाय सूत्रेऽपरिमाणग्रहणकरणादेव द्विविस्तेत्यादेरपरिमाणान्तत्वात्ततोपि ङीप्निषेधसिद्धौ विस्तादिग्रहणं व्यर्थमेवेति वाच्यम्। आचितशब्दस्य परिमाणत्वेन ततो ङीप्निषेधाऽनाऽपत्त्या, तस्मादपि निषेधायाऽऽचितशब्दग्रहणस्याऽऽवश्यकत्वात्। नचापरिमाणाऽऽचिताभ्याञ्च तद्धितलुकीत्येतावतैव सूत्रेण विस्तकम्बल्ययोरुन्मानत्वादपरिमाणत्वेन तदन्ताभ्यामपि निषेधसिद्धौ सूत्रे तयोर्ग्रहणं स्पष्टमेव व्यर्थमिति वाच्यम्। उन्मानान्तान्ङीप्निषेधश्चेत्तर्हि विस्तकम्बल्यशब्दान्तादेवेति नियमार्थत्वेन सार्थक्यात्। एवञ्च सूत्रे विस्तकम्बल्यशब्दान्तभिन्न-

त्वेन संकोचाद्विस्तकम्बल्यशब्दान्तभिन्नादपरिमाणान्तादाचितशब्दान्ताच्च द्विगोर्न ङीबित्यर्थेऽपरिमाणाऽचिताभ्याञ्च तद्धितलुकीति योगेन विस्तकम्बल्यशब्दान्ताभ्यां ङीब्निषेधाऽनाऽऽप्त्या तदर्थं तयोर्ग्रहणस्याऽऽवश्यकत्वेन स्वांशे चारितार्थ्यं जातम्। फलञ्च नियमस्य द्विनिष्कीत्यत्र ङीब्निषेधाऽभावः। अत्र सूत्रे परिमाणशब्देन 'ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः। आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः' इति पारिभाषिकस्य परिमाणस्य ग्रहणात् द्विवर्षे भूता द्वाभ्यां शताभ्यां क्रीतेत्यर्थे द्विवर्षा, द्विशतेत्यादौ, तिर्य्यङ्माने द्विहस्ता भित्तिरित्यादौ च निषेधसिद्धिरिति। 'अपरिमाणविस्ताचितकम्बल्येभ्यो न तद्धिते' इत्येवास्तु सूत्रं मास्तु च तत्र लुग्ग्रहणं द्विगोरित्यस्याऽनुवृत्तिः, तद्धितपदस्य तद्धितार्थपरत्वम्' तथा च तद्धितार्थे विद्यमानो योऽपरिमाणान्तो द्विगुस्ततोङीब् नेत्यर्थे समाहारे पञ्चाश्वीत्यादिद्विगौ न निषेधः पञ्चाश्वेत्यपरिमाणान्तद्विगोस्तद्धितार्थेऽविद्यमानत्वादिति केचित्तन्न। अपरिमाणाद्यन्ताद्द्विगोर्यस्तद्धितस्तदन्तान्ङीब् नेत्यर्थस्यापि सम्भवादध्यर्द्धकार्षापणिकी, अध्यर्द्धसाहस्री षडवेत्यत्राऽपि निषेधप्रसक्तेः। अत्र च 'विभाषा कार्षापणसहस्राभ्यामि'ति विकल्पेन लुग्विधानं लुगभावपक्षे चोक्तरूपम्, तत्र निषेधो दुर्वारस्तस्माल्लुग्ग्रहणं कर्त्तव्यम्, कृते च तस्मिन्न दोषस्तद्धितलुकि सत्येव निषेधविधानादिति दिक्॥

ननु परिमाणशब्दस्य परितः सर्वतः, आरोहतः परिणाहतश्च मीयते येन तत्परिमाणमित्यर्थस्तथा च षोडशहस्तप्रमाणदण्डवाचककाण्डशब्दस्याऽऽयाममात्रपरिच्छेदकत्वात्प्रमाणत्वेनापरिमाणत्वादनेनैव तदन्तादपि ङीब्निषेधसिद्धौ 'काण्डान्तात्क्षेत्रे' इति निषेधसूत्रं व्यर्थमिति चेन्न। तस्य काण्डान्ताद्द्विगोर्ङीब्निषेधश्चेत्क्षेत्र एवेति नियमार्थकत्वेन सार्थक्यात्। एवञ्च द्वे काण्डे प्रमाणमस्याः सा द्विकाण्डा क्षेत्रभक्तिरित्यत्रैव निषेधो नतु द्विकाण्डी रज्जुरित्यत्रापि, इह काण्डस्य क्षेत्रेऽविद्यमानत्वादित्याशयेन प्रत्युदाहरति—क्षेत्रे किम्, द्विकाण्डी रज्जुरिति। निषेधस्य पूर्वसूत्रेण सिद्धत्वादेतत्सूत्रारम्भफलमपीह ङीबेवेति बोध्यमिति भावः॥

ननु द्वौ पुरुषौ प्रमाणमस्या इत्यर्थे प्रमाणशब्दस्यापरिमाणत्वादपरिमाणाचितेत्यनेनैव निषेधसिद्धौ 'पुरुषात्प्रमाणे'ति सूत्रं व्यर्थ-

मिति चेन्न। पुरुषस्योद्र्ध्वाधरदिगवस्थितवस्तुमात्रपरिच्छेदकत्वे-नोन्मानत्वादुन्मानान्तानां चेन्निषेधस्तर्हि वितस्त्याद्यन्तादेवेति नियमा-दुक्तसूत्रेण निषेधाऽप्राप्तौ 'द्विगोरि'ति प्राप्तनित्यङीपं बाधित्वा वै-कल्पिकङीट् विधानार्थमावश्यकत्वेन सार्थक्यात्। अत्र सूत्रे प्रमाण-शब्दो नायामपरिच्छेदकवाची किन्तु परिच्छेदकमात्रपरः। प्रमाणश-ब्दस्य परिच्छेदकमात्रपरत्वादेव, पुरुषविशेषणत्वं तस्य संगच्छते। प्रमाणशब्दस्याऽऽयामपरिच्छेदकवाचित्वे तु पुरुषस्याऽऽयामपरिच्छे-दकत्वाभावात्तद्विशेषणत्वं तस्य सङ्गतं न स्यात्। जातिवचनस्याऽपि पुरुषशब्दस्य परिच्छेदकवाचित्वं 'पञ्चारत्निः पुरुषः' इति शुल्ब-सूत्रादत्र प्रमाण इति विशेषणाल्लोकव्यवहाराच्चेति बोध्यम्॥

ननु लाघवात् 'ऊधसो नङि'त्यस्य स्थाने ऊधसो न इत्थमेव सू-त्रकरणस्य समुचितत्वेऽनङ्विधानं व्यर्थमेवेति चेन्न। तस्य 'धनुष-श्चे'त्युत्तरार्थत्वेन सार्थक्यात्। अन्यथाऽच्परत्वाऽभावाद्यणोऽनाप-त्त्या शार्ङ्गधन्वेति प्रयोगो नोपपद्येतेति केचित्। केचिच्च, अनङ्वि-धानस्येहार्थमप्यावश्यकत्वमेव, अन्यथाऽस्याऽनो लाक्षणिकत्वेन (लक्षणप्रतिपदोक्त) परिभाषया तदग्रहणात् 'अल्लोपोऽनः' इत्य-स्याऽप्राप्त्या कुण्डोघ्नीति प्रयोगो न सिध्येदित्याहुस्तन्न। एतत्सूत्र-स्थभाष्यप्रामाण्यादुक्तपरिभाषाया अल्लोपोऽन इत्येतद्विषयेऽप्रवृत्तेः॥

ननु 'ऊधसोऽनङि'ति पृथक् योगं विहाय 'बहुव्रीहेरूधसो ङी-ष्' 'नश्चे'त्येवास्तु सूत्रम्, 'अनङ्चे'ति वा, समासान्तेषु 'ऊध-सो नङि' त्येवं च पठ्यतामिति चेन्न। तथा सति समासान्तकपो वैकल्पिकत्वेन तदभावपक्षे लब्धाऽवकाशस्योक्तसूत्रस्य कपा बाधा-ऽऽपत्तेः। धनुषोऽनङिति यथा न्यासे तु, अनङः समासान्तत्वेन शे-षत्वाऽभावान्न कबापत्तिरिति भावः॥

ननु 'ऊधसोऽनङ् बहुव्रीहेरूधसो ङीष्' इति सूत्रद्वये स्त्रिया-मित्यधिकाराऽभावे कुण्डमिवोधो यस्य धेनूनां समूहस्येत्यर्थके कुण्डोधो धैनुकमिति प्रयोगेऽनङ्ङीपोरापत्तिः। तदधिकारे तु स्त्री-त्वरूपाऽर्थस्य तत्राऽगम्यमानत्वेन न तयोरापत्तिरित्यभिप्रायेण प्रत्यु-दाहरति—स्त्रियां किम्। कुण्डोधो धैनुकमिति। तत्र हेतुमाह—तद्विधौ स्त्रियामित्युपसंख्यानादिति। उक्तकार्य्यद्वयविधायकशास्त्रद्वये

स्त्रियामित्यस्याधिकारात्स्त्रीत्वरूपाऽर्थे गम्यमाने सत्येव तद्विधाना- द्विति तदर्थः।

ननु 'दामहायनान्ताच्चे'ति सूत्रे 'संख्याऽव्ययादेर्ङीप्' इत्यस्मा- दव्ययग्रहणस्याऽस्वरितत्वेन भाष्यकृताऽननुवर्तितत्वादुद्दामेत्यत्रोक्त- सूत्राऽप्राप्त्या डाप्ङीप्निषेधेषु प्राप्तेषु बहुराजीवद्रूपत्रयसम्भवत्येवेत्य- त आह—अव्ययग्रहणाऽननुवृत्तेरुद्दामा वडवेत्यत्र डाब्निषेधाव- पि पक्षे स्त इति। अपिना अन उपधेति ङीपश्च संग्रहः, नचोक्त- शब्दघटकाऽनोऽनर्थकत्वेन कथमत्र उपधेत्यस्य प्राप्तिरिति वाच्यम्। (अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन तदन्तविधिं प्रयोजयन्ती)ति परिभाषयाऽन्ग्रहणेऽनर्थकस्यापि तस्य ग्रहणादिति भावः॥

ननु संज्ञाशब्दानां नियताऽऽनुपूर्वीकत्वेनाऽनादित्वाच्छन्दसि द- ष्टस्यैवाऽनुविधानात्तत्र च ङीबभावविशिष्टस्य प्रयोगासम्भवात्ताद- शप्रयोगस्य च 'अन उपधे'त्येव सिद्धौ 'नित्यं संज्ञाछन्दसोरि'- ति सूत्रं व्यर्थमिति चेन्न। केवलमामकभागधेये'त्युत्तरार्थत्वेन सार्थ- क्यात्। नचोत्तरार्थं कृतस्य नित्यं संज्ञाछन्दसोरित्यस्याऽऽरम्भसा- मर्थ्यादेव नित्यत्वलाभेऽत्रत्यनित्यग्रहणं विफलमेवेति वाच्यम्। उत्तरसूत्रे विकल्पाननुवृत्त्यर्थत्वेन साफल्यादिति भावः॥

ननु ममेयमित्यर्थेऽस्मच्छब्दात् 'युष्मदस्मदोरन्यतरस्यां खञ्चे'- त्यनेनाऽणि 'तवकममकावेकवचने' इति ममकाऽऽदेशे आद्यचो वृद्धौ मामकेत्यस्याऽणन्तत्वादेव ङीपि सिद्धे 'केवलमामकभागधेये'ति सूत्रस्थं मामकग्रहणं व्यर्थमेवेति चेन्न। अणन्तान्मामकशब्दाद्यदि ङीप् स्यात्तर्हि संज्ञाछन्दसोरेवेति नियमार्थत्वेन सार्थक्यादित्यत आह— मामकग्रहणं नियमार्थमिति। नचानेन मामकशब्दान्ङीप एव विधा- नात् (मामकनरकयोरुपसंख्यानम्) इत्यत्र मामकग्रहणं व्यर्थमिति वाच्यम्। मां मातीति मामः मामं कायतीति मामिकेत्यत्रेत्वविधा- नार्थं तद्ग्रहणस्य सार्थक्यात्। नचाऽत्रापि केवलमामकेत्यस्य प्राप्ति- रिति वाच्यम्। भागधेयशब्दसाहचर्य्येण तद्धितान्तस्यैव मामकश- ब्दस्यात्र ग्रहणात्। नियमस्य व्यावर्त्यमाह—तेन लोकेऽसंज्ञायां मामिकेति। नच मामकनरकयोरितिवार्त्तिकाऽऽरम्भसामर्थ्यान्ङी- बभावकल्पनेन कथं मामिकेत्यस्य नियमव्यावर्त्यत्वमिति वाच्यम्। उक्तवार्त्तिकस्याऽऽपरत्वाऽभावेऽपीत्वविधानेन चरितार्थत्वात्साम-

र्थ्यविरहेण ङीबभावस्य कल्पयितुमशक्यतया ङीपो दुर्वारत्वेनोक्तप्रयोगस्य नियमव्यावर्त्यत्वस्य सुलभत्वादिति भावः ॥

ननु 'तदस्यास्त्यस्मिन्निति मतुबि'ति सूत्रस्य तदिति प्रथमान्तात् षष्ठ्यर्थे सप्तम्यर्थे चाऽस्तिना सामानाधिकरण्ये सति मतुप्स्यादित्यर्थेऽस्तीत्यत्र तिङर्थकर्त्रा सह प्रथमान्तस्याऽभेदान्वयेन प्रथमान्तान्मतुप् सिद्ध्यति, तथा च, अन्तरस्त्यस्यां गर्भ इति विग्रहे मध्ये इत्यर्थकस्याऽन्तः शब्दस्याऽधिकरणशक्तिप्रधानत्वादस्तिसामानाधिकरण्याऽभावान्मतुप् न स्यात्। नचोक्तमतुब्विधायकसूत्रेऽस्तिग्रहणस्याऽस्तिसामानाधिकरण्याऽभावेनाऽस्तिशब्दान्मतुब्विधानार्थत्वादुक्तप्रयोगे मतुप् सुलभ एवेति वाच्यम्। तेन प्रथमान्तादेव मतुपो विधानात्। अत एवाऽस्तिना सामानाधिकरण्याऽभावादप्राप्तो मतुप् निपात्यते इति भाष्योक्तं सङ्गच्छते। एवञ्चोक्तरीत्या प्रकृते मतुप् नैव स्यादित्याशंकां समाधत्ते—गर्भिण्यां जीवद्भर्तृकायां च प्रकृतिभागौ निपात्येते इति। तुक्सन्नियोगेन मातुपो विधानं वत्वं तु 'मादुपधायाश्च मतोर्वोऽयवादिभ्य' इत्यनेनैव सिद्धमिति भावः ॥

ननु 'पत्युर्नो यज्ञसंयोगे' इति सूत्रे संयोगपदं सम्बन्धोपलक्षणमित्यत आह—यज्ञेन सम्बन्ध इति। क्रिया इत्यर्थः। यद्यपि पतिशब्दः पुल्लिङ्गस्तथापि स्ववाच्यकर्तृकयज्ञफलनिरूपितविलक्षणसम्बन्धो यदा स्त्रियां विवक्षितस्तदा पुंवाचकोऽपि तकारोत्तरेकारस्थानिकनकारघटितोऽयमेव पतिशब्दः सपूर्वत्वसम्बन्धेन ङीप्विशिष्टः स्वभावात्स्त्रियांप्रवर्त्तत इति तदाशयः। सम्बन्धश्च यज्ञफलप्रतियोगिकैश्वर्यवत्त्वन्तदाह—तत्कर्तृकयज्ञस्य फलभोक्त्रीति ॥

ननु 'पत्युर्नो यज्ञसंयोगे' इत्यत्राऽधिकृतस्याऽनुपसर्जनादित्यस्य पत्युरिति षष्ठ्यन्तेन सामानाऽधिकरण्याऽनुरोधात् षष्ठ्यन्तत्वकल्पनादनुपसर्जनस्य पत्युरिति तत्सम्बन्धिनोऽनुपसर्जनस्येत्यस्य 'पूतक्रतोरि'त्युत्तराऽर्थं 'विभाषा सपूर्वस्ये' त्यत्राऽनुवृत्तावपि न पत्युर्विशेषणत्वं किन्तु पतिशब्दाऽन्तस्येत्याशयेनाह—अनुपसर्जनस्येतीहोत्तरार्थमनुवृत्तमपि न पत्युर्विशेषणं किन्तु तदन्तस्येति। सपूर्वस्येत्यत्र व्याख्यानात्सहशब्दस्य विद्यमानवाचित्वं पूर्वशब्दस्य पूर्वाऽवयवपरत्वं तत्र पतिशब्दस्य विद्यमानपूर्वावयवत्वासम्भवाद्व्यभिचाराच्च सामर्थ्यात् ( ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ती )ति

प्रतिषेधं बाधित्वा पतिशब्देन तदन्तस्य ग्रहणात्केवलस्य पतिशब्दस्याऽन्नाऽभावात्सपूर्वविशेषणसङ्गात्कथमनुपसर्जनस्येति केवलपतिशब्दस्य विशेषणम्भवितुमर्हतीति भावः। अनुपसर्जनस्येत्यस्य तदन्तविशेषणत्वे फलमाह—तेन बहुव्रीहावपीति। दृढः पतिर्यस्या इति विग्रहे पत्यन्तस्याऽनुपसर्जनत्वाद्विकल्पेन नकारे दृढपत्नी दृढपतिरिति रूपद्वयसिद्धिः अनुपसर्जनस्येत्यस्य पत्युर्विशेषणत्वे तूक्तविग्रहे पतिशब्दस्योपसर्जनत्वाद्रूपद्वयं न सिद्ध्येत्। बहवो वृषलपतयो यस्या इति कर्मधारयोत्तरपदबहुव्रीहौ पतिशब्दान्तस्य वृषलपतीत्यस्योपसर्जनत्वात्तत्राऽतिप्रसङ्गवारणायेहाऽप्यनुपसर्जनपदसम्बन्ध इत्यन्ये। [1]इदमुपसर्जनस्योपलक्षणम्, अतः पतिमति कान्ताऽतिपत्नीति सिद्धमिति भावः।

ननु 'विभाषा सपूर्वस्ये'त्यत्र सहशब्दस्य विद्यमानाऽवयववाचित्वेन विद्यमानावयवपूर्वस्य पतिशब्दान्तप्रातिपदिकस्य नत्वमित्यर्थे समास एवाऽस्य प्रवृत्तिः स्याद्वाक्ये न स्यात्। नच 'पत्युर्नो यज्ञसंयोगे' इत्यनेन वृषलस्य पत्नीति वाक्येपि सुलभ एवादेश इति वाच्यम्। तत्राऽपि यज्ञसंयोगे इत्यस्य सत्त्वाद् वृषलत्वेन यज्ञसंयोगाऽभावादस्याऽप्यप्रवृत्तेरित्याशयेनाशंकते—अथ वृषलस्य पत्नीति व्यस्ते कथमिति चेदिति। समाधत्ते—पत्नीव पत्नीत्युपचारादिति। अग्निसाक्षिकपाणिग्रहणाश्रयणादित्यर्थः। यज्ञफलप्रतियोगिकैश्वर्य्यवत्त्वस्याऽऽरोपादिति केचित्। वृषलस्त्रियां बहुधर्माचरणदर्शनादियं वृषलस्य पत्नी वशिष्ठस्य वेति लोकप्रवाद इत्यन्ये। नन्वेवं यज्ञसंयोग इति व्यावर्त्याऽभावाद्व्यर्थमित्याशंक्य समाधानान्तरमाह यद्वेति। वस्तुतस्तु, आचारक्विबन्तप्रकृतिककर्तृक्विपि दृढप्रमाणाऽसत्त्वादियं प्रौढोक्तिः। पूर्वसूत्रे यज्ञसंयोगे इत्यस्य तु वृषलस्य पतिः स्त्रीत्यस्य साधनेन सार्थक्यमिति भावः॥

ननु 'विभाषा सपूर्वस्ये' त्यत्र पत्युरित्यस्य प्रातिपदिकविशेषणत्वेन 'येन विधिरि'ति तदन्तविधौ पतिशब्दान्तस्येत्यर्थे दृढपत्न्यादिसिद्धाववयववाची पूर्वशब्दः किमर्थ इत्याशयेनाऽऽशंकते—सपूर्वस्य किमिति। प्रत्युदाहरणमुखेन समाधत्ते—गवां पतिः स्त्रीति। अयम्भावः, तदभावे केवलस्यापि पतिशब्दस्य व्यपदेशिवद्भावेन

---

१ बहुव्रीहावपीतीत्यर्थः।

पतिशब्दान्तत्वादुक्तस्थलेऽतिप्रसङ्गः स्यादिति तदावश्यकं सति तु तस्मिन् गवामित्यस्य पूर्वं सत्त्वेऽपि तस्य पतिशब्दाऽन्वयत्वाऽभावान्नाऽति प्रसङ्ग इति। वस्तुतस्तु, व्यपदेशिवद्भावोऽप्रातिपदिकेनेति निषेधेन केवलपतिशब्दस्य तदन्तत्वाऽभावात्सूत्राऽप्राप्त्या दोषाऽभावात्सपूर्वस्येति व्यर्थमेवेति दिक् ॥

ननु 'वृषाकप्यग्नी'ति सूत्रे भाष्ये वृत्तौ च वृषाकप्यर्थमुदात्तग्रहणमन्यथा 'लघावन्ते द्वयोश्च बह्वषो गुरुरि'ति मध्योदात्तापत्तेरित्युक्तम्। कुशिदशब्दस्य दीर्घमध्यत्वे तु कुसिदार्थमप्युदात्तग्रहणस्य वक्तव्यत्वात्तदनुक्त्या ह्रस्वमध्यत्वमेवोक्तशब्दस्य नतु दीर्घमध्यत्वमित्यत आह—कुसिदशब्दो ह्रस्वमध्यो नतु दीर्घमध्य इति ॥

ननु 'वर्णादनुदात्ते'ति सूत्रेऽधिकृतस्याऽनुपसर्जनादित्यस्य (श्रुतानुमितयोरि)ति न्यायेन गृह्यमाणविशेषणत्वात् त्रीण्येतान्यस्या इति बहुव्रीहावेतशब्दस्याऽन्यपदार्थे विशेषणतेनोपसर्जनत्वान्ङीन्नत्वे न स्यातामित्याशंक्य समाधत्ते—त्र्येण्या च शलल्येतीति। अयम्भावः लक्ष्याऽनुरोधेनोक्तन्यायं बाधित्वोक्ताधिकारस्य तदन्तविशेषणत्वमेवोचितम्। तथाच, तत्रैतशब्दस्योपसर्जनत्वेऽपि तदन्तस्याऽनुपसर्जनत्वान्न ङीन्नत्वे किमपि प्रतिबन्धकमिति। अत एव गृह्यसूत्रवृत्तिकृता नारायणेनोक्तप्रयोगे बहुव्रीहिं कृत्वा ङीन्नत्वमित्युक्तमिति प्राञ्चः। नव्यास्तु 'उपमानानी'ति सूत्रस्थभाष्यस्वरसात् 'टिड्ढाणञि'ति सूत्रेऽनुपसर्जनादित्यस्य गृह्यमाणविशेषणत्वस्यैव क्लृप्तत्वेनेहाऽपि तस्य गृह्यमाणविशेषणत्वमेवोचितम्। अत एव कुम्भकपालं लोहितमिवेति विग्रहे कुम्भकपाललोहिनीत्यत्र लोहितशब्दस्योपसर्जनत्वाद्वर्णादनुदात्तादित्यनेनाऽनुपसर्जनलक्षण ईकारो न प्राप्नोतीत्याशंकितमुपमानानीति सूत्रे भाष्ये। एवञ्च त्रिषु स्थानेषु एनी त्र्येणीति सिद्धमित्याहुरिति दिक् ॥

ननु 'अन्यतो ङीषि'ति सूत्रेण तकारोपधभिन्नाद्वर्णवाचिनोऽनुदात्तान्तात्प्रातिपदिकान्ङीष्विधानेन पिशङ्गशब्दस्य 'लघावन्ते द्वयोश्च बह्वषो गुरुरि'त्यनेन मध्योदात्तत्वाच्छेषस्य अनुदात्तं पदमेकवर्जमित्यनेनाऽनुदात्तत्वविधानादुक्तशब्दस्यानुदात्ताऽन्तत्वात्तस्मान्ङीपि प्राप्ते ङीषर्थं वार्त्तिकमवतारयति—पिशङ्गादुपसंख्यानमिति। वर्णवाचिनः पिशङ्गशब्दान्ङीप् स्यादिति तदर्थः स च ङीप् न नित्यः किन्तु वैक-

लिपक इति पिशङ्गेतिरूपद्वयसिद्धिः । नच ङीप्विधानेनैवोपपत्तौ तं विहाय ङीप्विधाने को विशेष इति वाच्यम् । स्वरे विशेषादिति भावः ।

छन्दसि क्नमेक इति । 'वर्णादनुदात्तात्तोपधात्तो नः' इत्यनेन असितपलितयोस्तकारस्य प्राप्तं नत्वं बाधित्वा क्नमाऽऽदेशं तत्सन्नियोगेन ङीपं चेच्छन्त्येके आचार्या इत्यर्थः । अत्र छन्दसीत्युक्त्या भाषायां क्नमादेशस्य भाष्यासम्मतत्वात्तत्र गतो गणस्तूर्णमसिक्निकानामित्यादयः प्रयोगाः प्रामादिका एवेति प्राञ्चः । वस्तुतस्तु, छन्दस्येके इत्यन्वयात् छन्दस्येवैके क्नमाऽऽदेशमिच्छन्ति, अन्येतु भाषायामपीति पर्य्यवसितोऽर्थः, तथाच लोकप्रयोगे काऽप्यनुपपत्तिः । अत्रैकग्रहणमेव प्रमाणमन्यथा भाष्यकारो नैकग्रहणं कुर्य्यादित्याहुरिति भावः ॥

ननु अवपूर्वकाद्दैपशोधने इत्यस्माद्धातोः क्तप्रत्यये 'आदेच उपदेशेऽशिती'त्यात्वे निष्पन्नस्याऽवदातशब्दस्य विशुद्धवाचित्वेन वर्णवाचित्वाऽभावाद्वर्णादनुदात्तादिति ङीपोऽप्राप्त्या टावेवेत्यत आह—

अवदातशब्दस्तु न वर्णवाची किन्तु विशुद्धवाची । तेन अवदाते-त्येवेति । नच, अवदातः सितो गौरो वलक्षो धवलोऽर्जुन इत्यमरकोशेऽवदातशब्दस्य वर्णवाचित्वदर्शनात्तत्र ङीपो दुर्वारत्वेन कथमवदात इत्युक्तमिति वाच्यम् । तत्रापि विशुद्धत्वसाधर्म्यादवदातशब्दप्रवृत्तिसम्भवादिति भावः ।

लघावन्ते द्वयोश्च वह्वषो गुरुरिति । अन्ते नाम एकस्मिन् लघौ द्वयो र्लघ्वोश्च परतो बह्वषो वह्वच्कस्य गुरुरुदात्त इत्यर्थः ।

ननु पितामहीत्यादिरूपसिद्ध्यर्थं पितृव्यमातुलमातामहे'ति सूत्रस्थस्य (मातरिषिच्चे)ति वचनस्याऽऽवश्यकत्वेन तेनैव षित्वविधानात्तल्लक्षणङीषि मातामहीत्यस्याप्युपपत्तौ गौरादिषूक्तशब्दपाठो व्यर्थीभूय ज्ञापयति षिल्लक्षणो ङीषनित्य इति तेन दृश्यतेऽनेन दंष्ट्रेत्यादौ दंशेः ष्ट्रनि न षित्वप्रयुक्तङीषापत्तिः किन्तु टावेवेति भावः ।

ननु 'उत्सादिभ्योऽञ्' इत्यनेन तत्र भव इत्यर्थे जनपदशब्दादञि तल्लक्षणङीपि च कृते जानपदीत्यस्य सिद्धौ सूत्रे तद्ग्रहणमव्यर्थमिति चेन्न । ङीपा रूपोपपत्तावपि ङीप्याद्युदात्तत्वे प्राप्तेऽन्तोदात्तत्वार्थमिहाऽपि तदावश्यकत्वात् । आनपदी वृत्तिः । जनपदभवाऽनुल्लेखा जीविकेत्यर्थः ।

अमत्रे हि स्त्रीविषयत्वादिति। कमण्डलुरूपे इत्यर्थः। कुण्डी कमण्डलौ जारात्पतिवत्नी सुतः पुमानिति विश्वकोशात्कमण्डलुवाच्ये कुण्डशब्दो नित्यस्त्रीलिङ्ग इति भावः। यदि तु पिठरे तु न ना कुण्डमिति विश्वकोशे नपुंसकत्वमप्युक्तं पिठराऽमत्रशब्दौ पर्य्यायौ पिठरं स्थाल्युपा कुण्डमित्यमरे नपुंसकत्वमात्रोक्तिरेकदेशाऽनुवाद इत्युच्यते तदाऽनेकविधसंस्थानेषु अमत्रेषु कुण्डव्यवहारेण कुण्डत्वे जातित्वाऽभावादप्राप्तो ङीष् विधीयते ननु नियम्यते। एवञ्च स्त्रीविषयत्वादिति जातित्वाऽभावादित्यस्योपलक्षणं बोध्यमिति बहवः। अन्येतु कमण्डलुसंस्थानस्याऽनुगतत्वात्तद्रूपामत्रवाचिनो जातित्वस्य सत्वाज्जातेरस्त्रीत्येव ङीषः सिद्धौ सूत्रमिदं नियमार्थमेवेत्याहुः। अमृते जारजायां कुण्डेत्येव। गोणी आपवनं चेदिति। आवपने च नित्यस्त्रीत्वादप्राप्तस्य ङीषो विधानम्। आवपनमिति सामान्ये नपुंसकम्।

ननु गजवाचकनागशब्दस्य जातिवचनत्वेन 'जातेरस्त्रीविषयादयोपधादि'त्येव ङीषि सिद्धे व्यर्थमेवाऽत्र सूत्रे तद्ग्रहणमित्याशंक्य समाधत्ते—गजवाची नागशब्द इत्यादिना। कस्यांचित् स्त्रियां स्थौल्यगुणदर्शनादारोप्य तत्र नागत्वमियं नागीति प्रयुक्ते तस्यैकव्यक्तिमात्रवृत्तित्वेन जातित्वाऽभावाज्जातेरिति ङीषोऽप्राप्त्या तदर्थमिह नागग्रहणमावश्यकम्। नचाऽऽरोपितनागत्वविशिष्टस्त्रीबोधकनागशब्दस्य गौणत्वेन (गौणमुख्य) न्यायेन तस्याऽत्राग्रहणान्न ङीषः प्राप्तिरिति व्यर्थमेव तद्ग्रहणमिति वाच्यम्। मुख्यनागशब्दाज्जातेरित्येव ङीषः सिद्धावेतत्सूत्रस्थनागशब्दस्य गौणे ङीष्विधानेनैव चारितार्थ्यात्। किञ्चोक्तन्यायस्य पदकार्य्यविषयकत्वेनेहाऽप्रवृत्तेः। विधित्वाऽनुरोधादस्य सूत्रस्य गौणेऽपि प्रवृत्तेश्चेति भावः। ननु मुख्यनागशब्दाज्जातेरित्येव गौणनागशब्दाच्चैतत्सूत्रेणैव ङीषि सिद्धे सूत्रे स्थौल्यग्रहणं किमर्थमित्याशंक्य समाधत्ते—सर्पवाची नागशब्दस्त्विति। दैर्घ्यगुणविशिष्टां काञ्चित्स्त्रियमवलोक्य नागत्वं तत्राऽऽरोप्येयं स्त्री नागा सर्पिणीति प्रयुक्ते ततो ङीष्व्यावृत्तये सूत्रे स्थौल्यग्रहणमिति। एवञ्च गौणनागशब्दस्यैवैतत्सूत्रोदाहरणत्वं प्रत्युदाहरणत्वञ्चेति भावः॥

वोतो गुणवचनात्। अत्र सूत्रे गुणवचनशब्देन समस्त कृदन्त तद्धितान्त सर्वनाम जाति संख्या संज्ञाशब्दाऽतिरिक्तानां शब्दानां

ग्रहणम्। नच गुणवचनशब्देनेदृशानां ग्रहणे किम्प्रमाणमिति वाच्यम्। 'आकडारादेका संज्ञा' इत्येतत्सूत्रस्थ भाष्यस्यैव प्रमाणत्वात्। उक्तसूत्रस्थभाष्यपर्य्यालोचनेन तादृशशब्दानामेवोक्तसंज्ञालाभात्। तत्र हि प्रातिपदिकमात्रस्य गुणवचनसंज्ञाम्प्रतिपाद्याऽग्रे तद्बाधकत्वेनैताः संज्ञाः क्रमेण पठिताः। गुणवचनेत्यन्वर्थसंज्ञया गुणोपसर्जनगुणिवाचकानामेव तादृशानां गुणवचनसंज्ञेति न रूपादीनाङ्ग्रहणम्। तत्र जातिपदेनाऽऽकृतिग्रहणद्रव्यवृत्तिजातिवाचकानामेव ग्रहणादिति दिक्॥

यत्तु भाष्ये अत्र सूत्रे गुणवचनशब्देन, सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते। आधेयश्चाऽक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुण इति गृह्यते तन्न, एतद्भाष्यस्यैकदेशियुक्तित्वात्। इत्थमुक्तकारिकाव्याख्या। तथाहि, सत्त्वं द्रव्यम् तत्रैव निविशते समवैति, यो गुणो द्रव्यमात्रसमवेत इत्यर्थः। एतेन सत्ताव्यावृत्तिः। सा हि न केवलं द्रव्ये वर्त्तते किन्तु द्रव्यगुणकर्मसु। ननु द्रव्ये एव द्रव्यत्वं तत्राऽतिव्याप्तिरित्याह—अपैतीति। अपगच्छतीत्यर्थः। अर्थात्सत्त्वादेवाऽपगच्छतीति यावत्। यथा पीनतायां जातायां फलादेर्नीलताऽपैति न तथा द्रव्यत्वं द्रव्यादपैति। नन्वेवमपि गोत्वं गोषु वर्त्तते, अश्वादेश्चाऽपैति तत्राऽतिव्याप्तिरित्यत आह—पृथग्जातिषु दृश्यत इति। गोत्वं हि द्रव्यत्वाऽवान्तरनानाजातिषु न दृश्यते गुणस्तु दृश्यते। यथा, अभ्रे दृष्टा नीलता तृणादिष्वपि दृश्यते एतेन सकलजातेर्व्यवच्छेदः। एवं तर्हि कर्म द्रव्ये वर्तते ततोऽपैति पृथग्जातिषु दृश्यते चेति तत्राऽतिव्याप्तिरित्यत आह—आधेयश्चाक्रियाजश्चेति। उत्पाद्याऽनुत्पाद्य इति तदर्थः। उत्पाद्यो यथा घटादेः पाकजो रूपादिः, अनुत्पाद्यो यथा, आकाशादेर्महत्त्वादिः। क्रियातु सर्वाऽप्युत्पाद्यैव न नित्येति तस्या द्वैविध्याऽभावाद्गुणत्वाऽभावः। नन्वेवमपि द्रव्यस्य गुणत्वं प्राप्नोति, अवयविद्रव्यं ह्यवयवद्रव्ये निविशते, असमवायिकारणसंयोगनिवृत्तौ विनाशात्ततोऽपैति, भिन्नजातिषु हस्तपादादिषु च दृश्यते। द्विविधं च भवति। नित्याऽनित्यभेदेन निरवयवस्यात्मपरमाण्वादेर्नित्यत्वात्तदवयविद्रव्यस्य तु घटादेरनित्यत्वादत आह—असत्त्वप्रकृतिरिति। अद्रव्यस्वभाव इत्यर्थः॥

ननु गुणवाचिनो वा ङीषित्यर्थेनैव मृद्वी मृदुरित्यादिसिद्धौ वोतो गुणवचनादित्यनेन इतिव्यर्थमित्यभिप्रेत्य शङ्कते—उतः किमिति

समाधत्ते—शुचिरिति। शुचेरौणादिके किदिनि तत्सिद्धिः। अथ-म्भावः, सूत्रे तद्ग्रहणे शुचिरित्यादौ ङीषापत्तिः नच तत्रोत इत्य-स्यासत्वेऽन्नाद्यतष्टावित्यस्मादत इत्यस्य सम्बन्धेनोदाहरणस्यैवा-ऽसिद्ध्या प्रत्युदाहरणदानमसङ्गतमिति वाच्यम्। एवं सति खरुरि-त्यादौ ङीषोऽप्राप्त्या तद्व्यावर्त्तक (खरुसंयोगोपधान्ने)ति वार्त्ति-काऽऽरम्भसामर्थ्यादुकसूत्रादत इत्यस्याऽसंबन्धेनोदाहरणसिद्धौ वा-धकाऽभावात्प्रत्युदाहरणदानस्य सङ्गतत्वात्। नचोक्तप्रत्युदाहरणे (कृदिकारादक्तिनः) इति ङीष इष्टापत्तौ कथं तस्य प्रत्युदाहरणत्व-मिति वाच्यम्। तथासति शुक्लेत्यस्यैव प्रत्युदाहरणत्वात्। नचा-त्राऽपि (खरुसंयोगोपधादि) ति निषेधान्नोक्ताऽऽपत्तिरिति वा-च्यम्। खरुसाहचर्य्यादुकारान्तसंयोगोपधादेव तेन निषेधेन तत्रा-ऽऽपत्तेर्दुर्व्वारत्वात्। नच साहचर्य्यपरिभाषाया अनित्यत्वादुकारा-न्तसंयोगोपधादेव तेन निषेध इत्यस्य वक्तुमशक्यतया वार्तिकस्य सामान्यार्थकरणे शुक्लेत्यत्र दोषाभावाद्व्यर्थन्तद्ग्रहणमिति वाच्यम्। तथा सति पीतेत्यत्र ङीष्वारणाय तदावश्यकत्वादिति दिक्॥

अक्तिन्नर्थात्किम् अजननिरिति। ननु सर्वतोऽक्तिन्नर्थादिति गणसूत्रेऽक्तन्नर्थादिति किमर्थम्, समुदायद्वाराऽवयवे प्रश्नः, अर्था-दर्थग्रहणं किमर्थमिति प्रष्टुरभिप्रायः, नच तदभावेऽजननिरित्यत्र ङीपापत्तिरिति वाच्यम्। अक्तिन्ग्रहणसामर्थ्यादेव तत्र दोषोद्धार-सम्भवात्। नचाक्तिन्ग्रहणाऽभावे क्तिन्नन्तादपि ङीषापत्तिस्तद्व्या-वृत्त्यर्थं तस्याऽऽवश्यकत्वेन सामर्थ्यविरहात्तेन कथमुक्तस्थलीयदोषो-द्धारसम्भव इति वाच्यम्। एवं सति बह्वादिगणे पद्धतिशब्दपा-ठस्य वैयर्थ्यापत्तेः। एवञ्च व्यर्थमक्तिन्ग्रहणं ज्ञापयति इकारान्ता-यदि ङीष् स्यात्तर्हि क्तिन्नन्तभिन्नादेवेति। एतन्नियमबलादेव पद्ध-तिशब्दपाठो गणे चरितार्थः। तथाच क्तिन्नन्तभिन्नत्वेनाजननिरि-त्यत्र ङीष् स्यादित्यर्थग्रहणमावश्यकम्। सति तु तस्मिन् क्तिन्नन्त-भिन्नत्वेऽपि तदर्थक्त्रप्रत्ययान्ततया नोक्ताऽऽपत्तिलेशोऽपीति भावः॥

ननु सूत्रे ब्रह्मन्शब्दस्याऽग्रहणादानुगनुपपत्त्या ब्रह्माणीति न स्यादित्याशयेनाशङ्कते—कथं ब्रह्माणीति। उत्तरयति—ब्रह्माणमा-नयतीत्यादिना। ण्यन्तात् 'अन प्राणने' इत्यस्मात्कर्मण्यणि 'णेर-निटि' इति णिलोपे 'टिड्ढाणञि' ति ङीषि '.पूर्वपदात्संज्ञायामि' ति णत्वे च ब्रह्माणीतिरूपसिद्धिरिति भावः। नचाऽऽनुकि दीर्घो-च्चारणं ज्ञापयति क्वचिदन्यत्राऽप्यानुग्भवतीति ब्रह्माणीतिरूपसिद्धौ

मूलोक्तप्रयासो व्यर्थ इति वाच्यम्। आकारोच्चारणाऽऽभावे पररूपापत्तेर्दुर्वारत्वेन तद्व्यावृत्त्यर्थं दीर्घोच्चारणस्याऽऽवश्यकत्वात्सामर्थ्यविरहेणोक्तकल्पनाऽसम्भवेन मूलोक्तप्रयासस्य सार्थक्यात्। नन्वाकारोच्चारणसामर्थ्यान्न पररूपाऽऽपत्तिरिति वाच्यम्। 'अल्लोपोऽनः' इति लोपवारणायाऽऽकारोच्चारणस्याऽऽवश्यकत्वात्तेन पररूपबाधाऽसम्भवात्। नच (लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्) इति परिभाषया प्रकृत्यकारघटितस्याऽऽस्यानो लाक्षणिकत्वेनाऽग्रहणान्न लोपप्राप्तिरिति वाच्यम्। 'बहुव्रीहेरूधसो ङीष्' इत्येतत्सूत्रस्थभाष्यादल्लोपोऽन इत्येतद्विषये प्रतिपदोक्तपरिभाषाया अप्रवृत्तेः। नच नकारमात्रविधानेनैवोपपत्तावागमलिङ्गककारोच्चारणसामर्थ्यादेव लोपो नेति वाच्यम्। 'न संयोगाद्वमन्तात्' इति निषेधेन लोपाऽप्राप्त्या सर्वाणीत्यत्र ककारोच्चारणस्य चरितार्थत्वात्। एवञ्च लोपव्यावृत्त्यर्थमकारोच्चारणस्याऽऽवश्यकत्वात्तत्सामर्थ्यात्पररूपबाधनाऽसम्भवेन तद्वारणाय दीर्घोच्चारणस्य सत्त्वात्तेनोक्तकल्पनायाः कर्तुमशक्यत्वादुक्तप्रयोगाऽनुपपत्त्या युक्त एव मूलोक्तप्रयास इति दिक्॥

ननु (गतिकारकोपपदानां कृद्भिः सह समासवचनम्) इति परिभाषासत्त्वात्सुबुत्पत्तेः प्रागेव समासे तदानीमदन्तत्वेन 'क्रीतात्करणपूर्वादि'त्यनेन ङीष् न स्यादित्याशंक्य समाधत्ते—क्वचिन्न, धनक्रीतेति। 'कर्तृकरणे कृता बहुलमि'त्येतत्सूत्रस्थबहुलग्रहणेनोक्तपरिभाषाऽनित्यत्वज्ञापनात्क्वचित्सुबुत्पत्त्यनन्तरमपि समास इत्यन्तरङ्गत्वात्समासात्प्रागेव टापि ततः समासे करणपूर्वत्वेऽप्यदन्तत्वाऽभावान्नोक्ताऽऽपत्तिरिति समाधातुराशयः। अन्येतु, उक्तपरिभाषाऽनित्यत्वस्य कर्तृकरण इति सूत्रे भाष्ये बहुलग्रहणफलत्वेनाऽनुक्तत्वात् हृदिस्थ इत्यादौ षत्वाऽभावाय 'अम्बाम्बे'ति सूत्रे गवादिग्रहणस्यापि नियमार्थमावश्यकत्वादुक्तपरिभाषाऽनित्यत्वाऽभावादुक्तप्रयोगोपपत्तये सत्यभिधानेऽजादित्वाट्टाबिति वदन्तीत्यलम्॥

अस्वाङ्गपूर्वपदाद्वा। न स्वाङ्गमस्वाङ्गं पूर्वञ्च तत्पदं पूर्वपदं अस्वाङ्गञ्च तत्पूर्वपदञ्च, अस्वाङ्गपूर्वपदं तस्मादस्वाङ्गपूर्वपदादितिकर्मधारयः अस्वाङ्गभूतात्पूर्वपदात्परं यत् कान्तं तदन्तबहुव्रीहे र्वा ङीषिति तदर्थः। नन्वत्र कर्मधारयाऽऽश्रयणे किम्प्रमाणमिति चेन्न। उत्तरसूत्रस्थभाष्यस्यैव प्रमाणत्वात्। तथाहि, उत्तरसूत्रे भाष्ये कल्याणपाणिपादेत्यादौ ङीषवारणाय 'अस्वाङ्गपूर्वपदा'दित्यनुवर्त्य कर्मधा-

स्याऽऽश्रयणादिहाऽपि तथैवोचितम्। कल्याणपाणिपादेत्यादौ यद्
उपसर्जनं पाणिपादेति समुदायो नाऽसौ स्वाङ्गं, स्वाङ्गसमुदायस्य
स्वाङ्गशब्देनाऽग्रहणात् यच्च स्वाङ्गं पादेति न तदस्वाङ्गपूर्वपदात्पर-
मिति न तत्र ङीषित्युक्तम्। नचाऽस्वाङ्गपूर्वपदादित्यत्र कर्मधारया-
ऽऽश्रयणेऽस्वाङ्गादित्येव सिद्धेऽत्र सूत्रे पूर्वपदादिति व्यर्थमेवेति वा-
च्यम्। उत्तरसूत्रेऽनुवृत्त्यर्थत्वेन सार्थक्यात्। उत्तरसूत्रे तादृशाऽर्था-
ऽऽश्रयणेन करमुखीत्यादयः प्रयोगा असाधव एवेति। अस्वाङ्गपूर्व-
पदेत्यत्रापि जातिपूर्वपदादित्यस्य सम्बन्धः। अन्यथा बहुनत्रादी-
नामस्वाङ्गत्वेन तत्पूर्वके विकल्पस्य दुर्वारत्वात्। तत्सम्बन्धे सत्येव
समाननिमित्तकत्वलाभेन नित्यशास्त्रबाधकत्वमिति भावः।

उपसर्जनात्किम्। शिखेति। अयम्भावः 'स्वाङ्गाच्चे'ति सूत्रे
उपसर्जनग्रहणाऽभावेऽनुपसर्जनाऽधिकारेणाऽनुपसर्जनादपि ङीषा-
पत्त्या शिखेति न स्यादित्यावश्यकन्तत् सति तस्मिन् तस्योपसर्जन-
त्वाऽभावान्न तदापत्तिः। नच कल्याणपाणिपादेत्यादौ ङीषवारणाय,
'अस्वाङ्गपूर्वपदाद्वे'त्यनुवर्त्तनात्पर्युदासाऽऽश्रयणेन स्वाङ्गभिन्नपूर्व-
पदात्स्वाङ्गान्ङीषित्यर्थे शिखेत्यादौ पूर्वपदत्वाऽभावान्ङीषोऽप्राप्त्या
कथमिदं प्रत्युदाहरणमिति वाच्यम्। एवं सति शोभना शिखा
सुशिखेत्यस्यैव प्रत्युदाहरणत्वात्। यत्तु उपसर्जनादित्यस्याऽभावेऽ-
नुपसर्जनाऽधिकारात्सूत्रस्यैव वैयर्थ्यमित्याहुः केचित्तन्न "बहुव्रीहे-
श्चान्तोदात्तादि"त्यत्र बहुव्रीहिग्रहणसामर्थ्यादनुपसर्जनाधिकारानु-
वृत्तेः। नागेशादयस्तु शिखेत्येव प्रत्युदाहरणं शोभनेत्यादि सुशिखा-
न्तं प्रक्षिप्तः पाठः विशिष्टेऽतदन्तत्वेन सूत्राऽप्राप्तेः। यत्तु भाष्येऽशि-
खेत्येव प्रत्युदाहरणं तस्याऽप्येकदेश एव तात्पर्यमित्याहुः। नच
(उपसंजनिष्यमाणनिमित्तोऽप्यपवाद उपसंजातनिमित्तमप्युत्सर्गं
बाधते) इति परिभाषया प्राग्टापोऽप्राप्त्या युक्तमेव सुशिखेत्यादि-
प्रत्युदाहरणमिति वाच्यम्। अपवादशास्त्रप्रवृत्तिमन्तरा यत्रोत्सर्ग-
शास्त्रस्य न प्रवृत्तिस्तत्रैव तत्प्रवृत्तेः। यथा दधतीत्यादौ नाऽत्र तथा,
अपवादशास्त्रप्रवृत्तिमन्तराऽपि टापः प्रवृत्तेरित्यलम्॥

ननु 'स्वाङ्गाच्चे'ति सूत्रे स्वाङ्गशब्देन स्वमङ्गं स्वाङ्गमिति विव-
क्षिते सुमुखा शालेत्यत्राऽपि ङीषापत्तिः स्यान्मुखस्य शालाङ्गत्वात्,
सुकेशीरथ्येत्यत्र च न स्यात्केशानां रथ्याऽङ्गत्वाऽभावादित्याह—
स्वाङ्गं त्रिधेति। क्रमेणोदाहरति—अद्रवमिति। अद्रवत्वे सति
मूर्त्तिमत्त्वमिति तल्लक्षणं पर्य्यवसितम् एवञ्च सुस्वेदेत्यादौ मूर्त्ति-

स्त्वेऽपि लक्षणघटकाद्रवत्वरूपविशेषणविशिष्टतया स्वाङ्गत्वाऽभावात्सूत्राऽप्राप्त्या न ङीष्। सुज्ञानेत्यादावद्रवत्वेऽपि मूर्त्तिमत्त्वाऽभावान्न ङीष्। ननु सुमुखा शालेत्यत्र ङीष् स्यादित्याह—प्राणिस्थमविकारजमिति। प्राणिस्थत्वे सति विकारजभिन्नत्वमिति लक्षणं बोध्यम्। एवञ्चोक्तप्रयोगे मुखस्य विकारजभिन्नत्वेपि प्राणिस्थत्वाभावात् सुशोफेत्यादौ प्राणिस्थत्वेऽपि विकारजाऽन्यत्वाऽभावान्न ङीष्। ननु सुकेशी रथ्येत्यत्र केशस्येदानीं प्राणिस्थत्वाऽभावात्पूर्वलक्षणेन सिद्धिर्न स्यादित्याह—अतत्स्थं तत्र दृष्टञ्चेति। सम्प्रति प्राणिस्थत्वाऽभावेऽपि प्राणिनि दृष्टं यत्तदपि स्वाङ्गमिति तदर्थः। एवञ्च केशस्य सम्प्रति प्राणिस्थत्वाऽभावेऽपि प्राणिनि दृष्टत्वात्तत्र ङीष्सिद्धिः। ननु प्रतिमादिगतस्तनस्य प्राणिनि कदाऽप्यदृष्टत्वात्सुस्तनी प्रतिमेत्यत्र ङीष् न स्यादित्याह—तेन चेत्तत्तथा युतमिति। अप्राणिनोऽपि यदि स्वाङ्गं तेन तज्जातीयेन वस्तुना प्राणी यथा सम्बद्धस्तस्तथाऽप्राणी सम्बद्धश्चेत्तदपि स्वाङ्गमिति तदर्थः। एवञ्चोक्तप्रयोगे न काऽप्यनुपपत्तिरिति दिक्।

ननु 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधादि'त्यनेनैव विकल्पङीष्विधानात् तुङ्गनासिकी, तुङ्गनासिकेतिरूपद्वयोपपत्तौ 'नासिकोदरौष्ठजङ्घादन्तकर्णशृंगाच्चे'त्यत्र नासिकोदरग्रहणस्यार्थमित्यत आह—आद्ययोर्बह्वज्लक्षणो निषेधो बाध्यते। पुरस्तादपवादन्यायादिति। अयम्भावः, नासिकोदरग्रहणाऽभावे नोक्तद्विविधरूपोपपत्तिः, पूर्वसूत्रप्राप्तस्य ङीषो 'न क्रोडादिबह्वचः' इत्यनेन निषेधात्। नासिकोदरग्रहणे कृते तु सामर्थ्यादुक्तनिषेधस्य प्रतिषेधेन रूपद्वयोपपत्तिः सुलभैवेति नच नासिकोदरग्रहणसामर्थ्याद्बह्वज्लक्षणनिषेधप्रतिषेधवत् सहनञित्यस्यापि प्रतिषेधेन सहनासिकेत्यादिप्रयोगो न स्यादिति वाच्यम्। (पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरान्) इति परिभाषया बह्वज्लक्षणनिषेधस्यैव प्रतिषेधेन सहनञित्यस्याऽप्रतिषेधात्। पूर्वोपस्थितबाधेन चारितार्थ्ये पश्चादुपस्थितबाधे मानाऽभावः, आकांक्षाऽभावश्चत्येतस्योक्तपरिभाषायां बीजत्वादिति दिक्।

ननु ओष्ठाद्यंशे ङीष्निषेधत्वावच्छिन्नबाधकत्वे सहनञित्यस्याऽपि बाधः स्यादित्याशङ्कां समाधत्ते—ओष्ठादीनाम्पश्चानामसंयोगोपधादित्यादिना। अयम्भावः, (मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरान्) इति न्यायेनोष्ठादिपञ्चानामसंयोगोपधादिति ङीष्निषेधस्यैव बाधकत्वम् न तु सहनञित्यस्यापीत्यलम्॥

निपातानामनेकार्थत्वादाद्यर्थः—इति शब्दः प्रकार इति । अद्भ्रभावः, इतिशब्दस्य प्रकारार्थकत्वे सूत्रे भाषायामितिनाऽऽवश्यकम् । नच भाषायामित्यस्याऽग्रहणे छन्दस्यपि ङीष् स्यादिति वाच्यम् । 'दिक्पूर्वपदान्ङीप्' इत्यत्राऽस्वरितत्वाच्छन्दसीत्यस्याऽसम्बन्धेनेहापि तदसम्बन्धसिद्धेरिति भावः ।

नव्यास्तु 'दिक्पूर्वपदान्ङीप्' 'वाहः', इतिसूत्रद्वये छन्दसीत्यनुवर्तत एव लोके त्वन्तोदात्तमेव, एवञ्च सख्यशिश्वीति सूत्रे छन्दसीत्यस्य निवृत्त्यर्थं भाषाग्रहणमावश्यकम् । इति छन्दस्याऽर्थे तेन छन्दस्यपीत्याहुः कश्चिदिति । 'छन्दसि सर्वेविधीनां वैकल्पिकत्वेन सख्या सप्तपदी भवेति सिद्धं किन्त्वाद्युदात्तत्वन्तु छान्दसत्वादिति भावः ॥

ननु अभिन्नमभिन्नाऽभिधानप्रत्ययनिमित्तं जातिः, नित्यमेकमनेकाऽनुगतं सामान्यमिति च शुक्लादिगुणेष्वेकत्वनित्यत्वपक्षे तत्राऽतिव्याप्तं, तदनेन प्राप्यते या जातिरिति तल्लक्षणमाह—आकृतिग्रहणा जातिरिति । आकृतिरवयवसन्निवेशविशेषः गृह्यतेऽनेनेति ग्रहणं करणे ल्युट् सामान्ये नपुंसकम् । आकृतिर्ग्रहणं यस्याः सा आकृतिग्रहणा आकृतिज्ञानज्ञाप्यज्ञानविषया जातिरित्यर्थः । एकत्र गां दृष्ट्वा तदवयवसन्निवेशविशेषदर्शनेनाऽन्यस्यामपि व्यक्तावियं गौरिति बुद्धेः सुलभत्वाद्गोत्वं जातिः । तदाह—अनुगतसंस्थानव्यङ्ग्येति । न च बालाद्यवस्थाभेदभिन्नानेकदेहवृत्ति देवदत्तत्वादेराकृतिव्यङ्ग्यत्वेन तत्र जातित्वमतिव्याप्तमिति वाच्यम् समानकालिकाऽनेकव्यक्तिवृत्त्यनुगतसंस्थानव्यङ्ग्येति तदर्थकरणेनाऽदोषात् । अवस्थाभेदेऽपि तद्भेदाऽप्रतीतेश्च स एवायमिति प्रतीतेश्च तज्जातीयोऽयमित्यप्रतीतेश्च । अत एवेन्द्रत्वादिकं न जातिः । न च पञ्चेन्द्रोपाख्यानादेः पुराणादौ दर्शनात् इन्द्रत्वादेर्जातित्वे को बाध इति वाच्यम् । अनेकेषां पञ्चेन्द्रोपाख्यानादिभिः समकालिकत्वेऽपि सर्वेषां संस्थानस्यैकत्वे मानाऽभावात् । न च दुर्गा अपर्णेत्यादौ ङीष् कुतो नेति वाच्यम् । स्त्रीविषयत्वादपि ङीषोऽप्रवृत्तेः । एवं जलसमीपस्थलविशेषदर्शनेन ज्ञातत्वात्तटत्वमपि जातिः । नन्वेवं वृषलत्वादीनां जातित्वं न स्यात् । वृषलादेरनवयवसंस्थानस्य ब्राह्मणादेरविशिष्टत्वेन तस्या आकृतिग्रहणत्वाऽभावात् किन्तु साक्षादुपदेशगम्या संस्थत आह—लिङ्गानां च न सर्वभाक् ।

द्राख्यातनिर्ग्राह्येति । लिङ्गानामिति कर्मणि षष्ठी या सर्वाणि ङ्गानि न भजति साऽपि जातिरिति प्रथमदलस्यार्थः । न च सर्व- द्स्य लिङ्गाऽपेक्षत्वेनाऽसामर्थ्यात्कथं णिवसमासावितिवाच्यम् । ऽस्यप्रामाण्यात् । आख्यातमाख्यानमुपदेशः । सकृदाख्यातेन निर्ग्रा- ह्या ज्ञानगोचरीभूता जातिरिति द्वितीयदलस्याऽर्थः । एतेन मूलोक्त- ं समायातं विद्धि, तच्च असर्वलिङ्गत्वे सत्येकस्यां ,व्यक्तावित्यादि यं वृषल इत्युपदिष्टे तत्पित्रादौ पुत्रादौ च कथनं विनैव वृषलत्व- पद्यते । नन्वेताभ्यामध्यौपगवीकठीत्यादेरसंग्रहोऽनुगतसं- ङ्ग्रत्वाऽभावात्सर्वलिङ्गत्वाच्चेत्यत आह—गोत्रञ्च चरणैः ...ध्ययान्तः, चकारात् शाखाऽध्येतृवाची च शब्दो ... । जातिकार्य्येश्च ङीषपुंवत्वादि । ...

... अन किम्फलमिति वाच्यम् । 'नोङ्धात्वोरि'ति विभक्त्युदात्तत्व- षेधस्यैव तत्फलत्वात् । न च प्रथमान्तद्वितीयान्तोदाहरणं वि- तृतीयान्तोदाहरणप्रदर्शनमसङ्गतमिति वाच्यम् । तत्रोक्तप्रयो- स्याऽसम्भवात् । ऊङ्धात्वोर्यणः परे शसादय उदात्ता न स्यु- । तदर्थः । ऊङि ङकारोच्चारणस्येदमेव प्रयोजनम् । अन्यथा यवाग्वेत्यादावपि निषेधाऽऽपत्तिःस्यात् । न च रूपाणां सवर्णदीर्घे- णैव सिद्धावूङि दीर्घोच्चारणस्यव्यर्थमिति वाच्यम् । दीर्घोच्चारणस्य प्रश्लेषेणोकारद्वयविधानद्वारा ब्रह्मबन्धूरित्यादिबहुव्रीहौ परकप्निवृ- त्त्यर्थत्वेन सार्थक्यात् । न च श्वश्रूरित्येतत्सिद्ध्यर्थं दीर्घोच्चारणस्या- ऽऽवश्यकत्वात्कथं तद्वैयर्थ्यमाशंकितमिति वाच्यम् । उक्तरूपस्य श्वसुरः श्वश्र्वेतिनिर्देशादेव सिद्धेरिति भावः ॥

उपचारादिति । सफशब्दप्रवृत्तिनिमित्तस्योरुपदार्थे आरो- पादित्यर्थः । एवञ्च समासस्योपमानोपमेयाभावाऽवोधकत्वान्न पूर्वसूत्रप्राप्तिः । शफशब्दप्रवृत्तिनिमित्ताऽऽरोपेत्रोपमानोपमेयभावो निमित्तमित्यन्यदिति भावः ॥

ननु सर्वस्योरुमत्त्वेन तत्समभिव्याहारे सहशब्दप्रयोगस्य व्यर्थ- त्वात्सहोरूरिति प्रयोगस्यैवाऽभावात् ( सहितसहाभ्यां चे)तिवा र्त्तिके सहशब्दग्रहणं व्यर्थमित्यत आह—सहेते इति रतिश्रममिति

शेषः । सहौ विद्यमानावूरू यस्या इत्यर्थः इति कैयटः । याविति तदभिप्रायः । कमलानि कमलानीतिवदित्यलम् ॥

ननु छन्दसि संज्ञायामसंज्ञायां च 'कद्रूकमण्डल्वोश्छ नेनैवोङः सिद्धौ 'संज्ञायामि' दं सूत्रं किमर्थमित्यत आह न्दोऽर्थं वचनमिति । लोके नागमातुः संज्ञायां कद्रूरिति वचनमिदमिति भावः ॥

त्राऽपि ति प्रत्ययो दुर्वार इत्याशंक्याह—अनुपसर्जनादित्येवेति । अयम्भावः, उक्तसूत्रेऽनुपसर्जनादेव युवन्शब्दात्तिप्रत्ययविधानेनोक्त-प्रयोगघटकयुवन्शब्दस्य बहवो युवानो यस्यामिति बहुव्रीहावन्यप-दार्थे विशेषणत्वेनोपसर्जनत्वान्न तस्मात्तिप्रत्ययः किन्तु 'ऋन्नेभ्यो ङीप्' इत्यनेन प्राप्तस्य नान्तलक्षणङीपः 'अनो बहुव्रीहेः' इति निषेधे डाबेवेति । ननु 'युवतीकरनिर्मितं' दधीति प्रयोगोऽनुपपन्न इत्यत आह—यौतेः शत्रन्तान्ङीपि बोध्यमिति दिक् ॥ इति स्त्रीप्रत्ययप्रकर-णम् ॥ इति शुभम् ॥

इति ठक्कुरोपनामकश्रीकनकलालशर्म्मणः कृतौ फक्किकारत्न-मञ्जूषायां स्त्रीप्रत्ययान्तः प्रथमखण्डः समाप्तः ॥

S'RĪ HARIKRIṢṆA NIBANDHA MAṆI MĀLĀ

NO. 6.

THE

# PHAKKIKĀRATNA MANJŪS'Ā

( COMMENTARY ON THE PANKTĪ OF SĪDDHĀNTA KAUMŪDĪ )

By

VYĀKARANA KĀVYATĪRTHA

MAITHIL PANDIT S'RI KANAKALAL S'ARMA

( Part II )

PUBLISHED BY

S'ri Hari Krishna Nibandha Bhawan

BENARES.

1936.

## शास्त्रार्थ के लिये अपूर्व ग्रन्थ—

# कौमुदीकल्पलतिका

रचयिता—

परिष्कारदर्पण इत्यादि अनेक ग्रन्थों के निर्माणकर्त्ताऽशुकवि

वैयाकरणशिरोमणि प्रसिद्धशास्त्रार्थी जौनपुर बदलापुरनिवासी—

शुक्ल श्रीवेणीमाधवशास्त्री जी ।

---

आदरणीय विद्वज्जन एवं विद्यार्थिगण ?

आप महानुभावों की सेवा में यह सूचित करते हुए बड़ा ही हर्ष हो रहा है कि आज तक पाणिनीयव्याकरण के पठन पाठन में अप्रसिद्ध तथा अप्रचलित एवं अकल्पित जितनी कोटियां थीं वह सब प्रकाशित हो गईं । विशेषतः सिद्धान्तकौमुदी के प्रतीकों पर विचित्र कल्पनायें, पंक्तियों के विशिष्टव्याख्यानपूर्वक अपूर्वखण्डन, नये २ अद्भुत सूत्रों के न्यास, सूत्रों के विलक्षण तथा अतिसुगमरीति के शाब्दबोधप्रकारों ने इस ग्रन्थ की शोभा को क्या ही मनोहर किया है जो देखने से ही विदित हो सकती है । और भी विशेष बात तो यह है कि ग्रन्थकार के पुत्र श्री राजनारायणशुक्ल शास्त्री जी ने इस ग्रन्थ की टिप्पणी में मूलक्षेप प्रक्रिया परिष्कार आदि का यथोचित लेख करते हुये छात्रों को परीक्षा में उत्तीर्ण होने के लिये अतिसरल तथा संक्षिप्तपङ्क्तियों का व्याख्यान भी किया है । इस ग्रन्थ से यह आशा पाई जाती है कि इस के द्वारा सँस्कृतसाहित्य का जितना बड़ा उपकार हुआ वैसा अन्य प्रकाशित पुस्तकों से नहीं । केवल इसी एक ग्रन्थ के पास में रखने से सिद्धान्तकौमुदी के ऊपर अब तक छपे हुये फक्किकादि-ग्रन्थों की आवश्यकता ही न पड़ेगी । इस रीति से इतना उत्तम होते हुये भी स्वरवैदिकप्रकरणान्त इस ग्रन्थ का मूल्य केवल १॥) रक्खा गया है । आशा है कि संस्कृतानुरागी सज्जन इस ग्रन्थ से अतिशीघ्र लाभ उठावेंगे । अन्यथा सम्भवतः द्वितीयसँस्करण की प्रतीक्षा करनी पड़ेगी ।

---

श्रीहरिकृष्णनिबन्धमणिमालायाः

षष्ठो (६) मणिः ।

# फक्किकारत्नमञ्जूषा

## सिद्धान्तकौमुदीस्थपङ्क्तिव्याख्यानरूपा ।

मुद्गलपुर ( मुङ्गेर ) मण्डलान्तर्गत महमदाग्रामवास्तव्येन गणपति-
ठक्कुरात्मजैकनाथठक्कुरात्मजेन व्याकरणकाव्यतीर्थेन ठक्कुरोपनामक
पण्डितश्रीकनकलालशर्मणा मैथिलेन रचिता ।

( कारकादिकृदन्तान्तो द्वितीयो भागः । )

प्रकाशकः—

श्रीहरिकृष्णनिबन्धभवनम्,

बनारस सिटी ।

१९०.३

# परिष्कारदर्पण

## ( परिष्कारों का विचित्रग्रन्थ शास्त्रार्थकलासहित )

" आप महानुभावों की सेवा में निवेदन करते हुए अत्यन्त हर्ष होता है कि जिस परिष्कारदर्पणनामक ग्रन्थ के लिये विद्वज्जन बहुत दिनों से आकाङ्क्षित थे वह प्रकाशित हो गया। इस ग्रन्थ में ३ प्रकरण हैं। जिसमें प्रथम प्रकरण पारिभाषिक ( अवच्छेदकत्त्व अवच्छेद्यत्त्व निरूपितत्त्व निरूपकत्त्व सम्बन्धावच्छिन्नत्त्व आदि ) शब्दों के लक्षण उदाहरण समन्वय दोषादिवारणपूर्वक दिखाये हैं। द्वितीयप्रकरण व्याकरण के परिष्कारों तथा पाणिनीय सूत्रों के शाब्दबोधों का है उसमें शेखरादि सहायक प्रायः सभी स्थलों का परिष्कारविवरण परीक्षोपयोगी तथा अध्ययनाध्यापनादि का महोपकारक है। इस ग्रन्थ के बनानेवाले जौनपुर बदलापुर निवासी घटिकाशतकशतावधानाशुकविकौमुदीकल्पलतिकाद्यनेकग्रन्थकार वैयाकरण-शिरोमणि प्रसिद्ध शास्त्रार्थी पण्डितप्रवर शुक्लश्रीवेणीमाधवशास्त्री जी हैं। शास्त्री जी का अतुलनीय श्रम तथा इनकी विचित्र परिष्कारशैली एवं कल्पनायें ग्रन्थ के देखने से ही आप को अनुभूत होंगी। ग्रन्थकार के पुत्र श्रीराजनारायणशुक्लशास्त्री जी ने इस ग्रन्थ की भी टिप्पणी वैसी ही विचित्र की है जैसी आप लोग कौमुदीकल्पलतिका में देख चुके होंगे। इस ग्रन्थ को पास में रखने से पूर्ण विश्वास है कि परिष्कारों का बनाना समझना तथा उनके द्वारा परीक्षा में उत्तीर्ण होना अतीव सरल है। शास्त्री—आचार्य परीक्षाओं का अत्यन्त उपकारक है। तृतीयप्रकरण इस ग्रन्थ का शास्त्रार्थकला नाम से है। जिसमें परिभाषेन्दुशेखर की परीक्षोपयोगिपरिभाषाओं का ज्ञापक परिष्कारादि दिखलाते हुये अन्त में विचित्र कल्पनाओं द्वारा शेखर ही का खण्डन कर दिया गया है। उपरोक्तविषयों से यह ग्रन्थ अत्यन्त उपादेय हो गया है। इतना होते हुये भी इसका मूल्य स्वल्प ही १=) अट्ठारह आना मात्र रक्खा है। अधिक क्या प्रशंसा करें यदि इसके लिये अतिशीघ्र आर्डर न दिये तो इसके आधुनिकलक्षणों से प्रतीत होता है कि द्वितीयसंस्करण की प्रतीक्षा करनी पड़ेगी।

---

# फक्किकारत्नमञ्जूषाया द्वितीयभागस्य
# विषयानुक्रमणिका ।

इति विषयानुक्रमणिका समाप्ता ।

# फक्किकारत्नमञ्जूषा ।

श्रीशैलराजतनयैकरदाङ्किताङ्गं मन्दाकिनीछुतरलीकृतसज्जटालिम् ।
बालेन्दुरश्मिपरिशोभितभालदेशं श्रीविश्वनाथमनिशं समुपास्महे तम् ॥१॥
कारुण्यपूर्णहृदयां विधुखण्डभूषां देवीं सुरासुरसमर्चितपादपद्माम् ।
सृष्ट्युद्भवस्थितिलयैकनिदानभूतां दुर्गां श्रिया विलसितां जननीं नमामः ॥२॥
प्रणम्य गुरुपादाब्जं निधाय हृदये च तत् ।
फक्किकारत्नमञ्जूषाऽपरो भागो वितन्यते ॥ ३ ॥

## अथ कारकप्रकरणम् ।

"स्वौजसमौडि"ति सूत्रेण विहितानां सुपामर्थविशेषे व्यवस्थाम्प्रदर्शयितुमाह–प्रातिपदिकार्थेति । (१)अस्यापि सूत्रस्य क्रियायोग एव प्रवृत्तिः । (२)अत एव ( तिङ्समानाधिकरणे प्रथमे ) ति वार्त्तिकं सङ्गच्छते । (३)नचैवं भूतले घट इत्यादौ प्रथमा न स्यात्क्रियायोगाऽभावादिति वाच्यम् । तत्राऽप्यन्ततोऽस्तिक्रियायाः सत्त्वात् । यत्र काचन क्रिया नास्ति; तत्राऽप्यस्तिभवतिविद्यतीनां सत्तेति भाष्योक्तेः । नच त्रयः काला इत्यादौ कस्या अपि क्रियाया असत्त्वादध्याहर्त्तुमशक्यत्वाच्च प्रथमा न स्यात् । न च सन्तीति क्रियामादाय तत्सिद्धिरिति वाच्यम् । कालत्रये वर्त्तमानत्वस्य बाधेनोक्तक्रियाऽध्याहारस्याऽसम्भवादिति वाच्यम् । वर्त्तमानकालवृत्तित्वविशिष्टज्ञाने कालत्रयविषयकत्वस्याऽक्षतत्वेन ज्ञायन्ते इति क्रियाऽध्याहारसम्भवात् । यद्वा, सन्तीत्येवाऽध्याहार्य्यः, प्रारब्धाऽपरिसमाप्तिक्रियाऽऽश्रयत्वस्य वर्त्तमानत्वेन कालत्रयस्य सृष्टिप्रारब्धापरिसमाप्तिक्रियाऽऽश्रयत्वरूपवर्त्तमानकालिकसत्तात्वविशिष्टत्वे बाधकाऽभावात् । आख्यातार्थकर्त्रादिनाऽभेदान्वयेन प्रथमान्तार्थस्य क्रियायोगो बोध्यः । एवञ्च प्रथमान्तार्थस्याऽपि क्रियाजनकत्वात् (४)अस्याः (५)कारकविभक्तित्वेन भाष्ये व्यवहारः ॥

---

( १ ) प्रथमाया न कारकविभक्तित्वमिति वादिमतं दूषयितुमाह—अस्यापीति ।

( २ ) एतत्सूत्रस्यापि क्रियायोग एव प्रवृत्तेरेवेत्यर्थः ।

( ३ ) एतत्सूत्रस्य क्रियायोग एव प्रवृत्तावित्यर्थः ।

( ४ ) प्रथमाया इत्यर्थः ।

( ५ ) कारकत्वञ्च, क्रियानिष्ठविशेष्यतानिरूपितप्रकारतासमानाधिकरणविशेष्यतानिरूपिता ऽभेदसम्बन्धावच्छिन्नप्रकारताश्रयत्वम् । तादृशप्रकारताप्रयोजकपदोत्तरत्वं कारकविभक्तित्वम् । एवञ्च देवदत्तो गच्छतीत्यादौ देवदत्तस्य कारकत्वं तदुत्तरविभक्तेश्च कारकविभक्तित्व मुपपन्नम्, तथा हि गमनक्रियानिष्ठविशेष्यतानिरूपिता या प्रकारतासमानाधिकरणा विशेष्यता सा च तिङर्थकर्तृनिष्ठा तादृशविशेष्यतानिरूपिताऽभेदसम्बन्धावच्छिन्नप्रकारता देवदत्तनिष्ठा तदाश्रयः स एवेति तस्य तत्त्वमुपपन्नम् । उक्तसम्बन्धावच्छिन्नप्रकारताप्रयोजको देवदत्तस्त दुत्तरत्वं प्रथमाया इति तस्या अपि तत्त्वमुपपन्नमिति भावः ।

ननु (१)स्वार्थद्रव्यलिङ्गसंख्याकारकेतिपञ्चविधः प्रातिपदिकार्थ इति पक्षे स्वार्थद्रव्यलिङ्गेतित्रिविधप्रातिपदिकार्थपक्षे च कृष्णादिशब्दे लिङ्गस्यापि प्रातिपदिकार्थत्वाल्लिङ्गग्रहणं व्यर्थमित्यत आह-नियतोपस्थितिकः प्रातिपदिकार्थ इति । निपूर्वकयमधातोर्व्यापकत्वमर्थः । तथा च नियता व्यापिका उपस्थितिर्यस्य स नियतोपस्थितिकः, यस्मिन्प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स प्रातिपदिकार्थः । अर्थात् (२)नियतोपस्थितिकप्रातिपदिकार्थः । नियमेनेत्यस्य व्यापकत्वेनेत्यर्थः । तत्त्वञ्च तत्समानाधिकरणाऽत्यन्ताऽभावीयप्रतियोगिताऽनवच्छेदकधर्मवत्त्वम् । स्वविषयकश्रावणप्रत्यक्षसमवायित्व-स्वविषयकशक्तिज्ञानसमवायित्वरूपोऽधिकरणतानियामकः सम्बन्धो बोध्यः । (३)एवञ्चानियतलिङ्गकेभ्यस्तटादिशब्देभ्यो लिङ्गस्यानियतोपस्थितिकत्वाऽभावेन प्रातिपदिकार्थपदेनाऽग्रहणान्न ततः प्रथमोत्पत्तिरिति तदर्थमावश्यकं लिङ्गग्रहणमिति । तटः, तटी, तटमित्यादौ तटादिशब्दानां पुंस्त्व-स्त्रीत्व-क्लीबत्वबोधकतत्तत्प्रत्ययसमभिव्याहारात्सकललिङ्गबोधकत्वे ततः कस्यापि लिङ्गस्य नियतोपस्थितिकत्वाऽभावात्तद्बोध्यलिङ्गस्य प्रातिपदिकार्थपदेनाऽग्रहणात्प्रथमाऽनुत्पत्त्या तदर्थं लिङ्गग्रहणस्याऽऽवश्यकत्वमिति भावः । नच नीलरूपवत्परकस्य कृष्णशब्दस्य नियतलिङ्गत्वाऽभावात्ततः प्रथमा न स्यादिति वाच्यम् । वासुदेवार्थकस्य तस्य नियतलिङ्गत्वात् । कृष्णत्व-कृष्णसमवायपुंस्त्वादिर्नियतोपस्थितिक इति बोध्यम् । न च मञ्चाः क्रोशन्ति, सिंहो माणवक इत्यादौ मञ्चस्थकर्तृकाऽऽह्वानरूपार्थस्य सिंहादिसदृशरूपार्थस्य च लक्ष्यार्थस्य (४)शक्यार्थरूपप्रातिपदिकार्थेनाऽसङ्ग्रहात्प्रथमा न स्यादिति वाच्यम् । शक्यार्थे पदं साधुत्वेनान्वाख्याय पश्चात्पदान्तरसमभिव्याहारात्तात्पर्य्याऽनुपपत्त्या लक्षणाङ्गीकारेणाऽदोषात् । शक्यतावच्छेदकारोपस्यैव लक्षणात्वेन व्यवहाराच्च । लिङ्गमात्रे इति । लिङ्गस्यैवाधिक्येति तदर्थः । नच नीलो घटः, वीरः पुरुष इत्यादौ विशेष्यविशेषणभावस्याऽधिकस्य भानसत्त्वेन लिङ्गस्यैवाऽऽधिक्याऽभावात्प्रथमा न स्यादिति वाच्यम् । विशेष्यविशेषणभावस्य वाक्यार्थत्वेन बहिरङ्गत्वात्स्वार्थमात्रनिमित्तप्रथमप्रवृत्तप्रथमारूपसंस्कारस्य तेन बाधाऽयोगात् । नच तस्य वाक्यार्थत्वे किम्प्रमाणमिति वाच्यम् । ( यत्राऽधिक्यं सवाक्यार्थः ) इति प्रकृतसूत्रस्थभाष्योक्त-

---

( १ ) तदुक्तम्—

एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा ।
नामार्था इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः ॥

( २ ) तत्त्वञ्च, उच्चारितप्रातिपदिकसमानाधिकरणात्यन्ताभावाप्रतियोगिबोधनिरूपितविषयताश्रयत्वम् । लक्षणसमन्वयश्चेत्थम् । उच्चारितघटरूपप्रातिपदिकसमानाधिकरणो योऽत्यन्ताभावः स च न घटो नास्तीत्याकारकोऽपि तु पटो नास्ति मठो नास्तीत्याकारक इति तादृशाभावस्य न घटविषयको बोधः प्रतियोगी, अपि तु पटविषयको मठविषयकश्चैव. तादृश इत्युक्ताभावाप्रतियोगिबोधो घटीयो बोधः ( घट इत्याकारकः ) तन्निरूपितविषयता घटे तदाश्रयत्वं तस्यैवेति प्रातिपदिकार्थत्वं तस्य सिद्धमिति भावः ।

( ३ ) नियतोपस्थितिकरूपप्रातिपदिकार्थस्य ग्रहणे चेत्यर्थः ।

( ४ ) शक्यार्थरूपेत्यादि । लक्ष्यार्थस्य नियतोपस्थितिकत्वाभावादिति भावः ।

स्यैव प्रमाणत्वात् । अयं विशेष्यविशेषणभावो द्विविधः, एकः—यत्र भेदः संसर्गत्वेन भासते तत्र तत्सम्बन्धावच्छिन्नः, द्वितीयो—यत्र समानविभक्तिकनामार्थयोरन्वयस्तत्रेतरसम्बन्धाऽनवच्छिन्नः । नच विशेष्यविशेषणभावस्य वाक्यार्थत्वेन बहिरङ्गत्वात्तेन प्रथमप्रवृत्तसंस्काराऽबाधेन घटम्पश्यतीत्यादावपि कर्म्मत्वस्य क्रियासापेक्षत्वेन वाक्यार्थत्वात्प्रथमाऽऽपत्तिरिति वाच्यम् । सत्येवं 'कर्म्मणि द्वितीया' इत्याद्यनुशासनवैयर्थ्यापत्तेः । एवञ्च द्वितीयादेर्द्देशस्य प्रथमयाऽवरुद्धत्वादस्यास्ताभिर्बाधेन न प्रथमाऽऽपत्तिशङ्काकलङ्ककणिकेति भावः ॥

एवञ्च नियतोपस्थितिकत्वरूपप्रातिपदिकार्थत्वस्वीकारेण यत्फलितन्तदाह—**अलिङ्गा नियतलिङ्गाश्च प्रातिपदिकार्थमात्रस्योदाहरणमिति** । अलिंगा असत्त्वभूतत्वेन लिङ्गादियोगाऽभाववन्त उच्चैरित्याद्यव्ययशब्दा इत्यर्थः । वासुदेव–लक्ष्मी–ब्रह्माऽऽद्यर्थबोधकाः कृष्ण–श्री–ज्ञानादयः शब्दा नियमेन पुं–स्त्री–क्लीबानुपस्थापयन्तीति भावः ॥

ननु द्रोणादीनाम्परिमाणमर्थं इति तेभ्यः प्रातिपदिकार्थमात्र एव प्रथमासिद्धौ परिमाणग्रहणं व्यर्थमिति चेत्, न । न मूलोक्तार्थलाभाय तस्याऽऽवश्यकत्वादित्यत आह–**परिमाणमात्रे द्रोणो व्रीहिरिति** । अयम्भावः—सूत्रे परिमाणग्रहणसत्त्वे तत्र द्रोणशब्दात्प्रथमाविधानेन परिमाणस्य प्रत्ययार्थत्वात्तत्र प्रकृत्यर्थस्य द्रोणस्याऽभेदेनाऽर्थादितरसम्बन्धानवच्छिन्नविशेषणविशेष्यभावसंसर्गेणाऽन्वयः, प्रत्ययार्थस्य परिमाणस्य परिच्छेद्यपरिच्छेदकभावेन व्रीहावन्वयः, तथाच द्रोणाऽभिन्नं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरित्यर्थः फलितः, परिमाणग्रहणाऽभावे प्रातिपदिकार्थे प्रथमाविधानात्प्रातिपदिकार्थस्य प्रत्ययार्थत्वात्तत्र द्रोणस्याऽभेदाऽन्वयः प्रत्ययार्थस्य च तस्योक्तसम्बन्धेन व्रीहावन्वयस्तथा च द्रोणाऽभिन्नो व्रीहिरिति स्यात्परमेतद्बाधितं ( नामार्थयोरभेदातिरिक्तः सम्बन्धोऽव्युत्पन्नः ) इति व्युत्पत्तिविरोधात् । इति मूलोक्तार्थलाभार्थं परिमाणग्रहणमावश्यकमिति भावः । नचोक्तव्युत्पत्तौ किम्प्रमाणमिति वाच्यम् । भेदसंसर्गावच्छिन्ननामार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितिः कारणमिति कार्यकारणभावस्यैव प्रमाणत्वात् । अत एव राज्ञः पुरुष इत्यत्र भेदसम्बन्धावच्छिन्नराजनिष्ठप्रकारताकपुरुषपदार्थनिष्ठविशेष्यताकशाब्दबुद्धौ ङस्प्रत्ययजन्योपस्थितेः कारणत्वाद्भेदसंसर्गको बोधो भवति । न हि भवति राजा पुरुष इत्यत्र तादृशो बोधः, उक्तसंसर्गकबोधे ङस्प्रत्ययजन्योपस्थितेः कारणत्वात्तस्याऽत्राऽसत्त्वात् । वैयाकरणैर्नाऽभेदस्य संसर्गत्वमङ्गीक्रियते । तस्य संसर्गत्वे नीलो घट इत्यादौ षष्ठ्यापत्तिः । विशेष्यविशेषणभावे तु न तदापत्तिः । तस्य बोधसामान्यसामग्रीलभ्यत्वेनाऽनन्यलभ्यत्वात् । राहोः शिर इत्यादावौपाधिकभेदमादाय षष्ठ्युपपादनपरभाष्यप्रामाण्यात्तस्य संसर्गाऽभावत्वं कल्प्यत इति भावः ॥

**वचनं किं संख्येति** । ननु पञ्चकं प्रातिपदिकार्थ इति नये संख्याया अपि प्रातिपदिकार्थत्वात्तत्रैवैकादिशब्देभ्योऽपि प्रथमासिद्धौ सूत्रे वचनग्रहणं व्यर्थमिति चेत्, न । 'उक्तार्थानामप्रयोग' इति न्यायविरोधेनैकादिशब्देभ्यः प्रातिपदिकार्थे प्रथमाऽप्राप्त्या तदर्थमिह वचनग्रहणस्याऽऽवश्यकत्वेन सार्थक्यात् । एकत्वाद्यर्थेषु विभक्तिर्विधेया ते चाऽर्थाः प्रकृत्यैव

प्रतिपादिता इति तेषामभिधानाय पुनर्विभक्तिर्नावश्यिका। यथा घटोऽस्ति कलश इति न भवति, इत्यभिप्रायकोक्तन्यायविरोधो दुर्वार इति वचनग्रहणमावश्यकम्। न च वचनग्रहणसत्त्वेऽप्युक्तन्यायविरोधो दुर्वार इति वाच्यम्। सामर्थ्यादुक्तन्यायबाधेन विरोधपरिहारात्। नहि तद्ग्रहणमन्तरेष्टसिद्धिरिति भावः। नचैकत्वविशिष्टे एकत्वान्तराऽन्वयार्थमेकवचनमस्त्विति वाच्यम्। प्रातिपदिकप्रतिपादितसंख्याविशिष्टे संख्याऽन्तराऽभावेनैकवचनोत्पत्तेरसम्भवात्। न च तर्हि एकादिशब्देभ्यो द्विवचनादिकमुत्पद्यतामिति वाच्यम्। अनन्वितार्थकविभक्तिकल्पनाऽपेक्षयाऽन्वितार्थकविभक्तिकल्पनस्यैव न्याय्यत्वेन द्विवचनादेरनुत्पत्तेः। न च (अपदं न प्रयुञ्जीते) ति भाष्यसिद्धान्तादेकवचनादिसिद्धौ वचनग्रहणं व्यर्थमिति वाच्यम्। सत्येवं तस्याऽनावश्यकत्वात्। ( नाऽसूया तत्र कर्त्तव्ये ) ति भाष्यसिद्धान्ताद्व्याख्यानात्करणं वरमिति प्राचीनसिद्धान्ताच्च कर्त्तव्यमेव वचनग्रहणमिति केचिदिति दिक्॥

ननु हिमानीन्द्राणीत्यादिभ्यः प्रातिपदिकार्थमात्रे प्रथमा भवति, सा च न सम्भवति महत्त्वपुंयोगयोराधिक्यादिति चेत्, न। (१)( लिङ्गविशिष्ट ), परिभाषया तदुपपत्तेः। प्रातिपदिकार्थमात्र इत्यत्र प्रातिपदिकपदस्य प्रातिपदिकप्रकृतिकलिङ्गबोधकप्रत्ययस्याऽपि बोधकत्वेन यस्माल्लिङ्गबोधकप्रत्ययान्तात्प्रथमोत्पत्तिरभिप्रेता तज्जन्यनियतोपस्थितिकोऽर्थो विवक्षितः; स च प्रकृतेऽस्तीति भावः॥

नागेशास्तु—प्रातिपदिकार्थशब्देन यस्माच्छब्दात्प्रथमाविधानं तच्छब्दप्रवृत्तिनिमित्तस्य तदाश्रयस्य च ग्रहणम्। तस्य च मुख्यस्येव आरोपिततदाश्रयस्यापि ग्रहणम्। प्रवृत्तिनिमित्तप्रकारकारोपविशेष्यस्यापीति तदर्थः। प्रातिपदिकार्थशब्देनाऽऽरोपिततदाश्रयस्य ग्रहणादेव गोपीत्यादौ गोपत्वप्रकारकारोपविशेष्यार्थबोधकत्वेऽपि प्रथमासिद्धिः। (२)अन्यथोक्तप्रयोगे गोपत्वरूपप्रवृत्तिनिमित्तस्य प्रातिपदिकार्थशब्देन ग्रहणात्तस्य तत्राऽसत्त्वात्सा न स्यात्। प्रातिपदिकार्थपदेन प्रवृत्तिनिमित्ततदाश्रययोरेव ग्रहणादेव सूत्रे लिङ्गग्रहणस्य सार्थक्यम्। अन्यथा 'स्वमोर्नपुंसकात्'इत्यादिशास्त्रप्रामाण्याल्लिङ्गस्यापि प्रातिपदिकजन्योपस्थितिविषयार्थत्वेन तस्य स्पष्टमेव वैयर्थ्यं स्यात्। लिङ्गस्य प्रातिपदिकजन्योपस्थितिविषयार्थत्वादेव 'स्त्रियामि'ति सूत्रे स्त्रीत्वे द्योत्ये इत्यर्थो भाष्ये सिद्धान्तितः। न च प्रवृत्तिनिमित्ततदाश्रययोः प्रातिपदिकार्थपदेन ग्रहणे हिमानी मृडानीत्यादौ प्रथमा न स्यान्महत्त्वपुंयोगयोराधिक्यादिति वाच्यम्। महत्त्वविशिष्टहिमत्वस्याऽऽरोपितमृडत्वस्य च प्रवृत्तिनिमित्तस्य तत्र सत्त्वादित्यलम्॥

इति कर्तृकारकप्रकरणम्।

---

( १ ) लिङ्गविशिष्टेति। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषास्वरूपम्।

( २ ) आरोपिततदाश्रयस्य प्रातिपदिकार्थपदेनाऽग्रहणे इत्यर्थः।

# अथ कर्मकारकप्रकरणम् ।

कारके । अत्र प्रथमाऽर्थे सौत्री सप्तमी; तेन कारकमिति तदर्थः । कारकत्वं क्रियाजनकत्वम् । करोति क्रियां निर्वर्त्तयतीतिव्युत्पत्तेर्भाष्ये दर्शनात् । ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यादौ ब्राह्मणस्य न कारकत्वं तस्याऽन्यथासिद्धत्वेन क्रियाजनकत्वाऽभावात् । कारकाणां क्रियाजनकत्वादेव तेषां क्रियायामेवाऽन्वयः। क्रियाजनकमिति ज्ञाते का सा क्रियेत्याकाङ्क्षोदयेन क्रियाया जनकाकांक्षया च कारकाणां क्रियायामन्वयस्यैवौचित्यमिति तदाशयः । न च क्रियाशब्दस्य प्रधानक्रियायां मुख्यत्वेन कर्मादिकारकाणां प्रधानक्रियाऽनिर्वर्त्तकत्वात्कथं तेषां कारकत्वमिति वाच्यम् । सकलकारकाणां स्वस्वनिष्ठफलोत्पत्त्यनुकूलक्रियाद्वारा प्रधानक्रियानिष्पादकत्वेन तदुपपत्तेः । न च जनिष्यमाणपुत्राय गां दास्यामीत्यादौ सम्प्रदानत्वं न स्यात्तस्येदानीमसन्निहितत्वेन कारकत्वाऽभावादिति वाच्यम् ! असन्निहितसम्प्रदानस्यापि दातृबुद्धिस्थत्वावश्यकत्वात्स्वज्ञानस्य पूर्वकालवृत्तित्वेनैव क्रियाजनकत्वात् । यथा यागस्य साक्षात्स्वर्गाव्यवहितपूर्ववृत्तित्वाऽभावेऽपि परमाऽपूर्वद्वारा स्वर्गजनकत्वं तथाऽसन्निहितसम्प्रदानजन्यं यत्तद्विषयकं तज्ज्ञानक्रियायाऽव्यवहितपूर्वकालवृत्तित्वेन सम्प्रदानस्यापि क्रियाजनकत्वमिति भावः । एवं स्तोकम्पचतीत्यादौ फलस्यापि स्वज्ञानद्वारा व्यापारजनकत्वेन कारकत्वात्कर्मत्वमुपपन्नम् । अन्यथा क्रियाजनकस्य कारकत्वात्फलस्य तत्त्वाऽभावात्कर्मत्वं न स्यादिति भावः ॥

क्रियाऽन्वयित्वं कारकत्वमिति नाऽभ्युपगन्तव्यं ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यादौ पुत्रद्वारा ब्राह्मणस्य क्रियाऽन्वयित्वेन कारकत्वाऽपत्तेः । न च साक्षात्क्रियाऽन्वयित्वमिति तल्लक्षणस्वीकारे ब्राह्मणस्य साक्षात्क्रियाऽन्वयित्वाऽभावादुक्ताऽऽपत्त्यभावादिदमेव तल्लक्षणमस्त्विति वाच्यम् । तथा सति मातुः स्मरतीत्यादौ मातुः स्मरणक्रियायां साक्षादन्वयेन कारकत्वाऽऽपत्तेः । अतः पूर्वोक्तलक्षणमेव साधु, एवञ्च मातुः क्रियाजनकत्वेनाऽन्वयित्वाऽविवक्षणेन नोक्ताऽऽपत्तिलेशोऽपीति भावः ॥

१ **कर्तुरीप्सिततमं कर्म** । कर्तृरिति 'क्तस्य च वर्त्तमाने' इति कर्तरि षष्ठी । ईप्सिततममिति आप्नोतेः सनि द्वित्वे 'आपज्ञप्यृधामीत्' इत्याकारस्येत्वे 'अत्र लोपोऽभ्यासस्ये' त्यभ्यासलोपे 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्त्तमाने क्ते ततः 'अतिशायने तमबिष्ठनावि'ति तमपि सिद्धम् । अत्र सूत्रे मतिरिच्छा न बुद्धिः, पुनर्बुद्धिग्रहणात् । अत्रेप्सितशब्दो नाऽभिप्रेतपरः; किन्तु क्रियापरः 'वारणार्थानामि'ति सूत्रभाष्यकैयटयोस्तथैव दर्शनात् । एवञ्च कर्त्राप्तुमिष्यमाणं कर्मेति तदर्थः । आप्तिश्चात्र सम्बन्धो न तु व्याप्त्यर्थकः । स च सम्बन्ध उपस्थितत्वात् कर्तृपदार्थाऽविशेषणीभूतव्यापारद्वारक एव गृह्यते । उपस्थितपरित्यागेऽनुपस्थितकल्पने मानाऽभावात् । एवञ्च कर्त्रा स्वनिष्ठव्यापारप्रयोज्यफलेन सम्बन्धुमिष्यमाणमित्यर्थः । यथा तण्डुलं पचतीत्यादौ(१)(व्यपदेशिवद्भावेन) फलस्यापि स्वसम्बन्धित्वात्कर्मत्वसिद्धिः । अत्र क्तप्रत्ययोपात्तवर्त्तमानत्वं न विवक्ष्यते; तथा सति कटं कृत-

---

(१) व्यपदेशिवद्भावेनेति । 'व्यपदेशिवदेकस्मिन्नि'ति परिभाषास्वरूपम् । यथा ससहाये मुख्यव्यवहारो भवति तथैवाऽसहायेऽपि भवतीत्यर्थः ।

वान् करिष्यतीत्यादौ कर्मत्वाऽनुपपत्तेः । नचाऽत्र वर्त्तमानत्वस्याऽविवक्षणात्कथं षष्ठीति वाच्यम् । एतत्सूत्रशाब्दबोधे तद्विवक्षेति तदाशयादित्यलम् ॥

कर्त्तुः किम् । माषेष्वश्वं बध्नाति । ननु कारकाधिकाराद्व्यापारलाभात्तेन कर्त्तुराक्षेपात् कर्तृवृत्तिव्यापारप्रयोज्यफलवत्त्वप्रकारिकेच्छानिरूपितविषयताऽऽश्रयः कर्मेत्यर्थे देवदत्तो ग्रामं गच्छतीत्यादौ देवदत्तकर्तृवृत्तिव्यापारः उत्तरदेशसंयोगानुकूलरूपः तत्प्रयोज्यफलाऽऽश्रयो ग्रामो भवत्वित्याकारिका तादृशेच्छानिरूपितविषयता ग्रामनिष्ठा तादृशविषयता ग्रामनिष्ठा तादृशविषयताऽऽश्रयस्य ग्रामस्य कर्मत्वे सिद्धे कर्त्तुर्ग्रहणं व्यर्थमिति चेत्, न । तस्य प्रकृतधातूपात्तव्यापाराश्रयकर्तृग्रहणेन सार्थक्यात् । अन्यथा माषेषु प्रसक्तमश्वं मापनाशो मा भूदित्यन्यत्र बध्नातीत्यर्थके माषेष्वश्वं बध्नातीतिप्रयोगे माषभक्षणकर्त्तुरश्वस्य मद्वृत्तिव्यापारप्रयोज्यगलबिलाधःसंयोगरूपफलाश्रयतया माषा भवन्त्वितीच्छायास्सत्त्वादधिकरणसंज्ञाम्बाधित्वा माषाणां कर्म्मत्वापत्तेः । प्रकृतधातूपात्तव्यापाराऽश्रयकर्त्तुर्ग्रहणे तु नोक्तदोषः, अश्वस्य प्रकृतधातूपात्तव्यापाराऽश्रयत्वाऽभावेनाऽग्रहणात् । न च तादृशकर्त्तुर्ग्रहणेऽपि पुष्ट्यर्थं माषक्षेत्रेऽश्वबन्धनस्थले तादृशकर्त्तुर्देवदत्तस्यैव मद्वृत्तिव्यापारप्रयोज्य बन्धनाश्रयोऽश्वो भवतु, अश्वस्य गलबिलाधःसंयोगाश्रया माषा भवन्त्वितीच्छायाः सत्त्वान्माषाणां कर्मत्वं दुर्वारमेवेति वाच्यम् । प्रत्यासत्त्या प्रकृतधातुवाच्यफलस्यैव ग्रहणेनाऽदोषात् । यत्तु स्वारसिकार्थके माषेष्वश्वं बध्नातीति प्रयोग एव दोषस्य सम्भवान्माषेषु प्रसक्तमित्याद्यर्थे लक्षणा नावश्यिकेति केचित्, तन्न, कर्मण ईप्सिता माषा न तु कर्त्तुरितिग्रन्थसंगत्यर्थं तदावश्यकत्वात् ॥

वस्तुतस्तु—प्रकृतधातूपात्तव्यापाराश्रयकर्तृग्रहणेऽपि पुष्ट्यर्थं माषक्षेत्रेऽश्वबन्धनस्थले माषाणां कर्मत्वव्यावृत्तये प्रकृतधातूपात्तफलस्य ग्रहणमावश्यकमिति तेनैव माषेषु प्रसक्तमित्याद्यर्थके माषेष्वश्वं बध्नातीति प्रयोगेऽप्युक्तदोषव्यावृत्तौ कर्तृग्रहणफलमन्वेषणीयमिति दिक् ॥

तमब्ग्रहणं किमिति—अवयवद्वारा समुदायस्य प्रश्नः । अर्थादीप्सिततमब्ग्रहणं किमर्थं ( कर्त्तुरुद्देश्यं कर्म ) त्येवास्तु सूत्रमिति प्रष्टुराकूतम् ॥

समाधत्ते—पयसौदनम्भुङ्क्ते इति–यदा कृतभोजनोऽपि देवदत्तः पुनरोदनभोजने प्रवर्त्तते तदेदं प्रत्युदाहरणं बोध्यम् । अयम्भावः—कर्त्तुरुद्देश्यं कर्मेति सूत्रकरणे उक्तस्थले भोजनक्रियाकर्त्तुः पयस उद्देश्यत्वात्तस्य कर्मत्वापत्तिः । ईप्सिततमब्ग्रहणसत्त्वे तु पयसः कर्तृवृत्तिव्यापारप्रयोज्यगलबिलाधःसंयोगरूपफलाश्रयत्वाभावान्नोक्तापत्तिः । नच पयसा ओदनम्भुङ्क्ते इत्यादौ पयसः कर्मत्वव्यावृत्त्यर्थमीप्सितग्रहणमेवाऽस्तु तमब्ग्रहणं व्यर्थमेवेतिवाच्यम् । अग्नेर्माणवकं वारयतीत्यादावग्नेः कर्मत्वव्यावृत्यर्थत्वेन तस्य सार्थक्यात् । नचाऽग्नेः कर्मत्वे 'वारणार्थानामि'ति सूत्रं वैयर्थ्यमापद्येतेतिवाच्यम् । तस्य सामर्थ्यात्कर्मसंज्ञाम्बाधित्वा माणवकस्यापादानसंज्ञाविधानेन साफल्यात् । नचाऽग्नौ 'वारणार्थानामि' त्यस्य चरितार्थत्वे कथमपवादत्वमिति वाच्यम् । माणवकस्यापि वारिधातूपस्थाप्यसंयोगरूपफलाश्रयत्वात् । संयोगाद्यनुकूलव्यापाराभावानुकूलव्यापारस्यैव वारिधात्वर्थत्वात् । नच संयोगस्य वारिधात्वर्थकर्तृव्यापारजन्यत्वाभावात्संयोगाश्रयेऽग्नौ

कर्मत्वाऽप्राप्त्या तत्र चरितार्थस्योक्तसूत्रस्य कथमपवादत्वमिति वाच्यम् । असति तमब्ग्रहणे कर्तृवृत्तिव्यापारवाचकधातूपात्तफलाश्रयत्वमित्यर्थस्यैव तेन लाभेन तत्र कर्मत्वस्य दुर्वारत्वात् । असति तमब्ग्रहणे कर्तृवृत्तिव्यापारवाचकधातूपात्तफलाश्रयस्य कर्मत्वमित्यर्थेऽग्नेर्देवदत्तकर्तृवृत्युत्तरदेशसंयोगानुकूलव्यापाराऽभावानुकूलव्यापारवाचकवारिधातूपात्तोत्तरदेशसंयोगाश्रयत्वेन कर्मत्वं दुर्वारं स्यात् । ईप्सिततमब्ग्रहणसत्त्वे तु प्रयोज्यत्वलाभः । (१)तत्त्वञ्च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वम् । तथाच प्रकृतधात्वर्थप्रधानीभूतव्यापारः उत्तरदेशसंयोगानुकूलव्यापाराऽभावाऽनुकूलव्यापारस्तत्प्रयोज्यं फलमुत्तरदेशसंयोगाऽनुकूलव्यापारस्तदाश्रयत्वं माणवकस्येति तस्यैव कर्मत्वम्, अग्नेस्तादृशफलाश्रयत्वाऽभावान्न तत्त्वमिति भावः ॥

ईप्सिततमत्वलक्षणे—फलव्यापारयोः प्रकृतधात्वर्थत्वे तुमर्थे मापभक्षणाय मापक्षेत्रेऽश्वबन्धनस्थलेऽपि मापाणां न कर्मत्वं बन्धनप्रयोज्यभक्षणफलाश्रयत्वेऽपि भक्षणस्य बध्नात्यर्थत्वाऽभावात् । प्रयोज्यत्वनिवेशफलं गां दोग्धि पयो देवदत्त इत्यादौ विभागानुकूलव्यापाराऽनुकूलव्यापारार्थकदुहियोगे पयसः कर्मत्वसिद्धिः । जन्यत्वनिवेशे तु न तस्य कर्मत्वं पयोनिष्ठविभागस्य प्रधानीभूतव्यापारप्रयोज्यत्वेऽपि उक्तव्यापाराऽजन्यत्वात् । प्रयोज्यत्वञ्च साक्षात्परम्परासाधारणमिति न तस्य कर्मत्वाऽनुपपत्तिरिति भावः ॥

अत्रेयं विचारणा—ननु 'कर्तुरीप्सिततमं' 'तथा युक्तम्'इति सूत्रद्वयाकरणरूपलाघवात् कर्तृनिष्ठव्यापारप्रयोज्यफलसम्बन्धाश्रयः कर्मेत्यर्थकं 'कर्तुराप्यतमं कर्म'त्येवास्तु सूत्रम् । अग्नेर्माणवकं वारयति कूपादन्धं वारयतीत्यादौ नाग्निकूपयोः कर्मत्वाऽऽपत्तिः, अग्निकूपनिष्ठफलसम्बन्धस्य कर्तृव्यापारप्रयोज्यत्वाऽभावादिति चेत्; न । काशीं गच्छन् पथि मृत इत्यादौ काश्याः संयोगरूपफलाश्रयत्वाऽप्राप्त्या तदर्थमीप्सिततममित्यस्य, अनीप्सितस्य संग्रहार्थं तथा युक्तमित्यस्य चाऽऽवश्यकत्वेनोक्तसूत्रस्य कर्तुमशक्यत्वात् । तण्डुलं पिपक्षन्मृत इत्यत्र तण्डुलस्य फलसम्बन्धाऽऽश्रयत्वाऽभावात्कर्मत्वाऽनुपपत्तेश्च । ईप्सिततममित्युक्तौ तु फलसम्बन्धप्रकारेच्छाविषयत्वात्कर्मत्वसिद्धिरिति भावः ॥

पुनरत्र विचार्यते—ननु (२)यथोक्तसूत्राऽभ्युपगमे कर्तृवृत्तिव्यापारप्रयोज्यफलवत्त्वप्रकारिकेच्छानिरूपितविषयताऽऽश्रयः कर्मेत्यर्थे काशीं न गच्छतीत्यादौ काश्याः संयोगप्रकारेच्छाविषयत्वाऽभावात्कर्मत्वं न स्यादिति चेन्न । नञ्समभिव्याहारे संयोगाऽभावाऽनुकूलव्यापारस्यैव गम्धात्वर्थत्वेन संयोगाऽभावरूपफलाश्रयत्वेन कर्मत्वोपपत्तेः । नचैवमग्नेर्माणवकं वारयतीत्यत्रोत्तरदेशसंयोगानुकूलव्यापाराऽनुकूलव्यापारस्य नञ्समभिव्याहारे वारिधात्वर्थत्वाद्दुहियोगे पयस इवाऽग्नेरपि प्रधानीभूतव्यापारप्रयोज्यसंयोगरूपफलाश्रयत्वापत्तिरिति वाच्यम् । कर्मत्वलक्षणे प्रधानीभूतव्यापारजन्यत्वस्यैव निवेशेनाऽदोषात् । नचैवं गां पयो दोग्धीत्यादौ पयोनिष्ठविभागस्य गोपवृत्तिव्यापाराऽजन्यत्वात्पयसः कर्मत्वं न स्यादिति वाच्यम् । (३)तस्य गोवृत्तिव्यापारजन्यत्वेऽपि गोपवृत्तिव्यापारजन्य-

---

(१) ईप्सिततमत्वञ्चेत्यर्थः ।

(२) कर्तुरीप्सिततमं कर्मेतिसूत्राङ्गीकार इत्यर्थः ।

(३) पयस इत्यर्थः ।

त्वस्याऽपि सत्त्वेन कर्मत्वोपपत्तेः। नचैवं घटं जानाति घटमिच्छतीत्यादौ स्वविषयीभवनाऽनुकूलव्यापारस्य ज्ञानादिरूपस्य धात्वर्थत्वेन ज्ञानादिसमकालोत्पत्तिकस्य स्वविषयीभवनस्य ज्ञानाद्यजन्यत्वात्तदाश्रयस्य घटस्य, माणवकनिष्ठस्योत्तरदेशसंयोगानुकूलव्यापाराभावस्य प्रागभावरूपस्याऽनादित्वात्प्रधानीभूतव्यापाराजन्यत्वेन माणवकस्य च कर्मत्वं न स्यादिति वाच्यम्। कर्मत्वलक्षणे प्रयोज्यत्वनिवेशेन तत्र तदुपपत्तेः। तथाहि—स्वविषयीभवनादेरप्यनुभवबलेन स्वप्रयोज्यत्वस्याङ्गीकारात् घटस्य, कण्टकापसरणाद्दुःखाभाव इत्याद्यनुरोधेन प्रागभावस्य प्रयोज्यत्वाङ्गीकारेण माणवकस्य च कर्मत्वमुपपन्नमिति भावः॥

अग्नेर्माणवकं न वारयतीत्यत्र तु नञ्समभिव्याहारे उत्तरदेशसंयोगानुकूलव्यापारस्य गच्छन्तं माणवकं दृष्ट्वा तूष्णीं स्थितिरूपस्य माणवकव्यापारेणाऽन्यथा सिद्ध्याऽग्निसंयोगप्रयोजकत्वाऽभावादग्निसंयोगरूपफलस्योक्तव्यापाराऽप्रयोज्यत्वेन तदाश्रयस्य माणवकस्य कर्मत्वं न स्यादिति वाच्यम्। कारणत्वस्येव प्रयोजकत्वस्याऽप्यन्यथासिद्धेरङ्गीकारात्तदुपपत्तेः। यथा कारणमन्यथासिद्धं तथा प्रयोजकत्वमप्यन्यथासिद्धमिति भावः।

ननु एतत्प्राग्वर्त्तिनः 'अधिशीङ्स्थासां कर्म'इति सूत्रात्कर्मपदाऽनुवृत्त्या कर्मसंज्ञेत्यर्थलाभे 'कर्त्तुरीप्सिततमम्'इति सूत्रे कर्मपदं व्यर्थमित्याशङ्क्य समाधत्ते–कर्मेत्यनुवृत्ताविति। ( एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः ) इति परिभाषया एकयोगनिर्दिष्टस्याऽऽधारपदस्याऽप्यनुवृत्तावाधारस्यैव कर्मत्वं स्यान्नतु फलाश्रयस्येति तद्व्यावृत्त्यर्थमत्र सूत्रे कर्मग्रहणमावश्यकमिति। अयम्भावः—आधारोऽधिकरणमिति सूत्रे कस्याऽऽधारस्याधिकरणसंज्ञेत्याकांक्षायां कारकाऽधिकारात्क्रियाया एवाधारस्येति लाभे तत्रेप्सितस्वतन्त्रपदाभ्यां साक्षात्क्रियाऽधारयोः कर्तृकर्मसंज्ञाभ्यां बाधात्परम्पराऽऽधारस्य ग्रहणात्परम्परा च कर्तृकर्मद्वारैव। एवञ्च कर्त्रा स्वनिष्ठव्यापारेणाप्तुमिष्यमाणस्तन्निष्ठक्रियायास्तद्द्वाधारः कर्मत्वं प्रतिपद्येत, तथाच विषयतासम्बन्धेन यद्धातुफलं विषये, समवायेन कर्तर्यपि, तद्योगे कर्मत्वमित्याह–गेहं प्रविशतीति। अत्रोक्तसम्बन्धद्वयेन गेहचैत्रयोः फलं तिष्ठतीति भावः॥

**अनभिहिते।** अत्र प्रकृतसूत्रस्य कर्त्तव्यत्वाकर्त्तव्यत्वयोर्विचारः प्रस्तूयते–ननु स्वार्थ–द्रव्य–लिङ्ग–संख्या–कारकेति पञ्चविधप्रातिपदिकार्थपक्षे ( अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति ) इत्यभियुक्तोक्त्या 'स्वादि' सूत्रेण कर्मादौ संख्यायाञ्चार्थे स्वादिविभक्तीनां सिद्धौ 'कर्मणि द्वितीया' इत्यादेः 'द्व्येकयोर्द्विवचनैकवचने' इत्यादिसूत्राणां नियमार्थत्वं तत्र कर्मणि द्वितीयेत्यादेर्द्व्येकयोर्द्विवचनैकवचने' इत्यादेश्चैकवाक्यत्वे एकस्मिन्कर्मणि द्वितीयैकवचनमिति सूत्रजन्यबोधे ( सूत्रस्यार्थे ) कर्माद्यर्थस्य प्राधान्यादनभिहिते इतिसूत्रमनावश्यकम्। नच तदभावे देवदत्तेन ग्रामो गम्यते, यज्ञदत्तेन तण्डुलः पच्यते इत्यादावुक्तकर्मण्यपि द्वितीयापत्तिरिति वाच्यम्। ( उक्तार्थानामप्रयोगः ) इत्यनेनोक्तकर्मणि तदप्राप्तेः। कर्मत्वबोधनमेव द्वितीयाविधानफलं तच तिङैव बोध्यते चेदलं तद्विधानेनेति तदाशयः। नच कर्मणि द्वितीयेत्यादिसूत्रस्य संख्यावाक्येन द्व्येकयोर्द्विवचनैकवचने इत्यादिना सहैकवाक्यत्वेन कर्मगतैकत्वे द्वितीयैकवचनमित्यर्थे संख्यायाः प्राधान्यादुक्तन्यायाऽप्रवृत्त्या उक्तकर्मण्यपि द्वितीयापत्त्या तद्व्यावृत्त्यर्थमनभिहितेऽधिकार आवश्यक

एवेति वाच्यम् । उक्तरीत्योक्तसूत्रजबोधे संख्यायाः प्राधान्यात्तदावश्यकत्वेऽपि एकत्वविशिष्टे कर्मणि द्वितीयकवचनमित्यर्थं दर्शितदिशा तदनावश्यकत्वात् । न च ( द्विर्बद्धं सुबद्धमि ) ति न्यायेन व्यतिलुनीते इत्यत्र क्रियाविनिमयद्योतकव्यतीत्युभयोपसर्गप्रयोगवदुक्तकर्मण्यपि द्वितीया दुर्वारैवेति वाच्यम् । लक्ष्यानुसारा'दुक्तार्थानामि'ति न्यायानुसरणस्यैवौचित्यादित्यलम् ।

प्रातिपदिकविषये 'स्वार्थद्रव्ये'त्यादिपञ्चकपक्षाङ्गीकारवद्धातुविषयेऽपि पञ्चकपक्षोऽङ्गीकार्यः, तथा च धातोरपि क्रियात्व-क्रिया-काल-कारक-संख्यारूपं पञ्चकमर्थः, उभयत्र पञ्चकपक्षाङ्गीकारादेव-धातुविषयेऽपि 'द्वयेकयोरित्यादेः' 'भावकर्मणोः'इत्यादेश्च भाष्यसम्मतं नियमत्वं सङ्गच्छते । तत्तत्पञ्चकस्य प्रातिपदिकधातुवाच्यत्वादेव दधि-अजर्घा-अवेदित्यादौ प्रातिपदिकधातुभ्यामेव सर्वबोधः । क्रियात्वक्रियेत्यादिपञ्चकस्य धातुवाच्यत्वादेव 'भावकर्मणो'रित्यस्य भावकर्मवाचकाद्धातोरित्यर्थः 'स्तुक्रमोः'इति सूत्रभाष्ये उक्तः । प्रातिपदिकस्थले धातुस्थले च द्योत्यत्वादेव प्रत्ययार्थस्य विशेषणत्वमेवेति दिक् ॥

ननु 'अनभिहिते' इत्यस्य 'कर्मणि द्वितीया' इत्यतः प्रागप्यधिकारात्प्रातिपदिकार्थसूत्रेऽपि तस्याऽधिकारेणाऽनभिहिते प्रातिपदिकार्थ एव प्रथमा स्यादुक्ते तस्मिन् सा न स्यादित्याशङ्क्य समाधत्ते—**अभिहिते तु प्रातिपदिकार्थमात्रे प्रथमैवेति** । अनभिहिताऽधिकारे सत्यपि प्रातिपदिकार्थस्य प्रादिपदिकेन तिङादिना वोक्तत्वेऽपि सूत्रारम्भसामर्थ्यात्प्रथमैव नान्या विभक्तिः । अत एव ( अभिहिते प्रथमैवे ) ति वार्त्तिकं सङ्गतम् । अन्यथोक्तरीत्या प्रातिपदिकार्थस्योक्तत्वेन प्रथमाऽप्राप्तौ स्पष्टैव वार्त्तिकाऽसंगतिरिति भावः ।

ननु अभिहिते प्रातिपदिकार्थमात्रे प्रथमैवेत्युक्ते तत्र कियद्भिरभिधानमित्याकांक्षायामाह-**अभिधानं तु प्रायेण तिङ्कृत्तद्धितसमासैरिति** । तिङ उदाहरणम्, देवदत्तेन हरिः सेव्यते । अत्र कर्मणि तङा कर्मणो हरेरुक्तत्वात्ततः प्रथमा । कृत उदाहरणम्, लक्ष्म्या सेवितो हरिः, अत्र कर्मणि क्तेन हरेः कर्मण उक्तत्वेन ततः प्रथमा । तद्धितस्योदाहरणम्, शतेन क्रीतः शत्योऽश्वः, अत्र शतशब्दात् 'शताच्च ठन्यतौ'इत्यनेन तेन क्रीतमित्यर्थे यति तेनाऽश्वरूपकर्मण उक्तत्वात्प्रथमा । समासस्योदाहरणम्, प्राप्त आनन्दो यं स प्राप्ताऽनन्द इति बोध्यम् । तिङ्कृदित्यादिपरिगणनादेव कटं भीष्मं कुर्वित्यादौ विशेष्यवाचककटपदोत्तरद्वितीया विशेषणवाचकभीष्मपदगतकर्मत्वस्योक्तत्वेऽपि भीष्मपदाद्द्वितीया । परिगणनाऽभावे तु येन केनाऽप्यभिधाने उक्तरीत्या विशेषणवाचकाद्द्वितीयोत्पत्तिर्न स्यात् । वस्तुतस्तु परिगणनं भगवता भाष्यकृता प्रत्याख्यातम्, तथाहि—प्रक्रियादशायां कटोऽपि कर्म भीष्मादयोऽपीति स्वीकारेण कटपदोत्तरद्वितीयया कटत्वविशिष्टकटगतकर्मत्वस्योक्तत्वेऽपि भीष्मत्वविशिष्टभीष्मनिष्ठकर्मत्वबोधार्थं विशेषणवाचकादपि द्वितीयाया आवश्यकत्वात् । कटभीष्मयोः परस्परमन्वयबोधस्तु विशेष्यविशेषणभावेनैवेति बोध्यम् । ( नच सर्वाणि कारकाणि भावनायामेवाऽन्वियन्ति ) इति व्युत्पत्तिविरोध इति वाच्यम् । साक्षात्स्वाश्रयद्वारा ( परम्परया ) वाऽन्वयविषयिणी सा व्युत्पत्तिरित्यभिप्रायेणादोषादिति । क्रिया कृता च सत्प्रकार्यं प्रति यस्य कर्मत्वं

तस्य सर्वस्यापि कर्मत्वाभिधानान्न कृतः कटः सुन्दर इत्यादौ कुत्रापि द्वितीयोत्पत्ति-रित्यलम् ॥

अथ मूलोक्तपरिगणनोदाहरणस्य शत्य इत्यादेः खण्डनप्रकारः। तथाहि- यथा कर्मकरणादिपदे विभक्तिवाच्यतावच्छेदकरूपेण (उद्भूतकर्मत्वादिशक्तिमत्त्वेन) कर्मादिर-भानात् न ततो द्वितीयोत्पत्तिस्तथा प्रकृते शत्य इत्यत्राऽप्युक्तरूपेण कर्मणो भानाऽभावात् (अप्रतीयमानत्वात्) द्वितीयोत्पत्यसम्भवेन तद्धितस्योदाहरणमेतन्निष्फलमेव, अर्थादनभि-हिताधिकारस्य नैतत्प्रत्युदाहणं युक्तम्। तस्मात् (१)औपगवः, चित्रगुरित्येतत्प्रत्युदाहरणं युक्तम्। तत्र च येन रूपेण सम्बन्धस्य षष्ठ्या भानं भवति तेनैव रूपेण तद्धितान्तादिभिः समुदायशक्त्या सम्बन्धस्य भानं भवति। (२)घट इत्यादौ षष्ठ्यवाच्यत्वेन दृष्टानामेव प्रातिपदिकार्थपदेन ग्रहणं प्रातिपदिकार्थभिन्नस्यैव षष्ठीविधायके 'षष्ठी शेषे' इति सूत्रे शेषे पदेन ग्रहणम्। औपगवादौ सम्बन्धस्य षष्ठीवाच्यत्वेन दृष्टत्वात्षष्ठ्यापत्तिः। उक्ताधिकार आवश्यकः। सति च तस्मिन् अनभिहिते सम्बन्धे षष्ठीति सूत्राऽर्थान्नोक्तापत्तिलेशोऽपीति भावः। वस्तुतस्तु औपगवश्चित्रगुरित्यपि न प्रत्युदाहरणं योग्यम्, कटं भीष्ममितिपरि-गणनफलमुक्त्वाऽशेषत्वान्नात्र शेषलक्षणा षष्ठी, अन्याऽनभिहितकर्मादिग्रामसत्त्वाच्च नान्या काचिद्विभक्तिरित्याशङ्क्य 'न केवला प्रकृतिः प्रयोक्तव्या नाऽपि केवलः प्रत्ययः' इति समाधानं कृतम्। नहि काचिदन्या विभक्तिरेतस्या अभिसम्बद्धं वक्तुमुत्सहते इति कृत्वा द्वितीयेति भाष्ये उक्तम्। तत्राऽशेषत्वाच्चात्र शेषलक्षणा षष्ठीत्युक्त्यैव, औपगवादौ षष्ठी-वारणात्। शेषपदेन प्रातिपदिकार्थभिन्नस्यैव ग्रहणादिहाऽतथात्वेनाऽदोषादिति तदाशयः। 'अनेकमन्यपदार्थे' इत्यत्र भाष्येऽपि ध्वनितमेतत्। यत्र हि चित्रगुरित्यादौ षष्ठ्यर्थस्य सम्बन्धस्य नियमेन भानात्षष्ठी प्राप्नोतीत्याशङ्क्य, अनभिहितः सोऽर्थः (चित्रागोस्वा-मित्वरूपः) अन्तर्भूतः प्रातिपदिकार्थः सम्पन्न इति प्रथमेत्युक्तम्। अनेनाऽशेषत्वरूपः षष्ठ्यप्रासिहेतुरुक्तः। अन्तर्भूत इत्यनेन चित्रगवादौ सम्बन्धस्यैव प्रवृत्तिनिमित्तत्वात्प्रा-तिपदिकार्थपदेन ग्रहणयोग्यत्वमुक्तमिति प्राञ्चः ॥

नागेशास्तु—शत्य इत्यत्र क्रयणादिक्रियायाः कारकान्वययोग्यतावच्छेदकसाध्य-त्वेन रूपेणाऽभानान्न द्वितीयाऽतिप्रसङ्गः। उक्तरूपेण क्रियाभानाऽभावेन तत्रेतरकारकाणा-मप्यन्वयो न भवति, देवदत्तेन शत्योऽश्व इति प्रयोगो नेष्टः,। नच शतेन क्रीत इत्यर्थे 'शताच्च ठन्यतावि' त्यनेन यति निष्पन्नस्य शत्यशब्दस्य शतकरणकक्रयणकर्मबोधकत्वादु-क्तापत्तेर्दुर्वारैवेति वाच्यम्। प्रत्ययान्तसमुदायेनोपस्थितायास्तस्याः क्रियायाः साध्यत्वे-नाप्रतीयमानत्वात्। कारकान्वययोग्यक्रियाया धातोरेवोपस्थितिर्भवति ; न तु तद्धितशक्त्ये-ति नोक्ताऽऽपत्तिलेशोऽपीति भावः। एवं प्रासानन्द इत्यादौ यत्कर्मकप्रासिकर्त्तानन्द इति विग्रहत आनन्दकर्तृकप्रासिकर्मेति समासतश्च बोधः, उभयत्र बोधे विशेष्यविशेषणभावव्य-

(१) औपगव इत्यत्र तत्सम्बन्ध्यपत्यमित्यर्थे प्रत्ययविधानात् चित्रगुरित्यत्र षष्ठ्यर्थे बहुव्रीहिविधानादितिभावः।

(२) औपगवादौ समुदायात्षष्ठ्यापादनं तदा सम्भवति यदा प्रातिपदिकार्थे विधीय-मानया प्रथमया [illegible] घट इति।

स्यासेनैकार्थीभावकल्पना, वृत्तिविग्रहयोरसमर्थत्वापत्तिश्च । किञ्चैकधर्मिबोधकत्वरूपसामानाधिकरण्यस्य बहुव्रीह्युपजीव्यस्य हानिः । किञ्च पूर्वोत्तरपदयोरेकविशेष्यकप्रतीतिजनकत्वरूपसामानाधिकरण्याऽभावात्प्राप्ता भार्या यं स प्राप्तभार्यं इत्यादौ पुंस्त्वानापत्तिरतो वृत्तिविग्रहयोः समानार्थत्वनिर्वाहाय 'कालाः परिमाणिना'इतिसूत्रस्थभाष्योक्तरीत्योभयत्र प्राप्तिकर्त्रानन्दकर्मत्येव बोधः । नच कर्मत्वस्य क्रियानिरूपितत्वाद्द्रव्याऽऽनन्दनिरूपितत्वाऽभावेन प्राप्तिकर्त्रानन्दकर्म्मेति बोधः कथमिति वाच्यम् । विशेष्ये आनन्दे कर्मत्वनिरूपकत्वस्य बाधेन विशेषणीभूतप्राप्तौ कर्मत्वनिरूपकत्वस्य पर्यवसानात् । स्वर्गे ध्वस्ते यथा स्वर्गी ध्वस्त इति भवति तथैवेति भावः । एवञ्च प्राप्तानन्दशब्दाद्विभक्तिवाच्यतावच्छेदकोद्भूतकर्मत्वशक्तिमत्वेन क्रियाजनकत्वेन च कर्मादेरभानान्न विभक्तिप्रसक्तिः । अत एव 'गतिकारकोपपदात्'इति सूत्रे गतिकारकोपपदादिति किमर्थम् ? परमं कारकं परमकारकमिति प्रतीकमुपादाय यथा सम्प्रदानादयः शब्दा न कारकरूपतां प्रतिपादयन्ति तथा कारकशब्दोऽपीति कृदन्ता हि क्रियायोग्यताविशिष्टद्रव्यवाचिनो न तद्भूतां कारकशक्तिं प्रतिपादयन्तीतिकैयटेनोक्तम् । अत एव न तस्य कर्मत्वस्य क्रियान्वयनियमः । अन्यथा कारकशक्तेः क्रियाविशेषणत्वनियमान्न कर्मादेः प्राधान्यं स्यात् । एवं कर्मादिपदं यथा विभक्तिवाच्यतावच्छेदकरूपेण कर्मादिभाननियामकं न तथा पक्कादि पदमपीति बोध्यम् । नचोक्तरीत्या परिगणनोदाहरणाऽन्यथोपपत्या तल्लेखनञ्चानुपपन्नमिति वाच्यम् । तिङ्कृत्तद्धितसमासैरभिधानं अर्थादुद्भूतकर्मत्वादिशक्त्याऽऽवेशेन न भानमिति न विभक्तप्रसक्तिरत्रैव तात्पर्य्यग्राहकत्वेन तदुपपत्तेः । इष्टः पुत्र, इष्यते पुत्र इत्यर्थं क्यच् कुतो नेत्याशङ्क्य स्वशब्देनोक्तत्वान्न क्यजिति समाहितं इष्टशब्दसामानाधिकरण्यात्पुत्रार्थे कर्मत्वस्यावगतावपि पुत्र इति सुबन्तस्य कर्मवाचकत्वाऽभावान्न तस्मात्क्यजिति तद्भावः । स्वं कर्मत्वं तद्वाचकशब्देन पुत्रगतकर्मत्वस्योक्तत्वान्न तत्रार्थे पुत्रशब्दस्य शक्तिरित्यक्षरार्थः । 'सुप आत्मन' इत्यस्य कर्मत्वविशिष्टबोधकसुबन्तात्क्यजित्यर्थं इति तदाशयः । वस्तुतस्तु कर्मत्वविशिष्टबोधकात्सुबन्तात्क्यजित्यर्थे इह भवन्त इत्यादिना समाध्यन्तरमुक्तं, वाक्ये फलस्य विशेष्यत्वाद्वृत्तौ व्यापारस्येति समानाश्रयत्वाभावेन तत्रार्थे न वृत्तिरित्याहुः ॥

प्राचीनाऽनुसारेणोक्तस्याऽभिधानं तु प्रायेण तिङ्कृत्तद्धितसमासैरित्यत्र प्रायेणेत्यस्य फलमाह—**क्वचिन्निपातेनाऽभिधानमिति** । अयम्भावः—

'विषवृक्षोऽपि सम्वर्द्ध्य स्वयं छेत्तुमसाम्प्रतम्'

इति श्लोके निपातेनाऽपिना विषवृक्षरूपकर्मण उक्तत्वात्ततः प्रथमा निपातेनाऽभिधानस्याऽनभ्युपगमेऽपिनोक्तकर्मण उक्तत्वेनापि विषवृक्षशब्दाद्द्वितीया दुर्वारैवेत्यवसेयम् । एवं 'क्रमादमुं नारद इत्यबोधि स' इत्यादावितिशब्देन निपातेन नारदरूपकर्मण उक्तत्वान्न ततो द्वितीया ; किन्तु प्रथमैव । अत एव अपिना निपातेनाऽधिकरणस्योक्तत्वात्सप्तम्यप्राप्तौ वचनसामर्थ्यात्सप्तमी, विभक्त्यर्थेऽव्ययीभावसमासविधायकवचनसामर्थ्यादिति तदर्थं इति प्राञ्चः ।

**वस्तुतस्तु**—विषवृक्षोऽपीति पद्ये तुमुन उपपत्त्यर्थमिष्यते इति क्रियान्तराऽध्याहारस्यावश्यकत्वम्, अन्यथा क्रियार्थकक्रियोपपदत्वस्य शकादियोगस्य चाऽसत्वात्तुमुन् न

स्यात् । उक्तक्रियाध्याहारे तु 'इच्छार्थेषु तुमुन्' इत्यनेन सुलभ एव तुमुन्निति भावः । एवञ्च तिङैव कर्मण उक्तत्वात्ततो द्वितीयाऽप्रसक्त्या निपातेनाऽभिधानाऽभ्युपगमो निष्फल एव । विषवृक्षोऽपि सम्वर्द्ध्य स्वयं छेत्तुमिष्यते यत्तदसाम्प्रतमन्याय्यं न युज्यते इति पद्यार्थः । छेदनस्याऽन्याय्यत्वादिच्छाया अन्याय्यत्वं बोध्यम् । क्रमादमुमित्यत्राऽपि अयत्नाद इति श्रीकृष्णीयज्ञानाऽऽकारस्याऽनुकरणम् । नारद इत्येतच्छब्दाऽभिलप्यमानाकारो बोधः । तथा च नारद इत्यस्य प्रथमान्तत्वेनाऽप्रथमान्तत्वेनाऽप्रातिपदिकत्वात्ततो न द्वितीयेति निष्फलैव निपाताऽभिधानाऽभ्युपगतिः । विभक्त्यर्थेऽव्ययीभावसमासविधायकवचनसामर्थ्यात्तिङ्कृत्तद्धितसमासैरेवाऽभिधानं नत्वेतदतिरिक्तैरितिपरिगणनकल्पकस्यैव युक्तत्वान्निपातेनाऽभिधानेऽप्यधिकरणे सप्तम्युत्पत्तौ बाधकाऽभावेन निपाताभिधानं नैव स्वीकार्यमित्याहुः ॥

तथा युक्तञ्चानीप्सितम् । तथा क्रियायुक्तस्येप्सिततमस्य कर्मत्वमिति तदर्थः । सूत्रेऽनीप्सितपदस्यानुद्देश्यमित्यर्थः । अनुद्देश्यञ्च द्विविधं द्वेष्यमुदासीनञ्च । आद्यस्योदाहरणम्—ओदनं भुञ्जानो विषं भुङ्क्ते । द्वितीयस्योदाहरणम्—ग्रामं गच्छंस्तृणं स्पृशतीति । वस्तुतस्तु न पूर्वप्रदर्शितं द्वेष्योदाहरणम्, समभिव्याहृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यतद्धात्वर्थफलाश्रयत्वस्य तथायुक्तपदार्थत्वात्पराधीनतया विषं भुञ्जानेऽपि विषस्य भुजिक्रियानिरूपितफलाश्रयत्वेनोद्देश्यत्वात्कर्तुरित्यनेनैव कर्मत्वसिद्धेः । तदुक्तं भगवता भाष्यकृता ( आतश्च विषमीप्सितं यत्तद्भक्षयति )इति, तस्माच्चौरान्पश्यतीति द्वेष्यस्योदाहरणम्, विषयेन्द्रियसम्बन्धेन दृश्यमाना अपि चौरा न दर्शनोद्देश्या अपित्वनिष्टदर्शना एवेति । एवं च पूर्वसूत्रेण कर्मत्वाऽप्राप्तावनेन कर्मत्वमिति । नचोदासीनोदाहरणे तृणादेरीप्सिततमत्वाऽभावेन कर्मत्वं न स्यादिति वाच्यम् । स्पृश्यमानस्य गङ्गादेः स्पर्शादिजन्यसंयोगादिफलाधारत्वात्कर्मत्वोपपत्तेः । न च ( तथा युक्तमित्येवा )स्तु सूत्रं; मास्तु च तत्राऽनीप्सितग्रहणमिति वाच्यम् । तदभावे प्रकर्षहीनस्यापीप्सितस्यानेन कर्मसंज्ञाया ( वारणार्थानामि ) त्यस्याऽनवकाशत्वेनाऽपादानत्वापत्तेः । एवञ्च यवेभ्यो गवां वारणाय यदा दण्डोद्यमनादिकं कृतं तेनैव व्यापारेण तत्र सञ्चरन्त्यो महिष्योऽपि वारिता भवन्ति तादृशस्थले महिषीर्वारयति इति प्रयोगो न स्यादनीप्सितमहिष्या अप्यपादानत्वप्रसक्तेः । अत अनीप्सितमित्युपात्तम् । तथा युक्तमित्यस्याऽभावे विषेणौदनं भुङ्क्ते इत्यादौ करणत्वमात्रविवक्षायां विषस्य, प्रयागात्काशीं गच्छतीत्यादौ प्रयागस्य च कर्मत्वापत्तिर्दुर्वारेति तदावश्यकम् । सति च तस्मिन् प्रकृतधात्वर्थफलाश्रयत्वरूपतथायुक्तत्वाऽभावान्नोक्ताऽऽपत्तिरित्यलम् ॥

अकथितञ्च । अपादानानीत्यत्राऽपादानादिशब्दस्य भावप्रधाननिर्देशेनाऽपादानत्वादिपरत्वादिविशेषैरविवक्षितस्याऽपादानत्वादिरूपेणा ( भासमानस्या ) ( प्रतीयमानस्य ) कारकस्य कर्मत्वमित्यर्थः । अपादानादिशब्दस्य धर्मपरत्वाऽभावे प्रसक्तिपूर्विकाऽपादानत्वाद्यविवक्षायामेवाऽनेन कर्मत्वं स्यात्सर्वथा पूर्वविधेरप्रसक्तौ न स्यादित्युक्तशब्दस्य धर्मपरत्वमावश्यकम् । अपादानत्वादिविवक्षायां तु गोःपयो दोग्धीत्यादौ पञ्चम्यादय एव भवन्ति । अपादानत्वाद्यविवक्षायामन्वयितावच्छेदककर्मत्वमन्वयितावच्छेदककर्मत्वरूपेण विवक्षाया-

मनेन कर्मत्वमिति बोध्यम् । नचोक्तरूपेण विवक्षायां किं बीजमिति वाच्यम् । कारकत्वव्याप्यकर्मादिसंज्ञानां स्वबोध्यार्थे कर्मादौ कर्मत्वादिशक्तिमत्त्वबोधकस्यैव तत्र बीजत्वात् । बोध्योऽपि कर्मत्वादिशक्तिमत्त्वेनैवेति । एतत्सूत्रविहितकर्मणि विहिताया द्वितीयायाः सम्बन्धार्थकत्वं प्राचीनोक्तं खण्डयति । तथाहि—'कर्मणि द्वितीया' इत्यादिशास्त्राऽभावे सर्वत्र षष्ठ्याः प्राप्तिरिति सर्वासां द्वितीयादीनां षष्ठ्यपवादत्वं तदपवादत्वमात्रेणोक्तरूपाया द्वितीयायाः सम्बन्धाऽर्थकत्वन्न समुचितम्, तथा सति 'कर्मणि द्वितीया' इत्यस्य वैरूप्यापत्तेः । कर्तुरित्येतद्विहितकर्मणि या द्वितीया तस्याः कर्मत्वबोधकत्वं एतत्सूत्रविषये सम्बन्धबोधकत्वमिति स्पष्टमेव वैरूप्यं स्यादिति भावः । एतत्सूत्रविषयेऽपि कर्मत्वशक्तिमत्त्वेन द्वितीयाया बोधकत्वादेव, अत्र सूत्रेण कर्मत्वे सिद्धे कर्त्तुरिति तथायुक्तमिति च सूत्रद्वयं व्यर्थमित्याशङ्क्य, उक्तसूत्राऽभावेऽनीप्सितमात्रस्यापि कर्मसंज्ञापत्तौ वारणार्थानामित्यस्याऽनवकाशत्वादग्नेर्माणवकं वारयतीत्यत्र माणवकादपि पञ्चम्यापत्तिरित्युक्तसूत्रद्वयमवश्यं कार्य्यमित्युत्तरितं, द्वितीयायाः सम्बन्धार्थकत्वे शङ्कासमाधानयोर्माप्यकृत्कृतोः स्पष्टैवाऽसङ्गतिरिति । दुहादिधातूनां व्यापारद्वयार्थकत्वेन कर्त्तुरिति कर्मत्वे सिद्धे कर्मत्वेनाऽविवक्षायामप्यनेन कर्मत्वमिति परास्तमेतेनेति दिक् ॥

ननु नटस्य गाथां शृणोतीत्यादौ नटस्य गीतद्वारा क्रियाजनकत्वेन कारकत्वादकथितञ्चेत्यनेन कर्मत्वाक्षतिः । न च तस्याऽपादानत्वविवक्षणान्नोक्तापत्तिरिति वाच्यम् । 'आख्यातोपयोगे' इत्यत्रोपयोगग्रहणादनुपयोगे नियमपूर्वकविद्यास्वीकारभिन्ने आख्यातुरपादानत्वाविवक्षाबोधनात् । न च दुहादिधातुकर्मयुक्ताभावान्न दोष इति वाच्यम् । तदंशस्यापि परिगणनलभ्यत्वादित्यत आह—दुह्याजिति ।

दुह्याच्पच्दण्डरुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ।
कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥ १ ॥

इति षोडशधातुपरिगणनम् । अत्र श्रुधातोरसत्त्वात्परिगणितधातुकर्मयुक्ताभावेन न नटस्य कर्मत्वमिति भावः । परिगणनमिदं प्राचामनुरोधेनैव, भाष्ये तु दुहियाचिरुधिप्रच्छिभिक्षिचिञ्ब्रूञ्शासय इत्येव पठिताः । कर्मयुक्त्वं नाम कर्मसम्बद्धत्वं तच्च न सर्वत्रैकरूपं किन्तु क्वचिद्धात्वर्थव्यापारात्प्राक् । क्वचिच्च धात्वर्थव्यापाराऽनन्तरमिति प्रकारद्वयम् तत्रोक्तप्रकारद्वये ब्रुविशासिभिन्नधातुविषये धात्वर्थव्यापारात्प्रागेव कर्मसम्बद्धत्वं ब्रूशास्धातुविषये तु धात्वर्थव्यापाराऽनन्तरं कर्मसम्बद्धत्वम् । ब्रुविशासिभिन्नेऽपि, सति सम्भवे धात्वर्थव्यापारात्प्रागेव कर्मसम्बद्धत्वं ग्राह्यम् । अत एव गां पयो दोग्धि स्थाल्यामित्यादौ गोपव्यापाराऽनन्तरं स्थाल्यादेः पयः सम्बद्धत्वेऽप्यधिकरणत्वाऽविवक्षायामनेन कर्मत्वं न । तथाच तत्राऽपादानादीत्यत्रादिशब्देनाऽपादानसम्प्रदानाऽधिकरणानामेव ग्रहणं, करणस्य तु न हस्तादेः करणस्य पय आदिकर्मयोगाऽभावात् ॥

गां दोग्धि पय इति—अन्तःस्थितद्रवद्रव्यनिष्ठविभागानुकूलव्यापारो दुहेरर्थः । न च 'अकथितञ्च' इत्यस्येदमुदाहरणं व्यर्थम्, गौः पयस्त्यजति गवा पयस्त्याजयतीत्यर्थे पूर्वसूत्रेणैव कर्मत्वसिद्धेरिति वाच्यम् । व्यापारद्वयस्य धात्वर्थत्वे पूर्वसूत्रेण कर्मत्वसिद्धावप्येकव्यापारार्थकत्वे एतत्सूत्रोदाहरणत्वसम्भवात् । तत्र गोपदस्यान्यविवक्षायामनेन

कर्मत्वम्, अपादानत्वविवक्षायां तु पञ्चम्येव, पयसि गोरन्वये षष्ठी, द्विकर्मकेषु गवादीनां कर्मत्वाऽविवक्षया क्रियायामन्वये न षष्ठी, अनभिधानात् षष्ठ्यन्तस्य स्वान्वययोग्यानाम-समभिव्याहारे एवान्वयस्योत्सर्गतो व्युत्पत्तेश्च। देवदत्तकर्तृकं पयःकर्मकं गोसम्बन्धि दोहनमिति बोधे पञ्चमी। देवदत्तकर्तृकं गोसम्बन्धि पयःकर्मकं दोहनमिति बोधे गोशब्दा-त्षष्ठीति बोध्यम्।

बलिं याचते वसुधामिति—स्वीकाराऽनुकूलव्यापारः परस्वत्वनिवृत्तिस्वस्वत्वो-त्पत्त्युभयाऽनुकूलव्यापारो वा याचतेरर्थः। स्वत्वे बलेर्निरूपकत्वसम्बन्धेनान्वयेऽनेन कर्म-त्वम्। पूर्वविषयस्य कस्याऽप्यभावेनाऽप्राप्तिपूर्विकाऽविवक्षा बोध्या। नचाऽपादानत्वस्य प्रसक्त्या कथमप्राप्तिपूर्विकाऽविवक्षेति वाच्यम्। विभागस्योक्तधात्वर्थत्वाऽभावेनाऽपादा-नत्वाऽप्रसक्तेः। उक्तं हि भाष्ये–( न हि याचनादेवाऽपायो भवति याचितोऽसौ यदि ददाति तदाऽपायेन युज्यते ) इति। असंकीर्तितपर्यायस्याऽकथितशब्दस्य ग्रहणे गां दोग्धि गोर्दोग्धि इति च याचिपृच्छिभिक्षयोगे कर्मसंज्ञैवेत्येषां व्यवस्थेति सिद्धान्ते कैयटोक्तिश्च। बलेर्वसुधानिष्ठस्वनिरूपितस्वामित्वात्मकसम्बन्धात्कर्मयुक्तत्वादनेन कर्मत्वमिति भावः॥

अविनीतं विनयं याचत इति–इदमवश्यं करिष्यामीति शब्दप्रयोगजनकविशेष-रूपस्वीकाराऽनुकूलव्यापारोऽत्र याचेरर्थः। फलतावच्छेदकसम्बन्धश्चात्र विषयतेति अवि-नीतस्य विनयेन सह स्वविषयकज्ञानवत्त्वसम्बन्धेन कर्मयुक्तत्वात्कर्मत्वम्॥

तण्डुलानोदनं पचतीति—विक्लित्त्यनुकूलव्यापारो हि पच्धात्वर्थः। वस्तुतस्तु (द्व्यर्थः पचिरि)ति भाष्याद्विक्लेदनं निर्वर्त्तनं च धातोरर्थः तण्डुलान्विक्लेदयन्नोदनं निर्व-र्त्तयतीति वाक्यार्थः। तण्डुलकर्मकविक्लित्तिपूर्वकौदनकर्मकं निर्वर्त्तनमिति बोधः। तथा च पच्धात्वर्थस्योक्तरूपत्वाकर्त्तुरित्यनेनैव कर्मत्वसिद्धावस्यैतत्सूत्रोदाहरणत्वं चिन्त्यम्॥

गर्गान् शतं दण्डयतीति—बलात्कारपूर्वकपरस्वत्वनिवृत्तिपूर्वकस्वस्वत्वोत्पत्त्य-नुकूलव्यापारो दण्डयतेरर्थः। वस्तुतस्तु स्वसम्प्रदानानुकूलव्यापाराऽनुकूलशासनरूपो धा-त्वर्थः। तथा च व्यापारद्वयार्थकदण्डयादिधातुयोगेऽपि पूर्वसूत्रेणैव कर्मत्वसिद्धाविदमप्ये-तत्सूत्रोदाहरणं चिन्त्यमेव। एवं व्यापारद्वयार्थकत्वेन सति प्रयोगे बहूनां धातूनां द्विक-र्मकत्वं बोद्धयम्॥

व्रजमवरुणद्धि गामिति—निर्गमप्रतिबन्धपूर्वकयत्किञ्चिदधिकरणकचिरस्थित्य-नुकूलव्यापारोऽवरुधेरर्थः। व्रजे गौस्तिष्ठति तत्र तां निर्गमप्रतिबन्धपूर्वकं चिरं स्थापय-तीति प्रतीतेः। तथाचैकाश्रयको गोवृत्तिनिर्गमप्रतिबन्धानुकूलो व्रजसम्बन्धीति बोधः। अधिकरणत्वाऽविवक्षायामनेनात्र कर्मत्वम्। व्यापारद्वयस्य धात्वर्थत्वे पूर्वसूत्रेणैव कर्मत्वम्॥

माणवकं पन्थानं पृच्छतीति—जिज्ञासाविषयीभूतार्थज्ञानानुकूलः केन पथा गन्तव्यमित्यभिलापादिरूपो व्यापारः पृच्छतेरर्थः। ज्ञानविषयत्वात्पथः कर्मत्वं माणवकेन च पथः स्वज्ञानाश्रयत्वरूपः सम्बन्धः। (नहि प्रश्नादेवाऽपायो भवति पृष्टोऽसौ यदा व्या-चष्टे तदापायेन युज्यत) इति भाष्योक्त्या नात्राऽपादानत्वविवक्षेति बोध्यम्। न च सम्प्र-दानत्वस्यैव विवक्षाऽस्त्विति वाच्यम्। कर्मसम्बन्धविषयेच्छाविषयत्वाऽभावेन तद्विव-

क्षाया असम्भवात् । अत्रापि व्यापारद्वयार्थकत्वे कर्तुरिति सूत्रेण कर्मत्वं बोद्धव्यम् । पथ-विषयकजिज्ञासाविषयकमाणवकवृत्तिज्ञानाऽनुकूलो देवदत्तकर्तृको व्यापार इति बोधः ।

**वृक्षमवचिनोति फलानीति**—अत्र ग्रहणाऽनुकूलव्यापारोऽवचिनोतेरर्थः । तथा च फलवृत्तिग्रहणाऽनुकूलव्यापारो देवदत्तवृत्तिरिति बोधः । **शेखरकारस्तु**—वृक्षात्फला-न्यादत्ते इत्यर्थाद्विभागपूर्वकदानस्य धात्वर्थत्वमभ्युपगच्छति । अपादानत्वाऽविवक्षाया-मनेन कर्मत्वम् ।

**माणवकं धर्मं ब्रूते इति**—ज्ञानाऽनुकूलः शब्दप्रयोगरूपो व्यापारो ब्रूधात्वर्थः । एवञ्च देवदत्तवृत्तिः शिष्यसम्बन्धी धर्मविषयकज्ञानजनको व्यापार इति बोधः । केचित्तु—वदिवचिब्रुवि–उपदिशि–याचतीनां प्रतिपत्त्यवच्छिन्नव्यापारोऽर्थः । शिष्यनिष्ठप्रतिपत्तौ शिष्यस्याधेयत्वसम्बन्धेनाऽन्वयः । तत्रैव धर्मस्य विषयतासम्बन्धेनान्वयः । तथा च धर्मविषयिणी या शिष्यनिष्ठा प्रतिपत्तिस्तदनुकूलो देवदत्तवृत्तिव्यापार इति बोध इत्याहुः ॥

**माणवकं धर्मं शास्तीति**—प्रवृत्तिपर्यवसायी ज्ञानाऽनुकूलः शब्दप्रयोगरूपो व्यापार एव शासुधात्वर्थः । एवं च शिष्यसम्बन्धी प्रवृत्तिपर्य्यवसायी धर्मप्रतिपादकशब्दकर्मको-च्चारणानुकूलो देवदत्तवृत्तिर्व्यापार इति बोधः । प्रवृत्तिपर्य्यवसायी च धर्मं कुरु इत्यादिवि-धिघटितोपदेशरूपो बोध्यः । फलतावच्छेदकः सम्बन्धश्चात्र विषयता । माणवकस्य वचना-दिकर्मणा धर्मेणेच्छाविषयीभूतत्वात्सम्प्रदानत्वं तस्याविवक्षणेऽनेन कर्मत्वं बोध्यम् । कर्तृ-व्यापारोत्तरं माणवकस्य धर्मेण स्वविषयकज्ञानाश्रयत्वरूपः सम्बन्ध इति ॥

**शतं जयति देवदत्तमिति**—अनेकव्याजपूर्वकोऽन्यस्वत्वनिवृत्तिपूर्वकः स्वस्वत्वो-त्पत्त्यनुकूलो व्यापारो जिधात्वर्थः ॥

**सुधां क्षीरनिधिं मथ्नातीति**—दण्डग्रहणपूर्वकोऽन्तर्गतसारभागोत्थानाऽनुकूलव्या-पारो मन्थेरर्थः । उत्थानञ्चात्रोर्द्ध्वदेशसंयोगः ॥

**देवदत्तं शतं मुष्णातीति**—धनस्वाम्यज्ञानपूर्वकग्रहणाऽनुकूलव्यापारोमुषधात्वर्थः । अत एव विभागस्य धात्वर्थान्तर्भावे देवदत्तस्याऽपादानत्वं तदविवक्षायामनेन कर्मत्वम् ॥

**ग्राममजां नयति हरति कर्षति वहति वेति**—उत्तरदेशसंयोगानुकूलव्यापारा-नुकूलव्यापारो णिधात्वर्थः । स्कन्धग्रहणपूर्वक उक्तधात्वर्थ एव वहधात्वर्थः । गत्यनुकूल-व्यापारविशेषः कृषतेरर्थः । बलाद्ग्रहणपूर्वकं देशान्तरप्रापणं हृधात्वर्थः । एषामुक्तार्थे कर्तु-रित्येव कर्मत्वम् । एवञ्च ग्रामसम्बन्धी अजानिष्ठोत्तरदेशसंयोगाऽनुकूलव्यापारो देवदत्तवृ-त्तिरिति बोधः । एवं भारं वहतीत्यादावपि बोध्यः ॥

**अर्थनिबन्धनेयं संज्ञेति**—अकथितञ्चेत्यनेन या संज्ञा साऽर्थनिबन्धनाऽर्थनिमित्ति-का, न तु स्वरूपाऽऽश्रया स्वरूपनिमित्तिकेति तदर्थः । नचैतत्सूत्रविहितकर्मसंज्ञाया अर्थ-निमित्तकत्वे किम्प्रमाणमिति वाच्यम् । तद्राजसूत्रस्थभाष्यकैयटयोरेव प्रमाणत्वात् । तत्र हि, ( अहमपीदमचोद्यं चोद्ये ) इत्युक्तम् । असौ अस्मान्मामचोद्यं चोदयतीति तद-र्थः । तत्र पृच्छिपर्य्यायस्य चुदेरपि द्विकर्मकत्वं दृश्यते उक्तसंज्ञायाः स्वरूपनिमित्तकत्वे उक्तभाष्यकैयटौ व्याकुप्येयाताम् । चोद्ये इत्यत्र कर्मणि प्रत्यये अस्मच्छब्दात्प्रथमा इदम् शब्दाद्द्वितीया, अत एव 'मारीचमुच्चैर्वचनं महार्थम्' इति भट्टिकाव्यप्रयोगोपपत्तिरिति प्राञ्चः ।

शेखरकृतस्तु—परिगणिताऽतिरिक्तानां परिगणितधातुसमानार्थकानां येषां धातूनां द्विकर्मकत्वमिष्टं तेषां व्यापारद्वयार्थकत्वात्कर्त्तुरित्येव कर्मत्वसिद्धौ सञ्ज्ञाया अर्थनिमित्तकत्वमनादेयम्। अत एव, न 'आख्यातोपयोगे'इति सूत्रस्थभाष्यपरिगणनभङ्गापत्तिः। तस्या अर्थनिमित्तकत्वे तु भाष्योक्तपरिगणनस्य स्पष्टैवाऽसङ्गतिः, तत्समानार्थकानामन्येषामपि द्विकर्मकत्वात्। किञ्चोभयार्थकयाचिग्रहणेनैव बलिं भिक्षते वसुधामित्यादावपि कर्मत्वसिद्धौ परिगणने भिक्षधातुग्रहणस्य वैयर्थ्यापत्तेश्चेत्याहुः ॥

अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यमिति—वार्त्तिकम्। सत्यकर्मकधातुयोगे देशकालभावगन्तव्याध्ववाचकशब्दानां कर्मसंज्ञा वक्तव्येति तदर्थः। अकर्मकधातूनां स्वार्थकरणकव्यापने शक्तिस्तथा च स्वार्थकरणकव्याप्त्यनुकूलव्यापार इत्यर्थे मासमास्ते इत्यादौ व्याप्तिरूपफलाश्रयत्वान्माणवकस्य कर्त्तुरिति कर्मत्वम्। देवदत्तकर्तृकासनकरणकमाससम्बन्धिव्याप्त्यनुकूलव्यापार इति बोधः। अत्र देशपदेन देशत्वाऽवान्तरधर्मवान् कुरुपञ्चालादिरेवगृह्यते न तु सामान्यतो देशः, नवा ग्रामत्वादिना ग्रामः। अत एव कुरून् स्वपिति तिष्ठति वेति प्रयोगो भवति, न भवति देशं ग्रामं वा स्वपिति तिष्ठति वेति प्रयोगः। कालपदेन च कालत्वाऽवान्तरधर्मवान् माससम्वत्सरादिरेव गृह्यते न तु सामान्यतः कालः। एवञ्च मासं सम्वत्सरं वाऽऽस्ते इति प्रयोगो भवति न कालमास्त इति। भावपदेन च गोदोहनादिरेव न तु तदतिरिक्तः, तेन गोदोहमास्ते इति प्रयोगः। न च गोदोहादिशब्दस्य कालार्थकत्वात्कालग्रहणेनैवोक्तप्रयोगोपपत्तौ भावग्रहणं व्यर्थमिति वाच्यम्। घञन्तेन प्रतिपाद्यमानस्यापि कालस्य कर्मत्वं भवतीति प्रपञ्चार्थत्वेन भावग्रहणस्य साफल्यात्। अध्वपदेनाध्वत्वाऽवान्तरधर्मवतः क्रोशयोजनादेरेव ग्रहणं न तु सामान्यतोऽध्वनः। तेन क्रोशं योजनं वाऽऽस्ते देवदत्त इति भवति नतु अध्वानमास्ते इति।

प्राचीनोक्तं प्रकृतवार्तिकस्य कर्मसंज्ञाविधायकत्वं खण्डयति। भाष्ये कर्मसञ्ज्ञाविधायकत्वेनादृष्टत्वान्नास्य कर्मसंज्ञाविधायकत्वम्। नचास्य वचनस्यैवोक्तसंज्ञाविधायकत्वमस्तीति वाच्यम्। अकर्मकधातुप्रकृतिकण्यन्ताः कथं द्विकर्मका इति पूर्वपक्षे जाते।

"कालभावाऽध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्"।

देशश्चे, त्येवाकथितसूत्रे भाष्ये उक्तत्वात्। तत्र प्रसिद्धार्थकहिशब्दप्रयोगात्कालादिकर्म प्रसिद्धमेव पूर्वसूत्रबोधितमेवेति बोध्यते। नच हिशब्दस्य वाक्यालंकारार्थत्वादुक्ताऽभिप्रायकत्वाऽभावेनास्य विधायकत्वे न किमपि प्रतिबन्धकमिति वाच्यम्। कालाऽध्ववाचकयोः कर्त्तुरित्येव कर्मत्वसिद्धौ कालाध्वानौ कर्मवदिति वार्त्तिकं व्यर्थमितिरीत्यास्य वार्त्तिकस्य प्रत्याख्याने घटं करोतीत्यादाविव प्राकृतमेवैतत्कर्म पूर्वसूत्रबोधितमेवेति 'कालाध्वनोः' इतिसूत्रस्थभाष्योक्तेरेव प्रतिबन्धकत्वात्। अस्याऽविधायकत्वादेव, समायां समायां विजायत इति विग्रहकथनपरस्य 'समां समां विजायते' इति सूत्रस्थभाष्यस्य सङ्गतिः। अन्यथाऽनेन द्वितीयाया एव साधुत्वात्तदसङ्गतिः। तस्मादुक्तप्रकारेणाऽकर्मकधातूनां कालादिकर्मत्वादद्विकर्मकत्वमित्येव तत्तात्पर्य्यमित्यलम् ॥

गतिबुद्धिप्रत्यवसानार्थेति—गत्यर्थकबुद्ध्यर्थकप्रत्यवसानार्थकशब्दकर्मकाऽक-

र्मकधातूनामनुत्पन्ने णिचि तस्य कर्तुरुत्पन्ने णिचि कर्मत्वमिति तदर्थः । शब्द-कर्मकेत्यत्र कर्मपदं कर्मकारकपरं न तु 'कर्तरि कर्मव्यतीहारे' इत्यत्रेव क्रिया-परं व्याख्यानात् । अत एव शब्दार्थकह्वायिक्रन्दिधात्वोरण्यन्तावस्थकर्तुर्ण्यन्तावस्थायां न कर्मत्वम् । णिच्पदं चात्रे हेतुमण्णिच एव बोधकं न तु स्वार्थणिचः । सूत्रघटकणिच्पदस्य हेतुमणिज्बोधकत्वादेव ( भक्षेरहिंसार्थस्य न) इति निषेधश्चरितार्थः । अन्यथा नित्यण्यन्त-स्य चौरादिकस्य भक्षेरण्यन्ताऽवस्थाऽसम्भवात्तत्कर्तुः कर्मत्वाऽप्राप्त्या निषेधो व्यर्थ एव स्यादिति भावः । ननु णिच्प्रकृतिकधात्वर्थव्यापारप्रयोज्यफलाश्रयस्येव णिजर्थव्यापार-प्रयोज्यफलाश्रयस्यापि कर्तुरित्येव कर्मत्वसिद्धौ गतिबुद्धीति सूत्रं व्यर्थमिति चेन्न । णि-जर्थव्यापारप्रयोज्यफलाश्रयाणां कर्मत्वं चेत्तर्हि गत्यर्थादिप्रकृतिकानामेवेति नियमार्थत्वेन तस्य सार्थक्यात् । तेन पाचयत्योदनं देवदत्तेनेत्यादौ न देवदत्तस्य कर्मत्वम् । पूर्वसूत्रे णि-जर्थव्यापारप्रयोज्यफलाश्रयातिरिक्तत्वेन संकोचेन सूत्रस्य स्वांशे चारितार्थ्यमिति । गती-त्यादि किमित्यादिना तदेवाऽनूद्यते इति बोध्यम् ॥

अण्यन्तानां किमिति । अयम्भावः, सूत्रेऽणीत्यस्याऽभावेन कर्तुः कर्मत्वमित्यर्थे गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्र इत्यादौ देवदत्तस्यापि कर्मत्वं दुर्वारम् , तत्सत्त्वे तु देवदत्तस्याऽण्यन्तावस्थायां कर्तृत्वाऽभावेन नोक्तापत्तिरिति । उक्तस्थले बोधस्तु यज्ञदत्तक-र्मकगमनाऽनुकूलदेवदत्तकर्तृकव्यापारानुकूलविष्णुमित्रकर्तृको व्यापार इति दिक् ॥

नियन्तृकर्तृकस्येति । ननु वहधातोर्वाहकर्तृकत्वान्नियन्तृकर्तृकत्वाऽभावेन निषेधप्रति-षेधोऽनुपपन्न इति चेन्न । नियन्तृकर्तृकण्यन्तप्रकृतिभूतस्य वहेरित्यर्थे तदुपपत्तेः । न च प्रा-पणार्थकस्य वहेर्गत्यर्थत्वाभावात्कर्मत्वाऽप्राप्त्या तन्निषेधवार्त्तिकारम्भो व्यर्थ इति वा-च्यम् । ग्रामं प्राप्त इत्यादौ गतिं विना ग्रामप्राप्त्यसम्भवादाक्षिप्तगत्याऽपि गत्यर्थत्वमि-त्यभिमानेन तदारम्भस्य सार्थक्यादिति ॥

ननु ( गतिबुद्धी ) तिसूत्रे बुद्धिपदेन ज्ञानस्य ग्रहणाच्चक्षुरादीन्द्रियजन्यज्ञानार्थकानां धातूनां बुद्ध्यर्थत्वात्सूत्रेणैव ( दृशेश्चेति ) वार्त्तिकोदाहरणस्यापि गतार्थत्वाद्वार्त्तिकं व्य-र्थमेवेत्याशङ्क्य समाधत्ते—सूत्रे ज्ञानसामान्यार्थानामेवेति । उक्तवार्त्तिकं व्यर्थं स-ज्ज्ञापयति गतिबुद्धीतिसूत्रे बुद्ध्यर्थपदेन ज्ञानसामान्यार्थानामेव ग्रहणं न तु ज्ञानविशेषा-र्थानामिति । एवञ्च सूत्रेण वार्त्तिकोदाहरणस्यागतार्थत्वात्तदावश्यकमिति स्वांशे चारि-तार्थ्यं जातं, फलञ्च ज्ञापनस्य स्मारयति घ्रापयति देवदत्तेनेत्यादौ देवदत्तस्य कर्मत्वाऽभा-वरूपमिति भावः ॥

ननु शब्दं करोतीत्यर्थे 'शब्दवैरकलहे'ति क्यङि तदन्ताण्णिचि शब्दायिधातोर्धात्वर्थे-नोपसंगृहीतस्य शब्दरूपकर्मणो धात्वर्थकुक्षिप्रविष्टत्वेनाऽकर्मत्वाद्गतिबुद्धीति सूत्रेण कर्म-संज्ञा दुर्वारेत्यत आह-शब्दायतेर्नेति । शब्दायधातोरणि कर्तुः णौ कर्मत्वं नेति तदर्थे शब्दाययति देवदत्तेन यज्ञदत्त इत्यादौ न देवदत्तस्य कर्मत्वापत्तिरिति दीक्षिताऽऽशयः ॥

नागेशास्तु—शब्दकर्मेत्यत्र कर्मपदस्य क्रियापरत्वे शब्दक्रियाणामित्यर्थेऽकर्मकत्वा-त्प्राप्तगतिसंज्ञावारणाय ह्वाययति शब्दाययति क्रन्दयतीनां कर्मत्वप्रतिषेधस्य भाष्यकृतो-क्तत्वाच्छब्दकर्मकाणामित्यर्थे [illegible] भावो शब्दरूपकर्मणो धात्वर्थेनोपसंगृहीत-

त्वेऽपि ह्वयतेरिव बहिर्भूतपुत्रादिकर्मणः सम्भवेन तदभावे विनिगमकाऽभावादकर्मकत्वाऽभावेन कर्मत्वाऽप्राप्त्या तन्निषेधार्थं वार्त्तिकमिदं व्यर्थमेवेत्याहुः ॥

ननु गतिबुद्धीति सूत्रेऽकर्मकपदस्य न विद्यते कर्म येषामित्यर्थे सकर्मकाणामपि कर्मणोऽविवक्षयाऽकर्मत्वाद्देवदत्तेन पाचयतीत्यादौ देवदत्तस्यापि कर्मत्वापत्तिरित्यत आह— **येषां देशकालादिभिन्नं कर्म न सम्भवतीत्यादि ।** अयम्भावः—नियमस्य सजातीयाऽपेक्षत्वात् गतिबुद्धीति सूत्रस्य सकर्मकधातुप्रकृतिकणिजर्थव्यापारप्रयोज्यफलाश्रयाणां कर्मत्वं चेत्तर्हि गत्यर्थादीनामेवेति नियमार्थत्वेनाऽऽसयत्सलिले पृथ्वीमित्यादौ पूर्वसूत्रेणैव कर्मत्वसिद्धौ सूत्रेऽकर्मकपदेन सामर्थ्याद्देशकालादिभिन्नकर्माऽभाववतो ग्रहणादवतरणदलोक्तप्रयोगस्थधातोर्देशकालाद्यतिरिक्तस्यौदनादिरूपकर्मणः सत्त्वेन तदविवक्षणेऽप्यकर्मकपदेनाऽग्रहणान्नोक्तापत्तिरशङ्काकलङ्ककणिकेति प्राञ्चः ॥

शेखरकृतस्तु–अविवक्षितकर्मकेभ्यो धातुभ्यः कृतपूर्वीकटमित्यादौ भाष्यकृता कैयटेन च भावे क्तादीनामङ्गीकारादत्र सूत्रे अर्मकपदेनाऽविवक्षितकर्मकाणामपि ग्रहणम् । 'णेरणाविं'ति सूत्रे कैयटेन निवृत्तव्यापाराल्लुधातोर्णिचि (१)लावयति केदारं देवदत्त इत्यादौ कर्मद्वितीयान्तकेदारस्य प्रयोगाच्चोक्तविधानामप्यकर्मकपदेन ग्रहणम् । नचाऽर्थान्तरे शक्त्या तस्याऽकर्मकत्वं न त्वविवक्षयेति वाच्यम् । (२)तत्त्वप्रत्यभिज्ञयाऽर्थान्तरत्वाभावेन तत्र शक्तेर्वक्तुमशक्यत्वात् । अर्थान्तरे वृत्तेरित्यस्योदाहरणन्तु नदी स्यन्दते इत्याद्यर्थकं नदी वहतीत्यादीत्याकरे स्पष्टम् । कर्मणः शेषत्वविवक्षयाऽकर्मकत्वेन मातुः स्मर्य्यत इत्यादौ भावे ल्स्य 'अधीगर्थे'ति सूत्रे भाष्ये उदाहृतत्वेनाऽविवक्षितकर्मकाणामप्यकर्मकाणामप्यकर्मकपदेन ग्रहणमित्याहुरित्यलम् ॥

ननु (एष्वर्थेष्वभिनिविष्टानामि)ति समर्थसूत्रस्थभाष्यप्रयोगात् 'अभिनिविशश्चे' त्यत्र 'परिक्रयणे सम्प्रदानमि'तिसूत्रादन्यतरस्यांग्रहणाऽनुवृत्तिरित्याह—**परिक्रयणे सम्प्रदानमित्यादि ।** सूत्रेऽविकृतरूपश्रवणादविकृताया अभिनिविशित्यानुपूर्व्या यत्र श्रवणं तत्रैव 'अभिनिविशश्चे'त्यस्य प्रवृत्तिरिति कल्पनेनोक्तभाष्यप्रयोगे पापेऽभिनिवेश इत्यत्र चाऽऽपत्तिपरिहारादन्यतरस्यां ग्रहणाऽनुवृत्तौ व्यवस्थितविभाषाऽऽश्रयणे च प्रमाणाऽभावान्मूलोक्तमयुक्तमेवेति ।

नच—

निविशते यदि शूकशिखापदे सृजति सा कियतीमिव न व्यथाम् ।

इति नैषधीयपद्ये का गतिरिति वाच्यम् । अभिनिविशितिसंघातस्य विवक्षणेन तादृशसंघातपूर्वस्यैव विशतेराधारस्य कर्मत्वविधानेन तत्रोक्ताऽऽपत्तेरयोगादिति नागेशा इति दिक् ॥

ननु मशकार्थो धूम इत्यर्थ इव भाष्योक्तस्याश्रयर्थस्य नेत्यस्याऽशिनिवृत्यर्थस्य नेत्य-

---

(१) द्विधाभवनाऽनुकूलव्यापारो हि लुनातेरर्थः । तत्र व्यापारत्यागे लूयते केदारः स्वयमेव, पुनस्तस्यैव केदारस्य प्रयोज्यत्वविवक्षया लावयति केदारं देवदत्त इति भवति । अत्र सूत्रेऽकर्मकपदेनाऽविवक्षितकर्मकस्याग्रहणे स्पष्टैव तादृशप्रयोगाऽनुपपत्तिरिति भावः ॥

(२) फले पूर्वकालदृष्टफलाभेदप्रत्यभिज्ञा ... देवदत्तमिति तत्त्वप्रत्यभिज्ञेत्यर्थः ।

र्थस्तत्फलितमाह—अभुक्त्यर्थस्य नेति । भाष्ये तु एतस्योदाहरणस्य वने उपविश्य त्रिरात्रमुपवसतीत्यर्थाश्रयणादिदं प्रत्याख्यातम् । नचैवमुपोष्य रजनीमेकामित्यादौ का गतिरिति वाच्यम् । 'कालाध्वनोरि'त्यनेनैव तत्र द्वितीयोपपत्तेरित्यलम् ॥

उपपदविभक्तिमाह—उभसर्वतसाविति । उभसर्वयोस्तसौ उभसर्वतसौ उभांशे उभयशब्दनिष्ठप्रकृतिकत्वस्योभशब्दे आरोपादुभयशब्दप्रकृतिकत्वं षष्ठ्यर्थः । उपपदविभक्तीनां सम्बन्धोऽर्थ इति बोध्यम् । उभयशब्दसर्वशब्दप्रकृतिकतसन्तयोगे द्वितीयेति कारिकार्थः । धिगिति—धिक्शब्दयोगेऽपि द्वितीया कार्य्येति तदर्थः । धिक् कृष्णाऽभक्तमित्यस्य कृष्णाऽभक्तसम्बन्धिनिन्देत्यर्थः । आम्रेडितान्तेष्विति—कृतद्विर्वचनेष्वित्यर्थः । इदमुपर्य्यादिष्वित्यस्य विशेषणं तेन—

उपर्युपरिबुद्धीनां चरन्तीश्वरबुद्धयः ।

इत्यत्र न द्वितीयाप्रसक्तिः । उपरिबुद्धीनामुपरीत्यर्थेन तस्याम्रेडितान्तत्वाऽभावात् । ततोऽन्यात्राऽपीति—अन्यशब्दयोगेऽपि द्वितीयेति तदर्थः । तेन

फलति पुरुषाऽऽराधनमृते, आपार्ढी यावच्छुद्धः,
आरभ्य तस्यां दशमीं तु यावत्प्रपूजयेत्पर्वतराजपुत्र्याः ।

इत्यादिषु ऋते शब्दयोगे यावच्छब्दयोगे च द्वितीयासिद्धिरिति दिक् ॥

(१)जपमनुप्रावर्षदिति—लक्षणत्वञ्च ज्ञानजनकज्ञानविषयत्वम् । ज्ञानजन्यज्ञानविषयत्वं लक्ष्यत्वम्, तथा च जपस्य वर्षाज्ञानजनकज्ञानविषयीभूतत्वाल्लक्षणत्वेन तस्मिन्ननुद्योत्ये सति अनोः कर्मप्रवचनीयत्वेन तद्योगे लक्षणवाचकाज्जपशब्दाद्द्वितीया । जपाऽभिन्नहेतुज्ञानजन्यज्ञानविषयो वर्षणमिति बोधः ॥

ननु हेतुतृतीयायाश्च सावकाशत्वात्स्वस्वांशे लब्धाऽवकाशरूपतुल्यबलविरोधस्य सत्त्वाद्विप्रतिषेधसूत्रप्रवृत्त्या परत्वात्तृतीयाऽऽपत्या नदीमन्ववसितेति द्वितीयाघटितरूपं न स्यादित्याशंक्य समाधत्ते—परापि हेताविति तृतीयाऽनेन बाध्यत इति—लक्षणेत्थंभूताख्यानेति सूत्रेणैव सञ्ज्ञासिद्धावनुर्लक्षणे इत्यनेन पुनः संज्ञाविधानसामर्थ्यात्परस्या अपि तृतीयाया बाधेनोक्तप्रयोगोपपत्तौ न कापि बाधा दृष्टिगोचरीभूता भवतीति भावः । न च लक्षणेत्थम्भूताऽऽख्यानेति सिद्धसंज्ञाया जपमनुसिञ्चतीत्यत्र षत्वाऽभावसाधकत्वेन चारितार्थ्याद्द्वितीया विधायकत्वे मानाऽभावेन तदर्थमनुर्लक्षणे इत्यस्यावश्यकत्वात्पुनः संज्ञाविधानसामर्थ्यादिति कथनमनुपपन्नमिति वाच्यम् । लक्षणेत्थमिति सूत्रस्योपसर्गसंज्ञाबाधनेन चारितार्थ्येऽपि कर्मप्रवचनीयेति सूत्रे तदुपस्थित्या द्वितीयाप्राप्तेः सुलभत्वेन अनुर्लक्षणे इत्येतद्विहितसंज्ञाया निरवकाशत्वस्य स्पष्टत्वादिति दिक् ।

नदीमन्ववसितेति—नद्या सह सम्बद्धेत्यर्थः । तत्र तृतीयार्थोऽनुद्योत्यं साहित्यं तच्च प्रकृतेऽनुयोगित्वलक्षणमेव तथा च नद्यनुयोगिकसम्बन्धप्रतियोगित्ववती सेनेति बोधः॥

अपिः पदार्थेति—पदस्याऽप्रयुज्यमानपदान्तरस्याऽर्थः पदार्थः तद्द्योतकोऽपिः कर्मप्रवचनीयसंज्ञको भवतीत्यर्थः । सर्पिषोऽपीति—अत्राऽप्रयुज्यमानस्य बिन्दुरित्यादेः पदस्याऽर्थोऽपिद्योत्यः । सम्भावनायां लिङिति—'उपसंवादाऽऽशङ्कयोश्चे'ति सूत्रस्थभा-

(१) कदा बुद्ध इति कस्यचित्प्रश्ने तदुत्तरमिति बोध्यम् ।

ग्यपठितेन (उपसंवादाशङ्कयोर्लिङ्) इति वार्त्तिकेनेति भावः । तत्राऽऽशङ्कोत्प्रेक्षा, सम्भावनापि उत्कटकोटिकाऽऽशंकैव । अपेः कर्मप्रवचनीयत्वात्तद्द्योत्यसम्बन्धमाह, **तस्या एवेति**—सम्भावनाया एवेत्यर्थः । **विषयीभूते भवने इति** । प्रकृतार्थभवने इत्यर्थः । **कर्तुर्दौर्लभ्यमिति**—अत्र कर्तुर्दौर्लभ्यमिति षष्ठीतत्पुरुषो बोध्यः । स्वदौर्लभ्यप्रयुक्तदौर्लभ्यवत्त्वरूपसम्बन्धोऽपिद्योत्यः । बिन्दुना कर्तृत्वादुक्तसम्बन्धेन स्यात्पदवाच्यक्रियायामन्वीयते इत्यर्थः । तदाह—**अपिशब्दबलेनेत्यादि**—एवञ्च सर्पिरवयवबिन्दुदौर्लभ्यप्रयुक्तदौर्लभ्यवती तत्कर्तृका सम्भावनेति बोधः । नन्वेवं कर्मप्रवचनीयसंज्ञकापिद्योत्येऽर्थे सर्पिषोन्वयेन तस्य कर्मप्रवचनीययुक्तत्वाद्द्वितीया स्यादित्याशङ्क्य समाधत्ते—**द्वितीया तु नेह प्रवर्त्तत इति** । सर्पिषो बिन्दुना योगो, नत्वपिना । न च परम्परया तेनाऽपि योग एवेति वाच्यम् । कर्मप्रवचनीयद्योत्योक्तसम्बन्धेनाऽपिशब्देऽन्वयाऽभावात् । एवञ्च न द्वितीयाऽऽपत्तिः । कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगिवाचकाद्द्वितीयेत्यर्थे प्रकृतेऽपिद्योत्यस्योक्तसम्बन्धस्य बिन्दुः प्रतियोगी न ततो द्वितीया, स्पष्टप्रतिपत्त्यर्थमपिद्योत्यबिन्दोः प्रयोगेऽपि (उपपदविभक्तेरि)ति न्यायेन द्वितीयां बाधित्वा प्रथमैवेति । अपेः कर्मप्रवचनीयत्वे फलमाह—**अनुपसर्गत्वादिति**—अपेः कर्मप्रवचनीयत्वेनोपसर्गत्वाऽभावात् स्यादित्यत्र न षत्वमिति दिक् ॥

**कालाध्वनोः**—अत्यन्तसंयोगो निरन्तरं सम्बन्धः । स च गुणक्रियाद्रव्यैरभावेन च । तेन मासं भोजनाऽभाव इत्यादि सिद्धम् । गुणादिभिः कालाध्वनोरत्यन्तसंयोगे सति प्रत्यासत्त्या कालाऽध्ववृत्तिभ्यां द्वितीयेत्यर्थः । उदाहरणन्तु, मासमधीत इत्यादि । बुद्धिस्थयावदवयवसम्बन्धरूपा व्याप्तिर्द्वितीयार्थः । नचैकादश्यां रात्रौ जागृयादित्यादावपि द्वितीया दुर्वारेति वाच्यम् । अधिकरणत्वविवक्षणाद्द्वितीयाया अप्राप्तेः ॥

इति द्वितीया ॥

---

# अथ करणकारकप्रकरणम् ।

**स्वतन्त्रः कर्त्ता**—स्वातन्त्र्यञ्च, कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थाश्रयत्वम् । नचोक्तस्वातन्त्र्यलक्षणे कर्तृप्रत्ययसमभिव्याहार इति विशेषणं व्यर्थं तद्रहितलक्षणेनैवाऽभीष्टसिद्धेरिति वाच्यम् । कर्मप्रत्ययस्थले पक्वस्तण्डुलो देवदत्तेनेत्यादौ धात्वर्थस्य फलस्य प्राधान्यात्तदाश्रयस्य तण्डुलस्य कर्तृत्वापत्तेर्दुर्वारतया देवदत्तस्य तदनापत्त्या तदर्थमुक्तविशेषणस्य सार्थक्यात् । एवञ्च धात्वर्थव्यापाराश्रयत्वं स्वतन्त्रत्वमिति तल्लक्षणं फलितम् । नचैवं देवदत्तेन पाचयति यज्ञदत्त इत्यादौ णिजर्थव्यापाराश्रयस्य धात्वर्थव्यापाराऽऽश्रयत्वाऽभावात्कर्तृत्वं न स्यादिति वाच्यम् । णिचो द्योतकत्वेन द्वितीयव्यापारस्यापि धात्वर्थत्वात्तदाश्रयस्य यज्ञदत्तस्य कर्तृत्वे बाधकाऽभावात् । अथवा व्यापाराश्रयस्य भाष्योक्तस्याऽन्यानधीनस्य वा स्वतन्त्रत्वाच्च । नचाऽन्यानधीनस्य स्वतन्त्रत्वे णिजन्तस्थप्रयोज्यकर्तुः प्रयोजकाऽधीनत्वात्कर्तृत्वं न स्यादिति वाच्यम् । सर्वेषां स्वव्यापारे स्वतन्त्रत्वस्य निर्विवादत्वात् । नचैवं प्रयोज्यप्रयोजकव्यवहारो न स्यादिति वाच्यम् । उत्तरव्यापाराधीनत्वेनैव तद्व्यवहारोपपत्तेरिति दिक् ॥

साधकतमं करणम्-साधतमकमित्यस्य प्रकृष्टमित्यर्थः, तच्च यद्व्यापाराऽव्यवधानेन कार्य्यनिष्पत्तिस्तत्। उक्तञ्च-

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्॥

अथवा कारकान्तरनिष्ठव्यापारसम्बन्धावच्छिन्नक्रियाहेतुत्वाऽभावत्वे सति क्रियाहेतुत्वरूपम्। अथवा व्यापारत्वे सति कारणत्वं तत्त्वमिति॥

ननु क्रियते येनेति व्युत्पत्त्या करणल्युडन्तकरणेतिमहासंज्ञया करणपदादेव साधकत्वे लब्धे साधकपदस्यैव साधकतमार्थपरत्वादिष्टसिद्धौ तमब्ग्रहणं व्यर्थमित्याशङ्कते—तमब्ग्रहणं किमिति। उत्तरयति—गङ्गायां घोष इति। अयम्भावः, व्यर्थं तमब्ग्रहणं ज्ञापयति इति, इह कारकप्रकरणे शब्दसामर्थ्यगम्यप्रकर्षाऽऽश्रयणं न भवतीति। अत एव प्रत्युदाहरणीभूतोक्तप्रयोगे सप्तमीसिद्धिः। अन्यथाऽधिक्रियतेऽस्मिन्निति व्युत्पत्त्याऽधिकरणपदादाधारलाभे अधारपदस्य प्रकृष्टाधारपरत्वे तिलेषु तैलं दध्नि सर्पिरित्यादावेवाऽधिकरणसंज्ञया सप्तमी स्यान्नतु गङ्गायां घोष इत्यादावपीति। घोषाऽऽधारत्वस्य तीरधर्मस्य तीरे लक्षणया तथा प्रयोग इति बोध्यम्। न च महासंज्ञयोक्तार्थलाभासमर्थान्प्रत्याधारादिपदस्य चरितार्थत्वेन शब्दसामर्थ्यगम्यप्रकर्षत्याद्युक्तज्ञापनासम्भवात्प्रत्युदाहरणस्य का गतिरिरिति वाच्यम्। आधारपदे स्वरितत्वप्रतिज्ञया गौणाधारग्रहणस्य सुलभत्वादित्यलम्॥

रामेण वाणेन हतो वालीति—कर्तृत्वशक्तिमान्कर्तृक्रियाभावसम्बन्धश्च कर्तृतृतीयार्थः। करणत्वशक्तिमान् क्रियाकरणभावसम्बन्धश्च करणतृतीयार्थः। रामकर्तृकबाणकरणकप्राणवियोगाश्रयो वालीति बोधः॥

प्रकृत्यादिभ्य उपसंख्यानम्—एतद्विहिततृतीयाऽर्थोऽभेदोऽन्योऽपि। उक्तञ्च—

प्रकृत्यादिगणाज्जाता तृतीया तु तदात्मताम्।
अवच्छेदकतावृत्ति प्रकारत्वादि शंसति॥ इति।

प्रकृत्या चारुरित्यादितः स्वाश्रयाधिकरणयावत्कालवृत्तिचारुत्ववान्। प्रकृत्यभिन्नचारुत्ववानीति वा बोध्यः॥

दिवः कर्म च-ननु पूर्वसूत्रात्करणपदाऽनुवृत्त्यैव कर्मकरणयोर्विधानसिद्धौ चकारो व्यर्थ इति चेन्न। तस्य संज्ञाद्वयसमावेशार्थेन सार्थक्यात्। अत एव, अक्षैर्देवयते इत्यत्र परत्वात्तृतीया कर्मत्वाच्चाऽकर्मकत्वप्रयुक्तपरस्मैपदाऽभावश्च सिद्ध्यति। विप्रतिषेधशास्त्रबलात्तृतीयैवाऽत्र कर्मत्वकरणत्वेतिशक्तिद्वयं बोधयतीति बोद्धव्यम्। नचोभयसंज्ञाविधानं तृतीयान्तघटितप्रयोगस्य द्वितीयान्तघटितप्रयोगस्य च साधुत्वार्थमेव तत्रोक्तशास्त्रबलेन तृतीयैव चेद्द्वितीयान्तघटितप्रयोगस्याऽसाधुत्वमेव स्यादिति वाच्यम्। अक्षाणां फलाश्रयत्वसमानाऽधिकरणकर्मत्वविवक्षायामक्षान्दीव्यतीति द्वितीयान्तघटितप्रयोगस्य साधुत्वात्। न च दिवः साधकतमस्योभयसंज्ञाविधानेनाऽक्षाणां देवितेत्यादौ तृतीयाऽऽपत्तिरिति वाच्यम्। तृतीयातः परत्वात्कृद्योगलक्षणषष्ठ्या एव प्राप्तेः। नचैवं मनसा देव इत्यादावपि षष्ठ्या-

ग्यपठितेन (उपसंवादाशङ्कयोर्लिङ्) इति वार्त्तिकेनेति भावः । तत्राऽऽशङ्कोत्प्रेक्षा, सम्भावनापि उत्कटकोटिकाऽऽशंकैव । अपेः कर्मप्रवचनीयत्वात्तद्द्योत्यसम्बन्धमाह, तस्या एवेति—सम्भावनाया एवेत्यर्थः । विषयीभूते भवने इति । प्रकृतार्थभवने इत्यर्थः । कर्तुर्दौर्लभ्यमिति—अत्र कर्तुर्दौर्लभ्यमिति षष्ठीतत्पुरुषो बोध्यः । स्वदौर्लभ्यप्रयुक्तदौर्लभ्यवत्स्वरूपसम्बन्धोऽपिद्योत्यः । बिन्दुना कर्तृत्वादुक्तसम्बन्धेन स्यात्पदवाच्यक्रियायामन्वीयते इत्यर्थः । तदाह—अपिशब्दबलेनेत्यादि—एवञ्च सर्पिरवयवबिन्दुदौर्लभ्यप्रयुक्तदौर्लभ्यवती तत्कर्तृका सम्भावनेति बोधः । नन्वेवं कर्मप्रवचनीयसंज्ञकापिद्योत्येऽर्थे सर्पिषोऽन्वयेन तस्य कर्मप्रवचनीययुक्तत्वाद्द्वितीया स्यादित्याशङ्क्य समाधत्ते—द्वितीया तु नेह प्रवर्त्तत इति । सर्पिषो बिन्दुना योगो, नत्वपिना । न च परम्परया तेनाऽपि योग एवेति वाच्यम् । कर्मप्रवचनीयद्योत्योक्तसम्बन्धेनाऽपिशब्देऽन्वयाऽभावात् । एवञ्च न द्वितीयाऽऽपत्तिः । कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगिवाचकाद्द्वितीयेत्यर्थे प्रकृतेऽपिद्योत्यस्योक्तसम्बन्धस्य बिन्दुः प्रतियोगी न ततो द्वितीया, स्पष्टप्रतिपत्त्यर्थमपिद्योत्यबिन्दोः प्रयोगेऽपि (उपपदविभक्तेरि)ति न्यायेन द्वितीयां बाधित्वा प्रथमैवेति । अपेः कर्मप्रवचनीयत्वे फलमाह—अनुपसर्गत्वादिति—अपेः कर्मप्रवचनीयत्वेनोपसर्गत्वाऽभावात् स्यादित्यत्र न षत्वमिति दिक् ॥

कालाध्वनोः—अत्यन्तसंयोगो निरन्तरं सम्बन्धः । स च गुणक्रियाद्रव्यैरभावेन च । तेन मासं भोजनाऽभाव इत्यादि सिद्धम् । गुणादिभिः कालाध्वनोरत्यन्तसंयोगे सति प्रत्यासत्त्या कालाऽध्ववृत्तिभ्यां द्वितीयेत्यर्थः । उदाहरणन्तु, मासमधीत इत्यादि । बुद्धिस्थयावदवयवसम्बन्धरूपा व्याप्तिर्द्वितीयार्थः । नचैकादश्यां रात्रौ जागृयादित्यादावपि द्वितीया दुर्वारेति वाच्यम् । अधिकरणत्वविवक्षणाद्द्वितीयाया अप्राप्तेः ॥

इति द्वितीया ॥

---

## अथ करणकारकप्रकरणम् ।

स्वतन्त्रः कर्त्ता—स्वातन्त्र्यञ्च, कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थाश्रयत्वम् । नचोक्तस्वातन्त्र्यलक्षणे कर्तृप्रत्ययसमभिव्याहार इति विशेषणं व्यर्थं तद्रहितलक्षणेनैवाऽभीष्टसिद्धेरिति वाच्यम् । कर्मप्रत्ययस्थले पक्वस्तण्डुलो देवदत्तेनेत्यादौ धात्वर्थस्य फलस्य प्राधान्यात्तदाश्रयस्य तण्डुलस्य कर्तृत्वापत्तेर्दुर्वारतया देवदत्तस्य तदनापत्त्या तदर्थमुक्तविशेषणस्य सार्थक्यात् । एवञ्च धात्वर्थव्यापाराश्रयत्वं स्वतन्त्रत्वमिति तल्लक्षणं फलितम् । नचैवं देवदत्तेन पाचयति यज्ञदत्त इत्यादौ णिजर्थव्यापाराश्रयस्य धात्वर्थव्यापाराऽऽश्रयत्वाऽभावात्कर्तृत्वं न स्यादिति वाच्यम् । णिचो द्योतकत्वेन द्वितीयव्यापारस्यापि धात्वर्थत्वात्तदाश्रयस्य यज्ञदत्तस्य कर्तृत्वे बाधकाऽभावात् । अथवा व्यापाराश्रयस्य भाष्योक्तस्याऽन्यानधीनस्य वा स्वतन्त्रत्वाच्च । नचाऽन्यानधीनस्य स्वतन्त्रत्वे णिजन्तस्थप्रयोज्यकर्तुः प्रयोजकाऽधीनत्वात्कर्तृत्वं न स्यादिति वाच्यम् । सर्वेषां स्वव्यापारे स्वतन्त्रत्वस्य निर्विवादत्वात् । नचैवं प्रयोज्यप्रयोजकव्यवहारो न स्यादिति वाच्यम् । उत्तरव्यापाराधीनत्वेनैव तद्व्यवहारोपपत्तेरिति दिक् ॥

**साधकतमं करणम्**—साधतमकमित्यस्य प्रकृष्टमित्यर्थः, तच्च यद्व्यापाराऽव्यवधानेन कार्य्यनिष्पत्तिस्तत् । उक्तञ्च—

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम् ॥

अथवा कारकान्तरनिष्ठव्यापारसम्बन्धावच्छिन्नक्रियाहेतुत्वाऽभावत्वे सति क्रियाहेतुत्वरूपम् । अथवा व्यापारत्वे सति कारणत्वं तत्त्वमिति ॥

ननु क्रियते येनेति व्युत्पत्त्या करणल्युडन्तकरणेतिमहासंज्ञया करणपदादेव साधकत्वे लब्धे साधकपदस्यैव साधकतमार्थपरत्वादिष्टसिद्धौ तमब्ग्रहणं व्यर्थमित्याशङ्कते—तमब्ग्रहणं किमिति । उत्तरयति—गङ्गायां घोष इति । अयम्भावः, व्यर्थं तमब्ग्रहणं ज्ञापयति इति, इह कारकप्रकरणे शब्दसामर्थ्यगम्यप्रकर्षाऽऽश्रयणं न भवतीति । अत एव प्रत्युदाहरणीभूतोक्तप्रयोगे सप्तमीसिद्धिः । अन्यथाऽधिक्रियतेऽस्मिन्निति व्युत्पत्त्याऽधिकरणपदादाधारलाभे अधारपदस्य प्रकृष्टाधारपरत्वे तिलेषु तैलं दध्नि सर्पिरित्यादावेवाऽधिकरणसंज्ञया सप्तमी स्यान्नतु गङ्गायां घोष इत्यादावपीति । घोषाऽऽधारत्वस्य तीरधर्मस्य तीरे लक्षणया तथा प्रयोग इति बोध्यम् । न च महासंज्ञयोक्तार्थलाभासमर्थान्प्रत्याधारादिपदस्य चरितार्थत्वेन शब्दसामर्थ्यगम्यप्रकर्षत्याद्युक्तज्ञापनासम्भवात्प्रत्युदाहरणस्य का गतिरिति वाच्यम् । आधारपदे स्वरितत्वप्रतिज्ञया गौणाधारग्रहणस्य सुलभत्वादित्यलम् ॥

**रामेण बाणेन हतो वालीति**—कर्तृत्वशक्तिमान्कर्तृक्रियाभावसम्बन्धश्च कर्तृतृतीयार्थः । करणत्वशक्तिमान् क्रियाकरणभावसम्बन्धश्च करणतृतीयार्थः । रामकर्तृकबाणकरणकप्राणवियोगाश्रयो वालीति बोधः ॥

**प्रकृत्यादिभ्य उपसंख्यानम्**—एतद्विहिततृतीयाऽर्थोऽभेदोऽन्योऽपि । उक्तञ्च—

प्रकृत्यादिगणाज्जाता तृतीया तु तदात्मताम् ।
अवच्छेदकतावृत्ति प्रकारत्वादि शंसति ॥ इति ।

प्रकृत्या चारुरित्यादितः स्वाश्रयाधिकरणयावत्कालवृत्तिचारुत्ववान् । प्रकृत्यभिन्नचारुत्ववानीति वा बोधः ॥

**दिवः कर्म च**—ननु पूर्वसूत्रात्करणपदाऽनुवृत्त्यैव कर्मकरणयोर्विधानसिद्धौ चकारो व्यर्थ इति चेन्न । तस्य संज्ञाद्वयसमावेशार्थेन सार्थक्यात् । अत एव, अक्षैर्देवयते इत्यत्र परत्वात्तृतीया कर्मत्वाचाऽकर्मकत्वप्रयुक्तपरस्मैपदाऽभावश्च सिद्ध्यति । विप्रतिषेधशास्त्रबलात्तृतीयैवाऽत्र कर्मत्वकरणत्वेतिशक्तिद्वयं बोधयतीति बोद्धव्यम् । नचोभयसंज्ञाविधानं तृतीयान्तघटितप्रयोगस्य द्वितीयान्तघटितप्रयोगस्य च साधुत्वार्थमेव तत्रोक्तशास्त्रबलेन तृतीयैव चेद्द्वितीयान्तघटितप्रयोगस्याऽसाधुत्वमेव स्यादिति वाच्यम् । अक्षाणां फलाश्रयत्वसमानाऽधिकरणकर्मत्वविवक्षायामक्षान्दीव्यतीति द्वितीयान्तघटितप्रयोगस्य साधुत्वात् । न च दिवः साधकतमस्योभयसंज्ञाविधानेनाऽक्षाणां देवितेत्यादौ तृतीयाऽऽपत्तिरिति वाच्यम् । तृतीयातः परत्वात्कृद्योगलक्षणषष्ठ्या एव प्राप्तेः । नचैवं मनसा देव इत्यादावपि षष्ठ्या-

पत्तिरिति वाच्यम्। कर्तरि कर्मण्येव कृद्योगषष्ठीविधानाद्धेतौ तद्विधानेन तत्राऽदोषात्। तत्र हेतुतृतीयान्तेन मनसेत्यनेन पचाद्यजन्तस्य देवशब्दस्य समासः (मनसः संज्ञायामि)-त्यनेन तृतीयाया अलुक्। न च दिवः साधकतमे कर्मत्वकरणत्वोभयशक्त्यङ्गीकारे कर्मणि प्रत्यये कृते करणत्वशक्तेरनुक्तत्वात्तृतीयाऽऽपत्त्याऽक्षान्दीव्यन्तामित्यादिप्रयोगो नैवोपपद्येतेति वाच्यम्। (अपादानमुत्तराणि कारकाणि बाधन्ते) इत्यस्योदाहरणभूते गां दोग्धीति प्रयोगे कर्मणि प्रत्यये कर्मत्वशक्तेरुक्तत्वेऽप्यपादानत्वशक्तेरनुक्तत्वेन प्राप्तपञ्चमीनिवृत्त्यर्थं द्रव्यगताऽनेकशक्तिमध्ये एकस्या अभिहितत्वेऽपरस्या अप्यभिहितवदवबोध इति न तत्र पञ्चमी इति भाष्योक्त्यैव तन्नत्यापत्तेरपि परिहारादित्यलम्॥

**अपवर्गे तृतीया**—अपवर्ग इत्यस्य फलप्राप्तावित्यर्थः। सत्यां फलप्राप्तौ प्रयोजनाऽभावादेव क्रियायामप्रवृत्तिरिति फलप्राप्तिशब्देन फलप्राप्तिपूर्वकस्त्याग उच्यते। तथा च-फलप्राप्तिपूर्वके क्रियात्यागे द्योत्ये सति कालाऽध्वनोरत्यन्तसंयोगे प्रत्यासत्त्या कालाऽध्ववाचकाभ्यां तृतीयेत्यर्थः॥

**सहयुक्तेऽप्रधाने**—ननु सहेनाऽप्रधाने इत्येव सिद्धे युक्तग्रहणं व्यर्थमिति चेन्न। तस्य सहशब्दयोग एव न, किन्तु तदर्थयोगेऽपि तृतीया भवतीत्यर्थकल्पनेन सार्थक्यादित्याशयेनाऽऽह मूले-सहार्थेनेति—अर्थयोगेऽपि तृतीयाविधानादेव शब्दयोगं विनाऽपि क्वचित्तृतीया भवतीत्याह—विनाऽपि तद्योगमिति—प्रमाणञ्चात्र (वृद्धो यूने) त्यादिनिर्देश एवेति। सहार्थः साहित्यं तच्च स्वसमभिव्याहृतक्रियादिसमानकालिकसमभिव्याहृतक्रियादिमत्त्वरूपम्। क्वचित्समानदेशक्रियावत्त्वमपि तत्। एतद्रूपसाहित्यस्य विवक्षणादेव तिलवापोत्तरं तत्रैव क्षेत्रे माषवापे तिलैः सह माषान्वपतीति सिद्ध्यति। पुत्रेण सहागतः पितेति नैतत्सूत्रोदाहरणं युक्तम्, पुत्रस्याऽऽगमनक्रियाकर्तृत्वादेव ततस्तृतीयासिद्धेः। एवञ्च पुत्रेण सह स्थूल इति मुख्यमुदाहरणं बोध्यम्। पुत्रकर्तृकागमनक्रियासमानकालिकागमनक्रियावान्पितेतिप्रथमवाक्याद्बोधः। पुत्रसम्बन्धिस्थौल्यसमानकालिकस्थौल्यवान्पितेति द्वितीयतो बोधः। एवम्—

सहैव दशभिः पुत्रैर्भारं वहति गर्दभी।

इत्यादितोऽपि पुत्रसम्बन्धिभारवहनसमानकालिकं गर्दभीकर्तृकं वहनमित्यादिक्रमेण बोधः। पुत्रेण सहागतः पितेत्यत्र प्रधानीभूतात्पितृशब्दात्तृतीयाव्यावृत्त्यर्थमेव सूत्रेऽप्रधानग्रहणं तत्राऽन्तरङ्गत्वात्प्रातिपदिकार्थमात्रे प्रथमैव चेदलमप्रधानग्रहणेन। न च पुत्रेण सह पितुरागमनमित्यादौ प्रथमाया अविषये पितुस्तदापत्तिस्तदवस्थैवेति वाच्यम्। (उपपदविभक्तेः कारकविभक्तिर्बलीयसी) तिन्यायेन (कर्तृकर्मणोः कृति) इत्यनेन तत्र षष्ठ्या एव विधानादिति दिक्॥

**येनाङ्गविकारः**—अङ्गमस्यास्तीत्यङ्ग अर्श आदित्वादच्। अङ्गस्य विकारोऽङ्गविकारः। अङ्गिनो विकार इति तदर्थः। प्रयोज्यत्वं षष्ठ्यर्थः। येनेति सर्वनाम्ना प्रकृत्यर्थभूतोऽवयवो लक्ष्यते। तत्राऽभेदस्तृतीयार्थः, तथा च, यदभिन्नाङ्गवृत्तिविकारप्रयोज्याङ्गिनो विकारो लक्ष्यते ततस्तृतीयेति सूत्रार्थः। अङ्गविकारः किमिति-अर्श आद्यजन्ताङ्गग्रहणं किमर्थमिति प्रश्नः। समाधत्ते-अक्षिकाणमस्येति-अयमभावः-अर्श आद्यजन्ताङ्गस्या-

ऽग्रहणे यदभिन्नाङ्गवृत्तिविकारो लक्ष्यते ततस्तृतीयेत्यर्थं प्रत्युदाहरणभूतोक्तप्रयोगे प्रथमां बाधित्वा तृतीयाऽऽपत्तिः, तद्ग्रहणसत्त्वे तु पूर्वोक्तार्थं नोक्तापत्तिः । अङ्गिनो विकारस्येष्टाऽलक्ष्यत्वात् । अक्ष्णा काण इत्यत्र तु तृतीया न स्यादङ्गवृत्तिविकारस्याऽलक्ष्यत्वात् । यद्यपि अक्ष्येव काणं तथापि, अवयवधर्मस्य काणत्वस्य समुदाये आरोपेण शरीरे शरीरावच्छिन्ने चात्मनि काणत्वव्यवहार इति बोध्यम् । नचाऽक्षिगतविकारवाचकस्यैव काणशब्दत्वेन प्रसिद्धत्वादर्थादेवाऽक्ष्णो लाभे तस्योक्तार्थानामिति न्यायेन प्रयोगाप्राप्त्याऽक्ष्णा काण इत्यस्य साधुत्वं न स्यादिति वाच्यम् । द्वौ विप्राविति वदुक्तप्रयोगसाधुत्वात् । अनेन प्रकारेणेदृशप्रयोगसाधुत्वे एतत्सूत्रमेव प्रमाणमित्यलम् ॥

**इत्थम्भूतलक्षणे**—इत्थंशब्दोऽत्र प्रकारमात्रपरः । प्राप्त्यर्थकाद्भूधातोः कर्तरि क्ते भूतशब्दो निष्पन्नः कर्मविभक्त्यन्तेनेत्थं शब्देन भूतशब्दस्य समासः । लक्षणशब्दोऽत्र करणसाधनः । लक्ष्यते येन तल्लक्षणमिति विग्रहः । कर्मषष्ठ्यन्तेनेत्थंभूतशब्देन लक्षणशब्दस्य समासः । तथा च कञ्चित्प्रकारं प्राप्तस्य लक्षणे द्योत्ये प्रत्यासत्त्या लक्षणवाचकात्तृतीयेत्यर्थः । **जटाभिस्तापस इति**—तापसत्वज्ञानजनकज्ञानं जटाज्ञानं तद्विषयत्वं जटाया इति तस्य लक्षणवाचकत्वेन ततस्तृतीयेति भावः । न च जटाभिस्तापसो ज्ञात इत्यर्थे ज्ञानक्रियायां जटानां करणत्वादेव तत उक्तविभक्त्युपपत्तावलमेतत्सूत्रेणेति वाच्यम् । करणत्वस्याऽविवक्षायां लक्ष्यलक्षणभावमात्रविवक्षायां तृतीयाविधानार्थमस्याऽऽवश्यकत्वात् । इत्थंभूतस्य यत्र लक्षणवाचकात्पृथगेवोपस्थितिर्भवति तत्रैवाऽनेन तृतीया विधीयते । अत एव कमण्डलुपदात्तृतीया न भवति । न च (सुपो धातुप्रातिपदिकयोरि)त्यनेन कमण्डलुपदादुत्पन्नायास्तृतीयाया लुकि न दोष इति वाच्यम् । समासे कृते तृतीयोत्पत्तिरिति तस्याः समासरूपप्रातिपदिकाऽनवयवत्वेन लुगनापत्त्या दोषस्य तादवस्थ्यादिति कैयटः ।

**शेखरकृतस्तु**—कमण्डलुः पाणौ यस्येति बहुव्रीहिः, कमण्डलुयुक्तपाणिरूपस्य कमण्डलुपाणित्वस्यैव लक्षणत्वेन (१)तस्यैव लक्षणवाचकत्वेन (२)तत एव तृतीयाऽऽपत्तिः । 'अनुर्लक्षणे' इति सूत्रे भाष्येऽप्युक्तमेतत् । तत्र हि, (सकृदसौ कमण्डलुपाणिश्छात्रो दृष्टस्तस्य तदेव लक्षणम्भवती)त्युक्तम् । तत्र तदेवेत्यस्य कमण्डलुपाणित्वमेवेत्यर्थः । कमण्डलोर्लक्षणत्वे तु कमण्डलुपाणिरेव लक्षणमित्यर्थकः स एव लक्षणमिति वदेत् । (३)कैयटमतेऽपि—तत्प्रदर्शितं तृतीयालुगनापत्तिरूपदूषणं तु न युक्तम् । कमण्डलुशब्दात्तृतीयाविधानेऽपि (तन्मध्यपतित)न्यायेन तस्याः समासरूपप्रातिपदिकत्वस्याऽक्षतत्वेन लुको दुर्वारत्वात् । (४)अत एव नरम्मन्य इत्यादौ (सुपोधात्वि)ति अमः कुतो न लुगित्याशंक्याऽम्विधानसामर्थ्यान्न लुगिति समाहितम्भाष्ये । कैयटमते तु अमः समासरूपप्रातिपदिकाऽनवयवत्वेन लुकोऽप्राप्त्या भाष्यकृत्कृतस्य शंकासमाधानस्य स्पष्टैवाऽसङ्गतिस्तस्मान्मदुक्तमेव ज्याय इत्याहुः ॥

ननु शास्त्रीयहेतोः कर्तृत्वाल्लौकिकहेतोश्च करणत्वात् तृतीयासिद्धौ (हेताविति) सूत्रं

---

(१) कमण्डलुपाणेरेवेत्यर्थः । (२) कमण्डलुपाणिशब्दादेवेत्यर्थः ।

(३) कैयटमतं खण्डयितुमाह—कैयटमतेऽपीति ।

(४) अमोऽनवयवत्वेन तृतीयायाः प्रातिपदिकावयवत्वादेवेत्यर्थः ।

व्यर्थमित्याशङ्क्य हेतुत्वकरणत्वयोर्भेदप्रदर्शनेन समाधत्ते—**द्रव्यादिसाधारणमिति**—आदिपदेन गुणक्रिययोर्ग्रहणं तथा च द्रव्यगुणक्रियाऽन्यतमत्वे सति नियतव्यापाररहितत्वं हेतुत्वम् । द्रव्याद्यन्यतमत्वे सति नियतव्यापारसहितत्वं करणत्वमिति लक्षणं पर्य्यवसितम् । हेतोरुदाहरणं दण्डेन घटः दण्डहेतुको घट इत्यर्थः । अत्र दण्डस्य व्यापारवत्त्वेऽपि [illegible]त्वाभावान्न करणत्वम् । करणस्योदाहरणं पुण्येन दृष्टो हरिः । पुण्यकरणकं हरिदर्शनमित्यर्थः । अत्र पुण्यस्य क्रियाजनकत्वेऽपि व्यापाररहितत्वमिति हेतुकरणयोर्भेदेन करणतृतीयया हेतुतृतीयाया अगतार्थत्वाद्धेताविति सूत्रमावश्यकमिति भावः ॥

ननु अलं श्रमेणेत्यादौ क्रियावाचकपदाऽसत्त्वेन क्रियाया अप्रतीत्या करणत्वाऽभावात्तृतीया न स्यादित्याशङ्क्य समाधत्ते—**गम्यमानापि क्रियेत्यादि**—श्रमेणेत्यादिपदजन्यबोधविषयाऽपीति तदर्थः । नतूच्चार्य्यमाणक्रियावाचकपदजन्यबोधविषयैवेति तदाशयः । [illegible] निषेधोऽर्थः । श्रमेण साध्यं नास्तीत्यर्थः । वाक्यैकदेशस्य प्रयोगेण साधनक्रियाम्प्रति श्रमस्य करणत्वात्तृतीयेति । न च साध्यमित्यर्थज्ञानेऽपि साध्यमित्यस्य श्रमेणेति सुबन्तार्थत्वेन क्रियात्वाऽभावात् कथं श्रमस्य करणत्वमिति वाच्यम् । साध्यमित्यत्र प्रकृतिभूतधात्वर्थं प्रति श्रमस्य करणत्वाक्षतेरिति दिक् ॥

**अशिष्टव्यवहारेति**—अशिष्टानां सङ्कीर्णाचाराणां यो व्यवहारः क्रिया तद्वाचकप्रयोगे प्रत्यासत्त्या यत्सम्बन्धेन व्यवहारस्य सङ्कीर्णाचारत्वं तद्वाचकात्प्रतिपदिकाच्चतुर्थ्यर्थे तृतीयेत्यर्थः । दास्या सम्प्रयच्छत इति । दासीसम्प्रदानकं रतिफलकं दानमिति बोधः ।

इति तृतीया ।

## अथ सम्प्रदानकारकप्रकरणम् ।

**कर्मणा यमभिप्रैति स सम्प्रदानम्**—कर्त्रा दाधात्वर्थक्रियाकर्मणा सम्बन्धेच्छाविषयीभूतो यः स सम्प्रदानमिति सूत्रार्थः । सम्यक् प्रदीयते अस्मै तत्सम्प्रदानमित्यन्वर्थसंज्ञाबलेन दानार्थकधातुयोग एवैतत्सूत्रप्रवृत्तिः । दाधात्वर्थश्च स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्त्यनुकूलव्यापाररूपः । अत एव रजकस्य वस्त्रं ददातीत्यत्र न चतुर्थी । अत्र दाधातुर्भाक्तः अधीनीकरणरूपेऽर्थे इति तदर्थः । दाधातुप्रयोग एव चतुर्थीविधानादेव, अजां ग्रामं नयति, हस्तं निदधाति वृक्षे इत्यादौ न चतुर्थी, इति वृत्तिकारमतम् । भाष्ये तु दानस्येति क्रियामात्रस्योपलक्षणम् , कर्त्रा क्रियामात्रकर्मणा सम्बद्धुमिष्यमाणस्य सम्प्रदानत्वमित्यर्थः । अत एव खण्डिकोपाध्यायः शिष्याय चपेटां ददातीति प्रयोगः सङ्गच्छते, अत एव च 'दाशगोघ्नौ सम्प्रदाने' इत्याद्यपि चरितार्थम् । अजाया ग्रामसम्बन्धो जायतामित्येवेच्छा न तु ग्रामेऽजासम्बन्धो जायतामित्याकारेच्छेति ग्रामस्याऽजारूपकर्मणा सम्बद्धमिष्यमाणत्वाऽभावान्न अजां ग्राममित्यादौ सम्प्रदानत्वाऽतिप्रसङ्गः । विप्राय गां ददातीत्यादौ सम्प्रदानत्वशक्तिमान् क्रियाकारकभावसम्बन्धश्च सम्प्रदानचतुर्थ्यर्थः कर्मणा सम्बन्धश्च स्वत्वादिरूपो बोध्यः । देवदत्तकर्तृकवृत्तिविप्रोद्देश्यकगोनिष्ठत्यागानुकूलव्यापार इति बोधः ।

कर्मणेति किम्—अयम्भावः-सूत्रे कर्मणेत्यनुपादाने कर्त्रा क्रियया सम्बद्धुमिष्य-माणस्य सम्प्रदानत्वमित्यर्थे विप्राय गां ददातीत्यादौ गोरूपकर्मणोऽप्युद्देश्यत्वात् अर्था-द्देवदत्तकर्तृवृत्तिदानक्रियया सम्बन्धेच्छाविषयीभूतत्वात्सम्प्रदानत्वापत्तिः । न च कर्मसं-ज्ञाया अनवकाशत्वाद् गोः कर्मसंज्ञैव स्यान्न सम्प्रदानसञ्ज्ञेति वाच्यम् । सम्प्रदानसंज्ञायाः कर्मसंज्ञया सह पर्यायतया विधानेन कर्मसंज्ञायाः सावकाशत्वात्तया सम्प्रदानसंज्ञाया अबा-धेन दोषस्य तादवस्थ्यात् ! अतः कर्मणेत्यस्योपादानमावश्यकं, सति तस्मिन् गोरूपो-द्देश्यत्वाऽभावात्तेनैव सम्बद्धुमिष्यमाणस्य सम्प्रदानत्वेन न तस्याऽऽपत्तिलेपोऽपीति दिक् ॥

यं स ग्रहणं किमिति—सूत्रेऽनयोरनुपादाने क्रियाकर्मणा योऽभिप्रैति ब्राह्मणादिः तस्यैव सम्प्रदानत्वापत्तिः । न च कर्तृसंज्ञाया निरवकाशत्वेन तयोक्तसंज्ञाबाधेन नाऽऽप-त्तिरिति वाच्यम् । अकर्मकधातुविषये कर्तृसंज्ञायाः सावकाशत्वेन तया सम्प्रदानसंज्ञाबा-धानापत्त्या पूर्वोक्ताऽऽपत्तेस्तादवस्थ्यात् । न च कर्त्तुः कर्तृत्वाऽभावेन गोः कर्मत्वमेव न स्यादिति वाच्यम् । कर्मसंज्ञायां कर्तृग्रहणस्य स्वतन्त्रोपलक्षणत्वेनादोषात् । अत एव सार्थाद्धीयते इत्यत्र कर्तुरपादानत्वेऽपि कर्मणि लकारसिद्धिः । एवञ्च यं स ग्रहणमावश्यक-मिति भावः ॥

ननु सूत्रे कर्मणेत्युक्तावकर्मकक्रियोद्देश्यस्य सम्प्रदानत्वं न स्यादित्यत आह—क्रि-यया यमभिप्रैति सोऽपि सम्प्रदानमिति—कर्मरहितक्रिययेति तदर्थः । सकर्मकेषु कर्मसंज्ञा सम्प्रदानसंज्ञाया बाधिका स्यादित्याह-पत्ये शेत इति—उद्देश्यत्वं चतुर्थ्यर्थः । पत्युद्देश्यकशयनकर्त्री पत्नीति बोधः । न च तादर्थ्यमुपकार्योपकारकभावरूपः सम्बन्धः । दानादयोऽपि सम्प्रदानत्वेनाऽभिप्रेतविप्राद्यर्था एवेति तादर्थ्यचतुर्थ्यैव सिद्धौ 'चतुर्थी स-म्प्रदाने' इदं सूत्रं व्यर्थमेवेति वाच्यम् । 'दाशगोघ्नौ सम्प्रदाने' इत्येतदर्थन्तस्याऽऽवश्य-कत्वात् । सम्प्रदाने कारके दाशगोघ्नाविति निपात्येते इति सूत्रार्थः । चतुर्थी सम्प्रदाने इत्यस्यासत्त्वे दाशगोघ्नाविति सूत्रे सम्प्रदानपदेन कारकग्रहणं न स्यादित्येतदर्थं तदावश्य-कमिति भावः । अत एव मूले दाशन्ति तस्मै दाशः । गां हन्ति तस्मै गोघ्नोऽतिथि-रिति तयोरर्थः प्रतिपादितः । न च दाशगोघ्नावित्यत्र सम्प्रदानशब्दस्य सम्यक् प्रदीयते यस्मै तत्सम्प्रदानमित्यर्थकल्पनया नैतत्सूत्राऽनुपपत्तिरिति वाच्यम् । उक्तरीत्योक्तसूत्राऽनु-पपत्तिपरिहारेण तदनावश्यकत्वेऽपि तत्सम्प्रदानकं दानमिति बोधार्थं 'चतुर्थी सम्प्रदाने' इत्य-स्यावश्यकत्वात् । सम्प्रदानसञ्ज्ञासत्त्वे विप्रसंप्रदानकं गोकर्मकं दानमिति बोधः । ताद-र्थ्यचतुर्थ्यां विप्रार्थं गोकर्मकं दानमिति बोध इत्येवमनयोर्भेदो बोध्यः ।

ननु अभिलषते रुचधातुसमानार्थकतया हरये रोचते भक्तिरित्यत्रेव हरिर्भक्तिमभिलष्य-तीत्यत्राप्यर्थग्रहणसामर्थ्यात्परामपि कर्मसञ्ज्ञां बाधित्वा सम्प्रदानसञ्ज्ञा कुतो नेत्याश-ङ्क्य समाधत्ते—अन्यकर्त्तृकोऽभिलाषो रुचिरिति । अभिलषतिकर्त्रपेक्षया यदन्य-दभिलषतिकर्म तत्कर्तृका रुचिरिति तदर्थः । यत्किञ्चिन्निष्ठप्रीत्यनुकूलप्रीतिव्यधिकरणव्या-पारो रुचधात्वर्थ इति फलितम् । यत्किञ्चिद्विषयकप्रीत्यनुकूलप्रीतिसमानाधिकरणव्यापारो-ऽभिलषतेरर्थः । तथाच हरये रोचते भक्तिरित्यत्र हरिनिष्ठप्रीत्यनुकूलप्रीतिव्यधिकरणव्यापा-रो भक्तिनिष्ठ इति सम्प्रदानसंज्ञा जाता । हरिर्भक्तिमभिलष्यतीत्यत्र तु भक्तिविषयकप्री-

तिसमानाधिकरणव्यापारो हरिनिष्ठ इत्युभयोः समानार्थकत्वाऽभावान्नाऽभिलपतियोगे सम्प्रदानसञ्ज्ञेति समाधातुराशयः। एवं समवायसम्बन्धावच्छिन्नप्रीत्यनुकूलप्रीतिव्यधिकरणव्यापारार्थकप्रीधातुयोगे हरिं प्रीणयति भक्तिरित्यत्रापि न सम्प्रदानसंज्ञा। रुचधातुसमानार्थत्वाभावात् प्रीयमाण इति निर्देशेन प्रीधातुयोगे तदभावकल्पनाच्चेत्यलम् ॥

प्रीयमाणः किम्। देवदत्ताय रोचते मोदकः पथीति—ननु प्रीयमाणपदाऽभावे क्रियाजनकत्वमात्रविवक्षायां सूत्रस्य चारितार्थ्यात्सम्प्रदानसंज्ञायां मन्दं प्रवृत्तस्य तस्य परत्वादधिकरणसंज्ञया बाधेन प्रत्युदाहरणेन काचिदनुपपत्तिरिति चेन्न। देवदत्तं रोचते मोदकः पथीत्यस्यापत्तिरिति प्रत्युदाहरणस्याशयात्। प्रीयमाणपदसत्त्वे तु कर्मसंज्ञाया अस्यापवादत्वेन न दोष इति भावः ॥

श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः—एषां धातूनां प्रयोगे बोधनेच्छाविषयीभूतः सम्प्रदानसंज्ञको भवतीत्यर्थः। बोधविषया स्तुतिः श्लाघतेरर्थः। गोपी स्मरात्कृष्णाय श्लाघते इति। स्मरादिति हेतौ पञ्चमी, तथाच-गोपीकर्तृका स्मरहेतुका कृष्णसम्प्रदानिकाऽर्थात्कृष्णबोधवृत्तिविषया स्तुतिरिति बोधः। बोधविषयमितरादर्शनयोग्यदेशस्थापनं न्हुतेरर्थः। आत्मानमित्यध्याहारः। तथा च-गोपीकर्तृका स्मरहेतुका कृष्णवृत्तिबोधविषया आत्मकर्मिका इतरादर्शनयोग्यदेशस्थापनाऽनुकूला क्रियेति बोधः। तिष्ठत इति। गोपीकर्तृका स्मरहेतुका कृष्णसम्प्रदानिका स्वाभिप्रायबोधाऽनुकूला स्थितिक्रियेति बोधः। शपत इति। गोपीकर्तृका स्मरहेतुका कृष्णसम्प्रदानिका स्वाऽभिप्रायबोधाऽनुकूला शपथक्रियेति बोधः।

शेखरकृतस्तु—स्तुत्यादिना बोधनं श्लाघादेरर्थः। तथाच स्तुत्या आत्मानुरागं कृष्णं बोधयतीत्यर्थः। एवं ह्नुत्या स्थित्या शपथेन च आत्मानुरागं कृष्णं बोधयतीत्यर्थः। यद्वा स्तुत्या ह्नुत्या च कृष्णं स्वसखीजनं बोधयतीत्यर्थः। एतत्सूत्रघटकज्ञीप्स्यमानपदे ण्यर्थकर्मणः प्रकृत्यर्थकर्मणश्च ग्रहणम्। श्लाघादेः स्तुत्यादिमात्रार्थकत्वे कृष्णं श्लाघते ह्नुत इत्येव, ज्ञीप्स्यमान इति ज्ञापनवचनाज्ज्ञपेः सन्नन्तात्कर्मणि शानजित्याहुः ॥

धारेरुत्तमर्णः—धारयतेः प्रयोगे उत्तमर्णः सम्प्रदानसंज्ञको भवतीत्यर्थः। अत्र सूत्रे धारेरिति धृङ् अवस्थाने इति ण्यन्तस्य ग्रहणम्, नतु ण्यन्तस्य धृञः तथा सति मोक्षस्य धृङ्धात्वर्थकर्तृत्वानापत्तेः, धृञः सकर्मकत्वेन मोक्षस्य कर्मत्वानापत्तेश्च, धृङो ग्रहणे तु तस्याऽकर्मकत्वादण्यन्तकर्तुर्मोक्षस्य 'णौ गतिबुद्धि' सूत्रेण कर्मत्वमुपपद्यते। भक्ताय धारयति मोक्षं हरिरिति। स्थापनानुकूलव्यापारोऽत्र धारिधात्वर्थः। तथा च भक्तसम्प्रदानको हरिकर्तृको मोक्षकर्मकाऽवस्थापनानुकूलव्यापार इति बोधः। ननु भक्तस्य कारकत्वाऽभावात्सम्प्रदानसंज्ञा न स्यादिति चेन्न। भक्ताऽसत्त्वे प्रेरणाया अभावात्प्रेरणाजनकत्वेन भक्तस्य कारकत्वाक्षतेः। ननु मोक्षस्य ऋणत्वे सत्येव भक्तस्य तत्स्वामित्वादुत्तमर्णत्वेन संप्रदानत्वं स्यात्परं मोक्षस्य ऋणत्वमेव न, ऋणं हि नाम यत्र सजातीयदानमङ्गीकृत्य परदत्तद्रव्यादानानन्तरं तदुत्तरकालिकगृहीतद्रव्यसजातीयद्रव्यदाननाश्योऽदृष्टविशेषः, प्रकृते मोक्षस्यैवंविधऋणत्वाऽभावेन भक्तस्योत्तमर्णत्वाऽसम्भवादिति चेन्न। अवश्यदेयत्वमात्रेण मोक्षेऽपि ऋणत्वव्यवहारस्य लाक्षणिकत्वात्। अत्र सूत्रे उत्तमर्णग्रहणाभावे देवद-

त्ताय शतं धारयति ग्रामे अत्र ग्रामस्याऽपि सम्प्रदानत्वापत्तिः । न च परत्वादधिकरणसंज्ञैव स्यादिति वाच्यम् । सत्येवमुत्तमर्णेऽपि हेतुसंज्ञापत्तेर्दुर्वारत्वात् । तस्मादुत्तमर्णग्रहणाऽभावे हेतुसंज्ञाया इवाऽधिकरणसंज्ञाया अप्यपवादभूतेयं सम्प्रदानसंज्ञा स्यादिति तद्व्यावृत्त्यर्थमुत्तमर्णग्रहणमिति दिक् ॥

**स्पृहेरीप्सितः**—अत्र सूत्रे ईप्सितपदमिच्छाविषयपरं तथा च स्पृहयतेः प्रयोगे इच्छाविषयः सम्प्रदानसंज्ञको भवतीत्यर्थः । पुष्पेभ्यः स्पृहयति । स्पृहयतिरिच्छामात्रवाची, फलावच्छिन्नेच्छावाची च । आद्ये सम्प्रदानत्वं तत्प्रागेवोदाहृतम् । अन्त्ये कर्मत्वं पुष्पाणि स्पृहयतीति यथा, इत्येवाह मूले—**प्रकर्षविवक्षायां तु परत्वात्कर्मसंज्ञेति** । फलाश्रयत्वेन विवक्षायामित्यर्थः । अस्य सूत्रस्य क्रियाजनकत्वमात्रविवक्षायां चारितार्थ्येन परत्वात्कर्मसंज्ञेति तद्भावः । पुष्पसम्प्रदानकेच्छेति चतुर्थीसमभिव्याहारे पुष्पकर्मकेच्छेति द्वितीयासमभिव्याहारे च बोधः । ननु स्पृहयतेः प्रयोगे सम्प्रदानत्वविधानात्—

कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति च ।

इत्यनुपपन्नमिति चेन्न । क्रियासम्बन्धित्वमात्रविवक्षायां षष्ठ्या तदुपपत्तेः ॥

**क्रुधद्रुहेर्ष्याऽसूयार्थानां यं प्रतिकोपः**—एषामर्थ इवाऽर्थो येषां ते तथोक्तास्तेषाम् । विषयतया क्रुधाद्यर्थानां धातूनां प्रयोगे तन्मूलभूतकोपसम्बन्धिनः सम्प्रदानसंज्ञेति तदर्थः । तेषु क्रुधद्रुहोरकर्मकत्वात्षष्ठ्यां प्राप्तायामितरयोः कर्मसंज्ञायां प्राप्तायां वचनमिदम् । क्रोधश्चाऽमर्षरूपो मनसो वृत्तिविशेषः उत्कर्षविरोधिधर्मारोपाऽनुकूलव्यापारात्मकः । द्रोहश्चाऽपकाररूपः । स च तदीयगुणे दोषत्वारोपाऽनुकूलव्यापाररूपः । इति क्रोधद्रोहयोर्भेदः । ईर्ष्या अक्षमा सा च परकीयपाण्डित्यादिगुणानामसहनं तच्च गुणादिज्ञानजन्यद्वेषात्मकम् । असूया च गुणेषु दोषतादात्म्यारोपः । इति द्रोहादस्य भेदः । हरये क्रुध्यतीत्यादि । हरिसम्प्रदानकः क्रोधः । हरिसम्प्रदानको द्रोहः । हरिसम्प्रदानिका ईर्ष्या । हरिसम्प्रदानिका असूयेति बोधः । ननु कुपक्रोधे इत्यनुशासनात्कोपस्यैव क्रोधपदार्थत्वात्क्रोधस्य कोपप्रभवत्वमनुपपन्नमिति चेन्न । वाक्चक्षुरादिविकारानुमेयप्ररूढकोपस्यैवाऽत्र क्रोधपदार्थत्वेन तस्य कोपप्रभवत्वोपपत्तेः । एवञ्च कोपक्रोधयोर्भेदान्न कुपधातुयोगे सम्प्रदानत्वम् । अत एव कुप्यति कस्मैचिदित्याद्यसाध्वेवेत्यलम् ॥

**तादर्थ्ये चतुर्थी**—तादर्थ्यमुपकार्योपकारकभावरूपः सम्बन्धः । तस्मिन् गम्यमाने उपकार्योपकारकवाचका चतुर्थीति तदर्थः । मुक्तये हरिं भजतीत्यादितो मुक्तिरूपोपकार्य्योपकारकं हरिकर्मकं भजनमित्यादिक्रमेण बोधः । उक्तरूपः सम्बन्धोऽनेकविधो ननु कार्य्यकारणभावरूप एव । अत एव ब्राह्मणाय दधीत्यादयोऽपि प्रयोगा उपपद्यन्ते । उक्तरूपतादर्थ्यस्य सम्बन्धत्वेन विवक्षायां षष्ठ्येव । स्पष्टमिदं गुरोरिदं गुर्वर्थमित्यत्र भाष्ये ॥

**क्लृपि सम्पद्यमाने च**—क्लृपीति सप्तमी नत्विका निर्देशः । अत्राऽर्थग्रहणं सम्पूर्वकस्य पद्यतेरुत्पत्त्यर्थः, तथाच क्लृप्त्यर्थकधातुयोगे उत्पद्यमानेऽर्थेवर्त्तमानाद्विकृतिवाचकात्प्रातिपदिकाच्चतुर्थीति वार्तिकार्थः । भक्तिर्ज्ञानाय कल्पते ज्ञानरूपेण परिणमते इत्यर्थः । अत एव प्रकृतिविकृत्योर्भेदविवक्षायां विकृतिवाचकाच्चतुर्थी तयोरभेदविवक्षायां तु परत्वात्प्रथमैव, भक्तिर्ज्ञानं कल्पते इत्यलम् ॥

क्रियार्थोपपदस्य च कर्मणि स्थानिनः—क्रिया अर्थः फलं यस्य तत्क्रियार्थं तेन स्ववाचकं लक्ष्यते क्रियाफलार्थवाचकमुपपदं यस्य स तथोक्तस्तस्य क्रियार्थोपपदस्य, अर्थश्च प्रत्यासत्त्या क्रियारूप एव गृह्यते स्थानिन्शब्दस्याऽप्रयुज्यमानवाचित्वमिति व्याकरणशास्त्रे प्रसिद्धं तथा च यत्फलितन्तदाह—क्रियार्था क्रिया उपपदं यस्येत्यादि। फलेभ्यो यातीत्यादितः फलकर्मकाऽऽहरणफलकं यानमित्यादिक्रमेण बोधः। यथा वाक्यार्थे वाक्यैकदेशप्रयोगस्थले प्रविश पिण्डीमित्यादौ तस्यैव पदस्य सकलवाक्यार्थशक्तत्वं तथा प्रकृतेऽस्य समुदायस्याऽऽहरणघटितोक्तार्थे शक्तिरेतच्छास्त्रबलादिति बोध्यम्। सूत्रे स्थानिन इत्युक्त्या तुमुनः प्रयोगे न चतुर्थी। पिण्डीमित्यादावप्रयुज्यमानभक्षणक्रियाकर्मणि चतुर्थीवारणाय क्रियार्थोपपदस्येति पदमिति दिक्॥

ननु 'नमः स्वस्ती'त्यनेन नमःशब्दयोगे चतुर्थीविधान्नमस्करोति देवानित्यादौ नमः शब्दयोगे चतुर्थी कुतो नेत्याशङ्क्य समाधत्ते—उपपदविभक्तेरिति। सहयुक्तेऽप्रधाने इति सूत्रस्थभाष्ये प्रधाने प्रथमां साधितुमप्रधानग्रहणं प्रत्याख्यातुञ्च वचनरूपेण पठितेयम्। नमः स्वस्तीत्यत्रत्ययोगग्रहणेन ज्ञापितेयमित्याहुः केचित्। क्रियाकारकयोः सम्बन्धोऽन्तरङ्गस्तन्निमित्तिका विभक्तिरन्तरङ्गा, उपपदार्थेन तु यत्किञ्चित्क्रियाकारकभावमूलकः सम्बन्ध इति तन्निमित्तिका विभक्तिरपि बहिरंगेत्येतन्मूलिकेयमित्याहुः—कैयटादयस्तन्न। नमस्करोति देवानित्यादौ क्रियाकारकभावेनैवान्वये परत्वाच्चतुर्थीमाशंक्याऽनया वारणस्य भाष्योक्तस्याऽसङ्गत्यापत्तेः। कारकविभक्तित्वञ्च क्रियाजनकत्वसमानाऽधिकरणकर्त्रादिषट्काऽन्यतमत्वम् (अभिहिते प्रथमे) ति वार्तिकस्वारस्यादन्याऽभिहिताऽनुद्भूतकर्त्राद्यन्यतमार्थत्वं प्रथमाया अपीति तस्या अपि कारकविभक्तित्वमित्यवसेयम्। यथा द्वावित्यादौ द्विशब्दादौविभक्तेश्चैकस्यैव द्वित्वस्य बोधस्तथैव देवदत्तः पचतीत्यादौ उभाभ्यां कर्तृभ्यामेकस्यैव कर्तृत्वस्य बोधो नतु कर्तृत्वबोधाऽऽवृत्तिरिति बोध्यम्—वस्तुतस्तु सूत्रेऽर्थवन्नमःशब्दस्य ग्रहणात्प्रकृतेऽर्थवन्नमःशब्दयोगाऽभावान्न चतुर्थीशङ्काकलङ्ककणिकावसर इति दिक्॥

मन्यकर्मण्यनादरे विभाषाऽप्राणिषु—अप्राणिष्वित्यस्य प्राणिवर्जेत्यर्थः। तच्च मन्यकर्मविशेषणं, तथाच प्राणिवर्जे मन्यतेः कर्मणि चतुर्थी वा स्यात्तिरस्कारे इति तदर्थः। तत्राऽनादर इत्यस्य तिरस्कारोऽर्थः। तथाहि—अनादरो नाऽऽदराऽभावमात्रमपि तु अधर्मादाविव नञो विरुद्धवाचित्वात्तिरस्कार इति। तत्राऽनादर इति मन्यकर्मविशेषणम्। तेनाऽनादरद्योतके मन्यतेः कर्मणीत्यर्थः फलितः। तिरस्कारश्च व्याख्यानादपकृष्टनिरूपितोपमेयत्वस्याप्यभावरूप उपमेयेऽत्र गृह्य तेनत्वपकृष्टसादृश्यरूपः; तत्प्रतीतिश्च नञ्समभिव्याहार एवेत्यलम्।

इति चतुर्थी।

---

## अथापादानकारकप्रकरणम्।

ध्रुवमपायेऽपादानम्—ध्रुगतिस्थैर्य्ययोरित्यस्मात्कुटादेः पचाद्यचि, ध्रुव स्थैर्य्ये इति पाठे तु इगुपधलक्षणे के वा निष्पन्नस्य [illegible] विभागजनक-

व्यापारोऽपायशब्दार्थः । तथा च-विभागजनकव्यापारे ध्रुवं स्थिरम्, उक्तव्यापाराऽनाश्रयमिति यावत् । यत्तदपादानसंज्ञकं भवतीति सूत्रार्थः। भाष्ये-माथुराः पाटलिपुत्रकेभ्य आढयतरा इत्यादौ बुद्धिपरिकल्पितमपादानमाश्रित्यैव पञ्चमीसाधनेन बुद्धिपरिकल्पितसम्बन्धपूर्वको बुद्धिपरिकल्पितोऽपि विभागो गृह्यते न केवलो वास्तवसम्बन्धपूर्वको वास्तव एवेति बोध्यम् । तथा च प्रकृतधातूपात्तविभागजनकव्यापाराऽनाश्रयत्वे सति प्रकृतधात्वर्थविभागाश्रयत्वमपादानत्वमिति फलितम् । सूत्रे ध्रुवग्रहणाऽभावे पचत्यादियोगे कर्तृसंज्ञायाश्चारितार्थ्येन, अपायविषये यत्कारकं तदपादानमित्यर्थसम्भवेनापादानसंज्ञायाः कर्तृसंज्ञापवादत्वेन कर्तुरपादानत्वाऽऽपत्तिरिति तद्व्यावृत्त्यर्थं ध्रुवग्रहणमित्यवसेयम् ।
उक्तञ्च हरिणा—

अपाये यदुदासीनं चलं वा यदि वाऽचलम् ।
ध्रुवमेवाऽतदावेशात्तदपादानमुच्यते ॥

इति कैयटादयः

**शेखरकृतस्तु**—उक्तरीत्या ध्रुवपदस्य निश्चलार्थकत्वेन त्रस्तादश्वात्पतति (१)धावतोऽश्वात्पततीत्यादौ त्रासधावनाऽऽश्रयत्वेनाऽनिश्चलत्वाद्ध्रुवत्वाऽभावेनाऽश्वस्याऽपादानत्वं न स्यादिति पूर्वपक्षं विधायाऽत्राऽध्रौव्यमविवक्षितं यतः सतोऽप्यविवक्षा भवतीति समाहितम्भाष्ये । अत्र पतधात्वर्थव्यापाराऽऽश्रयत्वरूपत्वदुक्ताऽध्रुवत्वस्याऽसत्त्वेन सतोऽध्रौव्यस्याऽविवक्षेति भाष्योक्तिरसङ्गतिमापद्येत । सिद्धान्तेऽपि त्वदुक्तध्रुवपदार्थकथनस्यैचौचित्येन भाष्योक्तस्याऽसङ्गतिः । लोकसिद्धनिश्चलाऽतिरिक्तेऽर्थे ध्रुवपदस्य शक्तिकल्पने गौरवञ्च । नचाऽन्यविधध्रुवत्वाऽभ्युपगमे अतदावेशादिति हरिकारिकाया असङ्गतिरिति वाच्यम् । तत्रातदावेशादित्यस्य तदावेशाऽविवक्षणादित्यर्थेन तत्सङ्गतेः । अतोऽपाये गतिविशेषे सति यत् ध्रुवमवधिभावोपगमाश्रयत्वे सति अवधिभावोपगमातिरिक्तस्याऽवधित्वोपयोगिव्यापारस्याऽनाऽऽश्रयं तदपादानमिति सूत्रार्थः । त्रासादेरवधित्वोपयोगित्वाऽऽश्रयणादश्वस्याऽपादानत्वं न स्यादिति पूर्वपक्षः । वृक्षात्पर्णं पततीत्यादौ त्रासादेरसत्त्वान्न तस्याऽवधित्वोपयोगित्वमिति समाधानम् । वृक्षस्य पर्णं पततीत्यादौ वृक्षस्य पर्णद्वारा पातजनकत्वेन प्राप्ताऽपादानत्वव्यावृत्त्यर्थं ध्रुवमपाये इति । सत्येवं अपायपदं कारके इत्यस्य क्रियाजनकत्वेन विवक्षित इत्यर्थे तात्पर्यग्राहकं बोध्यम् । ननु मेषपदोपात्तयोरेव परस्परशब्दार्थत्वात्तयोरवधिभावोपगमातिरिक्तव्यापाराऽनाश्रयत्वाऽभावेन परस्परान्मेषावपसरत इत्यत्राऽपादानत्वाऽनुपपत्तिरिति चेन्न । वाचकशब्दरूपोपाधिगतभेदस्य वाच्याऽर्थे आरोपात्तयोरप्यर्थयोर्भेदेन तदुपपत्तेः । त्रासाऽऽश्रयाऽभिन्नाऽश्वाऽपादानिका देवदत्तकर्तृवृत्तिपतनक्रियेति प्रथमवाक्याद्बोधः । धावनकर्त्रभिन्नाश्वापादानिका देवदत्तकर्तृवृत्तिः पतनक्रियेति बोधः । कुड्यापादानकपातकर्त्रभिन्नाऽश्वाऽपादानिका देवदत्तकर्तृवृत्तिपातक्रियेति तृतीयतो बोधः । अन्यतरमेषाऽपादानिकान्यतरमेषकर्तृकाऽपसरणक्रियेति चतुर्थतो बोधः । ननु विभागाश्रयस्याऽपादानत्वविधानाद्व्यधधात्वर्थे विभागस्य प्रवेशात्तद्योगे धनुषा विध्यतीत्यत्राऽपादानत्वं दुर्वारमिति चेन्न । व्यधधातोर्निःसरच्छरजन्यवेधार्थत्वेन तद्योगे-

(१) आदिपदेन कुड्यात्पततोऽश्वात्पततीत्यपि बोध्यम् ।

ऽपादानत्वकरणत्वयोः प्राप्तौ परत्वात्करणत्वस्यैव प्रवृत्तेः। ननु विभागाऽनुकूलव्यापारस्य त्यजधात्वर्थत्वेन तद्योगे ऽप्यपादानत्वप्रसक्तेर्दुर्वारत्वाद्वृक्षं त्यजति खग इति प्रयोगो न स्यादिति चेन्न। तत्र व्यापारव्यधिकरणविभागस्यैव धात्वर्थत्वात्कर्मसंज्ञयाऽपादानत्वस्य बाधेन तथा प्रयोगोपपत्तेः। विभागाऽनुकूलव्यापारस्य स्पन्दधात्वर्थत्वेन तद्योगेऽपादानत्वं नाशङ्क्यम्। उक्तधातोर्विभागार्थत्वाऽनङ्गीकारादिति वृक्षे स्पन्दते इत्येव भवति। चलधातोर्विभागार्थत्वात्तद्योगेऽपादानत्वस्य सौलभ्येनाऽऽसनाचलित इति प्रयोगो भवत्येव। ननु सार्थस्य धात्वर्थप्रधानव्यापाराश्रयत्वादपादानत्वप्रसक्त्या सार्थाद्धीयते इति प्रयोगो नोपपद्येतेति चेन्न। (अपादाने चाहीयरुहोरिति)ति ज्ञापकात्कर्मप्रत्ययान्तहाधातुप्रयोगेऽऽपादानत्वस्य ज्ञापनेन तदुपपत्तेः। कर्मसंज्ञायां कर्तृपदस्य स्वतन्त्रोपलक्षणत्वेन कर्मणि लकारे सार्थेन त्यज्यते देवदत्त इत्यर्थं इत्याहुरिति दिक्॥

ननु विभागस्य संयोगपूर्वकविश्लेषरूपत्वेन तस्याऽत्राऽसत्त्वाद्बुद्धिकृतस्य विभागस्य गौणत्वेनाऽग्रहणाच्च सूत्रेणाऽप्राप्त्या वार्त्तिकमिदमावश्यकमित्याह—जुगुप्साविरामेति। जुगुप्सा—निन्दा, विरामो—विरतिः, प्रमादोऽनवधानता, जुगुप्साद्यर्थकधातूनां प्रयोगे जुगुप्सादीनां यद्विषयकत्वेन विवक्षा तदपादानमिति तदर्थः। तस्यैवं विषयस्य क्रियाजनकत्वरूपकारकत्वेनाऽविवक्षायां सम्बन्धित्वेन च विवक्षायां पापस्य जुगुप्सते इति भवत्येव। एषां धातूनां स्वार्थविशिष्टबौद्धविश्लेषजनकनिवृत्तौ लक्षणया अपादाने पञ्चमीत्येव सिद्धौ वार्त्तिकमिदमुत्तरसूत्राणि च नावश्यकानीत्युक्तं भाष्ये॥

भीत्रार्थानां भयहेतुः—भयं भीस्त्राणं त्राः, क्विबन्तावेतौ, धातुनिर्देशे तु व्यधिकरणबहुव्रीहिराश्रयणीयः स्यात्। भीश्च त्राश्च भीत्रौ तावर्थौ येषान्ते भीत्रार्थास्तेषां भीत्रार्थानामित्येतत्फलितमाह—भयार्थानामिति। हेतुतृतीयाऽपवादभूतोऽयं योगः। ननु भयार्थकधातुयोगे भयहेतोरपादानत्वविधानात्॥

कस्य बिभ्यति देवाश्च जातरोपस्य संयुगे।

इति रामायणीयपद्ये कस्येति भयहेतोरपादानत्वप्रसक्त्या ततः कथं षष्ठ्युपपत्तिरिति चेन्न। कस्येत्यस्य संयुगेनाऽन्वयात्तस्य भयहेतुत्वाऽभावेनाऽपादानत्वाऽप्रसक्त्या तदुपपत्तेः। न च संयुगस्याऽपादानत्वाऽऽपत्तिरिति वाच्यम्। अधिकरणसंज्ञयाऽपादानसंज्ञाया बाधेनोक्तापत्तेरयोगात्। अधिकरणत्वाऽविवक्षायामिष्टाऽऽपत्तिरेव पञ्चम्या इति बोद्धव्यम्। सूत्रे भीत्रार्थत्यस्याऽसत्त्वे व्याघ्रं पश्यतीत्यादावपादानत्वाऽऽपत्तिः। न च कर्मसंज्ञयाऽपादानत्वबाधेन नोक्ताऽऽपत्तिरिति वाच्यम्। कर्मत्वाऽविवक्षणे शेषषष्ठीं बाधित्वा पञ्चम्यापत्तेर्दुर्वारत्वादित्यलम्॥

वारणार्थानामीप्सितः—वारणं प्रवृत्तिविघातः सोऽर्थो येषां ते तथोक्तानाम्। ईप्सितशब्दस्य वारणार्थधात्वर्थफलाश्रयोऽर्थः। यथा च—प्रवृत्तिक्रियाप्रतिषेधाऽनुकूलव्यापाररूपवारणार्थकधातुयोगे जन्यफलभागित्वेन तत्क्रियाकर्तृरीप्सितस्याऽपादानत्वमिति सूत्रार्थः। यवेभ्यो गां वारयतीत्यादौ वारिधात्वर्थव्यापारजन्यसंयोगादिरूपफलाश्रयत्वाद्यवादीनामपादानत्वात्तेभ्यः पञ्चमी। देवदत्तकर्तृवृत्तियवप्रतियोगिकविनाशाऽनुकूलभक्षणरूपव्यापाराऽभावाऽनुकूलो व्यापार इति बोधः। एवं कुपेभ्यः आतप वारयति, परम्परेभ्यः

पाणिम्वारयति, कूपादन्धं वारयतीत्यादितः, देवदत्तकर्तृवृत्तिरातपनिष्ठपुष्पवृत्तिशुष्कीभावाऽनुकूलव्यापाराऽभावाऽनुकूलव्यापार इति बोधः । पाणिनिष्ठपरस्ववृत्तिसंयोगाऽनुकूलव्यापाराऽभावाऽनुकूलव्यापारो देवदत्तवृत्तिः । अन्धवृत्तिर्यः कूपवृत्त्यधःप्रदेशावच्छिन्नसंयोगाऽनुकूलक्रियारूपपतनाऽनुकूलव्यापारस्तदभावाऽनुकूलव्यापारः कर्तृवृत्तिरिति बोधः । अग्नेर्माणवकं वारयतीत्यतस्तु माणवकवृत्त्यग्निजन्यदाहाऽनुकूलव्यापाराऽभावाऽनुकूलव्यापारो देवदत्तवृत्तिरिति बोधः ॥

**अन्तर्द्धौ येनाऽदर्शनमिच्छति**—अन्तर्द्धिरन्यकर्तृकस्वकर्मकदर्शनाऽभावाऽनुकूलव्यवहितदेशस्थितिरूपस्तद्घटकं यत्कर्तृकदर्शनाऽभावमिच्छति तदपादानसंज्ञमित्यर्थस्तत्फलितमाह—**व्यवधाने सतीति**—येनेत्यत्र कर्तरि तृतीया । नाऽत्र कृद्योगलक्षणा षष्ठी शङ्कनीया । उभयप्राप्तौ कर्मण्येव तद्विधानात् प्रत्यासत्त्या आत्मनोगम्यमानत्वादस्त्युभयप्राप्तिरिति भावः । मातुर्निलीयते कृष्णः' मातृकर्तृकस्वकर्मकदर्शनेच्छा कृष्णवृत्तिरिति मातृशब्दादपादानत्वेन पञ्चमी । ननूक्तोदाहरणे व्यवहितदेशस्थितेर्धातुना प्रतिपादनेऽपि कथमिच्छाया लाभ इति चेन्न । आक्षेपेण तल्लाभात् । **अन्तर्द्धौ किमिति** । अयम्भावः, सूत्रे तदनुपादाने यत्कर्तृकदर्शनाऽभावमिच्छति तदपादानमित्यर्थे चोरान्न दिदृक्षते इत्यत्र चोरकर्तृकस्वकर्मकदर्शनाऽभावेच्छाया देवदत्तादिवृत्तित्त्वाच्चोरशब्दादपादानत्वाऽऽपत्तिः । तदुपादाने तु व्यवधाने सतीत्यस्याऽप्यर्थकुक्षिप्रविष्टत्वेन प्रकृते तदभावान्नापत्तिरिति । सूत्रे येनेत्यस्याऽभावे स्वकर्मकदर्शनाऽभावं य इच्छति तदुपादानमित्यर्थं कर्तुरेवोक्ताऽऽपत्तिस्तत्सत्त्वे तु यत्कर्तृकेत्यर्थघटितोक्तार्थे न कर्तुस्तदापत्तिः । इच्छतिग्रहणाऽभावे यत्र दर्शनाऽभाव एव तत्रैवाऽपादानसंज्ञा स्यात् । तद्ग्रहणसत्वे तु अदर्शनेच्छाया तदनुकूलव्यापारकरणे दैववशाद्दर्शने सत्यप्युक्तसंज्ञा भवतीत्यलम् ॥

**अन्यारादिति**—अत्राऽन्येत्यर्थग्रहणं तेनाऽन्यार्थकशब्दयोगे पञ्चमीति तदर्थः । अन्यार्थश्च भेदाऽऽश्रयो नतु भेदमात्रम् । अत एव घटाद्भिन्न इत्याद्युपपत्तिः । **शेखरकारास्तु**—'पञ्चमी विभक्ते'रित्यत्र विभागार्थकविभक्तपदेन भेदस्य व्याख्यानात् 'ध्रुवमपाये' इति सूत्रे अपायशब्देन भेदस्याऽपि ग्रहणादपादाने पञ्चमीत्येव पञ्चमीसिद्धावन्येत्यर्थग्रहणमनादेयमित्याहुः ॥

ननु सहाञ्चतीति सध्र्यूङित्यत्र पञ्चम्यभावाय दिक्शब्दसाहचर्य्येण दिग्वाचकस्यैवाऽञ्चूत्तरपदकस्य ग्रहणादिक्शब्दयोगे पञ्चमीविधानादेवाऽञ्चूत्तरपदकयोगेऽपि पञ्चमीविधानसुलभत्वेन सूत्रे पृथगञ्चूत्तरपदग्रहणम्व्यर्थमित्यत आह—**अञ्चूत्तरपदस्येति** ॥

**प्रभृतियोगे पञ्चमीति**—प्रभृत्यर्थयोगेऽपि पञ्चमीति तदर्थः । अपादाने पञ्चमीति सूत्रस्थं भाष्यमेवाऽत्र प्रमाणम् । तत्र हि–( यतश्चाऽध्वकालनिर्माणं ततः पञ्चमी कार्तिक्या आग्रहायणी मास ) इति वार्त्तिकं प्रत्याख्यातुम् (इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते कार्त्तिक्याः प्रभृत्याग्रहायणीमास) इत्युक्तम् । प्रभृतिशब्दाऽभावेऽपि तदर्थसत्तामात्रेण पञ्चमीत्यर्थकेनाऽनेन भाष्येण प्रभृत्यर्थयोगे पञ्चमीति वचनं बोध्यते । अन्यथा प्रभृतिपदाऽभावादुक्तवार्त्तिकस्य पञ्चम्यर्थमावश्यकत्वेन तत्प्रत्याख्यानमसंगतं स्यात् । एवञ्च मेरुपृष्ठादारभ्य ध्रुवपर्यन्तं ग्रहनक्षत्रतारागणचित्रितोऽन्तरिक्षलोक इत्यत्र प्रभृत्यर्थकाऽऽरभ्यशब्दयोगेऽपि प-

ञ्चमी। अवीचिमारभ्येत्यत्राऽऽरभ्येत्यस्य गृहीत्वेत्यर्थेन प्रभृत्यर्थकत्वाऽभावान्न पञ्चमीत्यलम् ॥

ननु (अपपरिवहिरञ्चवः पञ्चम्या) अत्र सूत्रे परस्परसाहचर्य्यादपपर्योर्वर्जनार्थयोः कर्मप्रवचनीयसंज्ञकयोरेव ग्रहणात्तद्योगे (पञ्चम्यपाङ्परिभिरि)ति पञ्चमीविधानेन (लक्षणप्रतिपदोक्त) परिभाषयाऽऽपपरिनिमित्तकसुबन्तस्यैव ग्रहणेन च पञ्चम्यैव समासस्य सिद्धत्वात् अपपरिसाहचर्य्यादुक्तपरिभाषया चाऽञ्चूत्तरपदेनाऽपि अन्यारादिति विहितपञ्चम्यैव समासस्य सिद्धत्वाच्च पूर्वोक्तसूत्रस्थं पञ्चमीग्रहणं व्यर्थं सत् वहिश्शब्दस्य पञ्चम्यन्तेन समासविधानद्वारा वहिश्शब्दयोगेऽपि पञ्चमी भवतीति ज्ञापयतीत्याह-**अपपरिवहिरिति समासविधानाज्ज्ञापकाद्बहिर्योगे पञ्चमीति।** पञ्चम्यन्तेन समासविधानाज्ज्ञापकादिति तदर्थः। ज्ञापकसिद्धस्याऽसार्वत्रिकत्वात्क्वचिद्वहिश्शब्दयोगे षष्ठ्यपि। तेन मणिबन्धादाकनिष्ठं करस्य करभो बहिरिति सिद्धमिति दिक् ॥

ननु 'पृथग्विनानानेभि'ति सूत्रेण विकल्पेन तृतीयाविधानात्तदभावपक्षे 'एनपा द्वितीया' इति प्रकृता द्वितीयैव स्यात्। अस्या वैकल्पिकत्वे पञ्चम्यपि, अस्याश्च नित्यत्वाद्विभक्तित्रयसमावेशो न स्यादिति तदर्थमन्यतरस्यां ग्रहणस्य समुच्चयार्थकत्वमावश्यकमित्याह-**अन्यतरस्यां ग्रहणं समुच्चयार्थमिति।**

**शेखरकृतस्तु**-अत्र सूत्रेऽन्यतरस्यांग्रहणस्य न द्वितीयासमुच्चयार्थकत्वम्, फलाऽभावात्। न च द्वितीयासमुच्चयार्थकत्वे।

विना वातं विना वर्षं केनेमौ पातितौ द्रुमौ।

इत्यत्र द्वितीया भवतीति वाच्यम्। ऋतेशब्दयोग इव ततोऽन्यत्राऽपि दृश्यते इत्यनेनैव तत्र द्वितीयासिद्धेः। अत्र सूत्रे द्वितीयाया असम्बन्धादेव भाष्यकृता नोक्तो द्वितीयासमुच्चयः। यद्यत्र द्वितीयासम्बन्धः स्यात्तदा 'करणे च स्तोकाल्पकृच्छ्रकतिपयस्ये'ति सूत्रेऽपि पञ्चमीसमुच्चयार्थम्प्रकृताऽन्यतरस्यां ग्रहणस्य सम्बन्धाऽऽवश्यकत्वात्तत्राऽपि द्वितीयासमुच्चयः स्यादिति तद्भावः। (पञ्चम्या अधिकारे द्वितीयाषष्ठीविषये प्रतिषेधो वक्तव्यः' दक्षिणेन ग्रामं दक्षिणतो ग्रामस्येति) भाष्यात् (षष्ठ्यतसर्थप्रत्ययेने)त्यतः प्राक् (एनपा द्वितीये)ति सूत्रमिति सूचितम्। अन्यथा सूत्रपाठक्रमत्यागे न्यायप्राप्तषष्ठ्याः पूर्वनिपाताऽकरणे च न किमपि बीजम्। एवञ्चान्यतरस्यांग्रहणस्य नैव द्वितीयासमुच्चयार्थकत्वमित्याहुरित्यलम् ॥

इति पञ्चमी।

---

## अथ सम्बन्धकारकप्रकरणम्

**षष्ठी शेषे।** अत्र सूत्रे शेषपदेन कर्मादिभ्यो येऽन्येऽर्थाः स शेष इति भाष्यकृतोक्तत्वात्कारकप्रातिपदिकार्थभिन्नस्य स्वत्वादेर्ग्रहणम्। स च शेषः स्वत्वत्वादिरूपेण सम्बन्धत्वेन रूपेण च षष्ठीवाच्यः। राज्ञः पुरुषोऽस्तीत्येतद्वाक्यजन्यशाब्दबोधाऽनन्तरं पुरुषो राजस्वत्ववान्नवेति सन्देहो न भवतीति यथा विशेषरूपेण कल्प्यते तथा राजसम्बन्धी न वेति च सन्देहाऽनुत्पत्त्या सामान्येन सम्बन्धत्वेन रूपेण च शेषस्य षष्ठीवाच्यता कल्प्यते इति भावः। राजनिरूपितस्वत्ववदभिन्नपुरुषकर्तृकसत्तेति बोधः ॥

रुजाऽर्थानामिति । रुजा व्याधिरर्थो येषान्ते रुजार्थास्तेषां तथोक्तानाम् । धातोर्भाववचनत्वस्याऽव्यभिचारेण सामर्थ्याद्वचन इति कर्तरि ल्युट्प्रकृत्यर्थोऽविवक्षितस्तदाह—भावकर्तृकाणामिति ॥

हिंसायां किम्, धानापेषणमिति । ( जासिनिप्रहणे )ति सूत्रे हिंसाग्रहणाऽभावे प्रत्युदाहरणभूतोक्तप्रयोगे उक्तसूत्रेण षष्ठ्याऽऽप्रात्या (प्रतिपदविधाना षष्ठी न समस्यते) इति समासनिषेधेन धानायाः पेषणमित्यसमस्तप्रयोगाऽपत्तिः । तद्ग्रहणसत्त्वे तु पिष्धातोरत्र हिंसार्थकत्वाऽभावादनेन षष्ठ्यप्राप्त्या कर्तृकर्मणोरिति षष्ठ्या समासे तदुपपत्तिरिति भावः ॥

ननु गामस्य तदहःसभायां दीव्येयुरित्यत्र नित्यं षष्ठीप्राप्तौ विकल्पार्थं 'द्वितीया ब्राह्मणे' इति सूत्रमिति भाष्यात् 'दिवस्तदर्थस्ये'त्यत्र न शेषपदसम्बन्ध इत्याशयेन तिङन्तमुदाहरति-शतस्य दीव्यतीति । यदि 'दिवस्तदर्थस्ये'त्येतत्सूत्रस्याऽपि शेषपदसम्बन्धेन समासनिवृत्तिफलकत्वं स्यात्तदा यत्र समासस्य प्राप्तिसम्भावना तादृशं कृदन्तमेवोदाहरेत् । तथाऽकरणेन ज्ञायते नाऽत्र शेषपदसम्बन्ध इति भावः ॥

ननु 'दिवस्तदर्थस्ये' त्यादिसूत्रेण व्यवधानाच्छेषपदाऽसम्बन्धेनाऽधिकरणकारक एव षष्ठीविधानस्य समुचितत्वेन शेषग्रहणं व्यर्थमित्याशयेनाशङ्कते-शेषे किमिति । समाधत्ते-द्विरहन्यध्ययनमिति । शेषपदाऽसम्बन्धेऽधिकरणं षष्ठीविधानात्प्रत्युदाहरणभूतोक्तप्रयोगे षष्ठ्यापत्तिरिति तद्व्यावृत्त्यर्थं वृत्त्यादिप्रामाण्यात् 'अधीगर्थदयेशामि'ति सूत्रे कर्मादीनामविवक्षा शेष इति भाष्ये कर्मादीनामित्यत्र बहुवचनेनात्रापि शेषपदसम्बन्धबोधनाच्च मण्डूकप्लुत्या शेषपदसम्बन्ध आवश्यक एवेति समाधातुराशयः । वस्तुतस्तु उक्तभाष्ये बहुवचनेन नाऽत्र सूत्रे शेषपदसम्बन्धलाभः । कर्माश्रयषष्ठीविषये सूत्रोपात्तसकर्मकाणामकर्मकवद्वचनमिति वार्त्तिकं प्रत्याख्यातुं शेष इति वर्त्तते इति भाष्यकृतोक्ते परेण शेषश्च क इति पृष्टे कर्मादीनामविवक्षा शेष इति सिद्धान्तिना स्मारितत्वात् । सिद्धान्तिभाष्यकारेण शेषपदार्थः स्मारितः । नैतावता कृत्वोर्थेत्यत्र शेषपदसम्बन्ध इति लभ्यते । (१)किञ्चैतद्भाष्यबलेन दिवस्तदर्थस्येत्यत्र शेषपदसम्बन्धो लभ्यते । (२)अन्यथा वार्त्तिकरीत्या भावे इष्टस्य शतस्य दिव्यत इति प्रयोगस्याऽसिद्धिरापद्येत । (३)अत एव (अधीगर्थादयः प्रेष्यब्रुपर्यन्ताः कर्माश्रयपदेनोच्यन्ते) इति कैयटेन वार्त्तिकव्याख्यायामुक्तम् । (४)एवञ्च शेषपदसम्बन्धेनोक्तवार्त्तिकप्रत्याख्यानवदेतत्सूत्रद्वयप्रत्याख्याने एव भाष्यकर्तुस्तात्पर्य्यम् । नचैवं (५)'द्वितीया ब्राह्मणे' इत्येतत्सूत्रस्थं भाष्यं विरुणद्धीति वाच्यम् । (६)वार्त्तिकरी-

---

( १ ) प्राचीनव्याख्यायान्दोषमप्याह—किञ्चेति ।

( २ ) 'दिवस्तदर्थस्ये'ति सूत्रे शेषपदाऽसम्बन्धे इत्यर्थः ।

( ३ ) दिव इति सूत्रे शेषपदसम्बन्धादेवेत्यर्थः । अस्य मूलोक्तकैयटोक्तसूत्रभाष्यपाठाच्छेषपदसम्बन्धलाभ इति । ( ४ ) दिव इति सूत्रे शेषपदसम्बन्धे सतीत्यर्थः ।

( ५ ) ननु द्वितीया ब्राह्मणे इत्यत्र भाष्ये गामस्य तदहः सभायामित्यादौ शेषपदासम्बन्धेन दिव इति सूत्रप्राप्तषष्ठीबाधनार्थमेतस्य सूत्रस्योक्तत्वादस्य का गतिरित्याह—द्वितीया ब्राह्मण इति ।

( ६ ) वार्त्तिककृता हि मीता शेषपदानुवृत्तिः किन्तु समाऽकर्मकवद्भाव एवास्ति इति भावः ।

त्योक्तभाष्यस्य सत्त्वादिति तत्त्वम्। (१)किञ्च यदा कर्मणो विवक्षा, न तदा षष्ठी, स्मराम्यहं मातरमित्युक्तम्भाष्ये। भवन्नये यदा कर्मादिविवक्षा भवति। न भवति तदा षष्ठीति वदे᳚। (२)एवञ्च 'ज्ञोऽविदर्थस्य करणे' इत्यत्राऽपि न शेषपदसम्बन्ध इति बोद्धव्यम्। एवञ्च नाऽज्ञानार्थकजानातियोगे कदाऽपि तृतीया। (३)शतं दीव्यतीत्यादि च सिद्ध्यति। ज्ञोऽविदर्थस्येत्यत्र शेषपदसम्बन्धाऽभावेऽनेनैव व्यवधानात्कथमुपपत्तिरधीगर्थेत्यत्र भाष्योक्तस्य शेषपदसम्बन्धस्येति नाशंक्यम्। मण्डूकाऽनुवृत्त्या शेषपदसम्बन्धस्य तत्र सुलभत्वादित्यलमतिविस्तरेण॥

कर्तृकर्मणोः कृति। नाऽत्र सूत्रे शेषपदस्य सम्बन्धः। तथा सति 'षष्ठी शेषे' इत्यनेनैवाऽत्राऽपि षष्ठ्याः सिद्धौ सूत्रमेतद्वैयर्थ्यमापद्येत। नचैतत्सूत्रस्य ज्ञोऽविदर्थस्येति सूत्रवत्समासनिवृत्तिफलकत्वेन चरितार्थत्वसम्भवे कथं वैयर्थ्यमिति वाच्यम्। (कृद्योगा षष्ठी समस्यते) इत्यनेन तत्र समासस्येष्टत्वादुक्तफलकत्वाऽभावेन वैयर्थ्यस्य स्पष्टत्वात्। सूत्रघटककृतिरित्यस्य करोतेर्भावे क्विबुत्पत्तौ कृद्योगे कर्तरि कर्मणि च षष्ठीति सूत्रार्थो निष्पन्नः। कर्तरि षष्ठ्युदाहरणम्। कृष्णस्य कृतिः। कृतिरिति भावे क्तिन्, करणं कृतिः। कर्मषष्ठ्युदाहरणञ्च, जगतः कर्ता कृष्णः। अत्र कर्तृसाहचर्याद्भेदसम्बन्धेनाऽन्वयिन एव कर्मणो ग्रहणात्स्तोकं पाक इत्यादौ न क्रियाविशेषणीभूतस्तोकादिपदात्षष्ठी। (४)अन्यथा व्यपदेशिवद्भावेन फलस्य स्वाश्रयत्वात्कर्मत्वेन तत्राऽन्वितस्य स्तोकादेरपि कर्मत्वात्तस्मादुर्वारैव षष्ठ्यापत्तिरिति बोध्यम्। (५)किञ्चस्तोकम्पाचक इत्यादौ न क्रियाविशेषणेन स्तोकादिना समानाऽधिकरणसमासो नाऽपि सुप्सुपेत्यनेन सः। स्तोकादेर्धात्वर्थेऽन्वयात्सुबन्तार्थविशेष्येण पाककर्त्राऽन्वयाऽभावेन सामर्थ्यविरहात्। ननु स्तोकं पाक इत्यत्रैव समासाऽभावप्रदर्शनस्य समुचितत्वे स्तोकं पाचक इति प्रयोगाऽन्तरे तत्प्रदर्शनं निष्फलमिति वाच्यम्। 'तृजकाभ्यां कर्तरी'ति सूत्रोदाहरणविषये ओदनस्य पाचक इत्यत्र षष्ठीवत्स्तोकम्पाचक इत्यत्राऽपि सा स्यादिति सन्देहव्यावृत्तये प्रयोगान्तरे तत्प्रदर्शनस्य साफल्यात्। (६)नचैवं द्वितीयाश्रितेत्यादेः वैयर्थ्याऽऽपत्तिः कष्टं श्रित इत्यत्र सुबन्तार्थविशेष्येण श्रवणकर्त्रा कष्टमित्यस्याऽनन्वयेनाऽसामर्थ्यादिति वाच्यम्। तस्याऽरम्भसामर्थ्यादवयवद्वारकसामर्थ्येऽपि प्रवृत्त्या सार्थक्यात्। (७)द्वितीयाप्रकरणोक्तपरेतुमतरीत्या सामर्थ्यस्य सत्त्वाच्च।

---

(१) सिंहावलोकनन्यायेनाह—किञ्चेति। (२) पूर्वोक्तव्यवस्थासिद्धौ चेत्यर्थः।

(३) दिवस्तदर्थस्येति सूत्रे पूर्वोक्तरीत्या शेषपदसम्बन्धे सति यदा सम्बन्धित्वेन विवक्षा तदा षष्ठी, यदा कर्मत्वशक्तिमत्त्वेन सा तदा द्वितीयेति रूपद्वयसिद्धिरिति भावः।

(४) अभेदेनान्वयिनः कर्मणो ग्रहणे सतीत्यर्थः।

(५) अत्र विशेषमाह–किञ्चेति।

(६) सामर्थ्याऽभावेन समासशास्त्रेऽप्रवृत्ते सतीत्यर्थः।

(७) प्राप्तोदकेत्यत्र वृत्तिविग्रहयोः समानार्थकत्वार्थं प्राप्तिकर्त्रुदककर्मेति बोधस्वीकारवत्कष्टेति कर्मणो द्वितीयान्तार्थस्य कर्तर्यन्वयेन कष्टकर्मकाऽभिन्नाश्रयणकर्तेत्यर्थकल्पने सुबन्तार्थविशेष्येणान्वयेन सामर्थ्यमस्तीति भावः।

सुबन्तार्थविशेष्येणाऽनन्वयेन समासाऽभावादेव, दारुणं यथा भवति तथाऽध्यापक इत्यर्थकस्य दारुणाऽध्यापक इत्यस्य सिद्धये मलोपवचनमारब्धं 'पूजनात्पूजितमि'ति सूत्रे भाष्ये । असामर्थ्येऽपि समासाऽभ्युपगमे तु समासेनैवोक्तप्रयोगोपपत्तौ भाष्यकृत्कृतस्य मलोपवचनस्य स्पष्टमेव वैयर्थ्यं स्यात् । उक्तसूत्रस्थभाष्यमेव क्रियाविशेषणान्न षष्ठीत्यत्राऽपि प्रमाणं बोद्धव्यम् । अन्यथा 'तृजकाभ्यां कर्तरी' तिनिषेधसामर्थ्याद्व्ययवद्वारकसामर्थ्येऽपि षष्ठीसमासस्य प्रवृत्त्या समासेनैवोक्तप्रयोगोपपत्तौ मलोपवचनस्य स्पष्टैव वैयर्थ्यापत्तिरिति । नच विभाषाऽधिकारेण षष्ठीसमासस्य वैकल्पिकत्वात्तदभावपक्षे दारुणाऽऽध्यापक इत्यस्योपपत्तये मलोपवचनस्य चरितार्थत्वे कथं वैयर्थ्यमिति वाच्यम् । तथा सति वाक्ये मलोपश्च वक्तव्य इत्येव वचनस्य कर्तुमुचितत्वात् । वैयधिकरण्येन समासाऽप्राप्तिविषयकत्वादेव क्रियाविशेषणे दारुणादौ विशेष्येणाऽनन्वयात्समासाऽप्राप्त्या मलोपविधानमिति कैयटेनोक्तम् । न च विशेष्येणाऽनन्वयेऽप्यवयवद्वारकसामर्थ्यमादाय सुप्सुपेति वा मयूरव्यंसकेति वा समासेनोक्तप्रयोगोपपत्तौ तदर्थं कृतस्य मलोपवचनस्य सर्वथा वैयर्थ्याऽपत्त्या क्रियाविशेषणात्षष्ठ्यभावे समासाऽभावे च न तद्विनिगमकं भवितुमर्हतीति वाच्यम् । उक्तसमासविधायकशास्त्रद्वयस्याऽसार्वत्रिकत्वेन पूर्वोक्तयुक्त्या षष्ठ्यभावात्तत्समासस्याऽप्यभावेन चोक्तप्रयोगाऽनुपपत्त्या तदर्थमुक्तवचनस्याऽऽवश्यकत्वेनोक्तविषये विनिगमकत्वस्याऽक्षतेरित्यलम् ॥

ननु कर्तृकर्मभ्यां क्रियाऽऽक्षेपात्तद्वाचिनो धातोरेव सत्त्वात्तेभ्यस्तिङ्कृतो विधानेऽपि तिङ्योगे 'न लोके'ति निषेधेन षष्ठ्यभावे कृद्योगे एव षष्ठीति कृद्ग्रहणं व्यर्थम् । न च देवदत्तेन शत्योऽश्व इत्यादौ तद्धितयोगेऽश्वरूपकर्मणि षष्ठीव्यावृत्त्यर्थं कृद्ग्रहणमावश्यकमिति वाच्यम् । कारकाऽन्वययोग्यताऽवच्छेदकरूपेण साध्यत्वेनोपस्थितक्रियानिरूपितकर्मण्येवाऽनेन षष्ठीति नियमेन तद्धितात्तेन रूपेण क्रियोपस्थित्यभावादश्वस्य तादृशक्रियानिरूपितकर्मत्वाऽभावेन तत्र षष्ठ्यप्राप्तेः । नच कृद्ग्रहणमुत्तरसूत्रेऽनुवृत्त्याऽव्ययपदेन कृदव्ययस्यैव ग्रहणार्थमिति वाच्यम् । अव्ययार्थस्य ये कर्तृकर्मणीति व्याख्यानेन कृदव्ययस्यैव तत्र ग्रहणात् । नच'उभयप्राप्तावि'त्यत्रान्यपदार्थसम्पादनद्वारा बहुव्रीह्युपपत्त्यर्थं कृद्ग्रहणमिति वाच्यम् । 'एकाचो द्वे' इत्यादाविवाऽन्यपदार्थस्याऽशब्दत्वेऽपि व्याख्यानात्तदुपपत्तेः । न च भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामित्यादौ (१)गौणे णिच्प्रकृत्यर्थकर्तरि षष्ठ्यर्थं करोतीति कृदिति कर्तृपरं कृद्ग्रहणमिति वाच्यम् । गौणे णिच्प्रकृत्यर्थकर्तरि तृतीयावद्यत्नमन्तरैव षष्ठ्या अप्युपपत्तेः । एवञ्च कृद्ग्रहणमव्यर्थमेवेत्याशयेनाऽऽशंकते—कृतिकिमिति ।

समाधत्ते—(२)तद्धिते माभूत्कृतपूर्वीकटमिति—अयम्भावः-उक्तरीत्या प्रयो-

---

(१) अप्रधाने ।

(२) तद्धिते माभूदिति । तद्धितान्तनिष्ठा या शक्तिः सा च बोधजनकत्वप्रकारतानिरूपितकृतपूर्वीत्वावच्छिन्नभगवदिच्छीयविशेष्यतारूपा तस्या यो ग्रहः [ ज्ञानं ] स च तादृशविशेष्यताख्यविषयताप्रकारककृतपूर्वीपदत्वावच्छिन्नविषयतावत्कृतपूर्वीपदम्भवत्वित्याकारकस्तन्मात्रप्रयोज्योपस्थितिः । पूर्वकालिककृतिकर्तृत्वावच्छिन्नरूपा तद्विषयिका क्रिया कृतिक्रिया तस्याः कर्तरि कर्मणि च षष्ठी माभूदिति तदर्थः ।

जनाऽन्यथोपपत्त्या व्यर्थीभूतं कृद्ग्रहणं ज्ञापयति, कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियायाः कर्तरि कर्मणि षष्ठी यथा स्यात्, तद्धितान्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियायाः कर्तरि कर्मणि माभूदिति ।

तथा च कृतपूर्वीकटमित्यत्र कटस्य तद्धितान्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियायाः कर्मत्वान्न षष्ठी । ईदृग्वृत्तिघटकतयैव सकर्मकधातुप्रकृतिकभावक्तान्तस्य कृतेत्यस्य प्रयोगेण कृदन्तशक्त्या क्रियोपस्थित्यभावात् । न च निष्ठान्तत्वात् 'न लोकेति' निषेधेनैव तत्र षष्ठ्यभावेनैतत्कृद्ग्रहणकृतनियमफलं युक्तमिति वाच्यम् । निष्ठान्तमात्रवृत्तिशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियानिरूपितकर्मण्येव तेन षष्ठीनिषेधात् । न च कृद्ग्रहणकृतनियमेन कृतपूर्वीकटमित्यत्रेव तण्डुलानां पाचकतर इत्यादावपि षष्ठी न स्यात्, तण्डुलानां पाचकतरेतितद्धितान्तनिष्ठशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियानिरूपितकर्मत्वसत्वादिति वाच्यम् । पाचकादेः पृथक्प्रयोगेण पाचकपदनिष्ठशक्तिग्रहप्रयोज्योपस्थितिविषयत्वस्य निर्बाधेन षष्ठ्युपपत्तेः । कृधातोः कर्मणोऽविवक्षया भावे क्ते कृतमिति ततः पूर्वशब्दस्य तत्समभिव्याहारे कृतं पूर्वमिति विग्रहे "सुप्सुपे"तिसमासे 'पूर्वादिनिः' 'सपूर्वाच्चेति' इनिः, ततः कर्मयोगविवक्षया कृतपूर्वीकटमिति सिद्ध्यति । अस्यैवंरीत्या साधुत्वे एतत्सूत्रस्थं भाष्यमेव मानम् । न च प्राक्कर्मणोऽन्वयाऽविवक्षामपि कृतेत्यस्य कर्मणि साकांक्षत्वेन सापेक्षत्वादसामर्थ्येन वृत्तिर्नस्यादिति वाच्यम् । वृत्तेः पूर्वं कर्मान्वयाऽभावेनाऽसाकांक्षत्वात् । न च 'नपुंसके भावे क्तः' इत्यनेन सकर्मकेभ्योऽपि धातुभ्यो भावे क्तप्रत्ययसिद्धौ कर्मणोऽविवक्षया भावे क्तसाधनयत्नो व्यर्थ इति वाच्यम् । उक्तसूत्रेणाऽप्यकर्मकेभ्य एव क्तविधानादित्यलम् ॥

उभयप्राप्तौ कर्मणि—पूर्वसूत्रेणैव सिद्धौ नियमार्थमिदं सूत्रम् । उभयोः प्राप्तिर्यस्मिन्निति बहुव्रीहिः । अस्याश्रयणादेकनिमित्तत्वलाभेनौदनस्य पाकः, ब्राह्मणानाञ्च प्रादुर्भाव इत्यादौ विभिन्नक्रियाकर्तृकर्मणोः षष्ठीप्राप्तौ नायं नियमः प्रवर्त्तते । प्राप्तिपदेनोभयोः प्रयोगे सत्येवाऽयं निषेध इति बोध्यम् ॥

स्त्रीप्रत्यययोरकाकारयोर्नायं नियम इति—'स्त्रियां क्तिन्' इत्यधिकारविहितयोरकाऽकारयोः प्रयोगे कर्मण्येव षष्ठी न तु कर्तरीतिनियमो न प्रवर्तते किन्तु कर्तर्यपि षष्ठी भवत्येव । नचैवं 'सुट् तिथोः' इति सूत्रे सुटा सीयुटो न बाध इति वृत्तिकृदुक्तमनुपपन्नमिति वाच्यम् । कर्तुः करणत्वविवक्षया तदुपपत्तेः ॥

शेषे विभाषा—उक्तसूत्रकृतनियमस्याऽयं विकल्प इत्येके । इत्येतल्लब्धमर्थस्पष्टप्रतिपत्त्यर्थमाह—केचिदविशेषेण विभाषामिच्छन्तीति—अकाऽकारभिन्नकृन्मात्रे इति तदर्थः ॥

चतुर्थी चाशिषि—आशीर्विषयक्रियाऽन्वय्यर्थकात्प्रातिपदिकात्तद्द्वारके आयुष्यादियोगे चतुर्थीषष्ठ्यावित्यर्थः । क्रियाद्वारकसम्बन्धस्वीकारादेव एतदर्थकचतुर्थ्यन्तानां सुखहितादिभिर्न समासः । देवदत्ताय सुखं भूयादित्यादौ देवदत्तायेत्यस्य सुखादेश्च भूयादित्येतच्छब्दबोध्यक्रियायामन्वयेन परस्परमसामर्थ्यात् ।

इति षष्ठी ।

# अथाधिकरणकारकप्रकरणम् ।

आधारोऽधिकरणम्—'कारके' इत्यधिकारात्क्रियाजनकेऽस्य प्रवृत्तिः । आधारश्चोपस्थितत्वात्क्रियाया एव, तत्राऽऽधारपदेन न साक्षात्क्रियाऽऽधारस्य ग्रहणं; किन्तु परम्परया तदाधारस्य पराभ्यां कर्तृकर्मसंज्ञाभ्यां बाधात् । परम्परा च व्याख्यानात् कर्तृकर्मद्वारैवेत्याह—कर्तृकर्मद्वारेति—उक्तञ्च हरिणा—

कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम् ।
उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ॥ इति ॥

न च कालस्य साक्षात्क्रियाधारत्वसम्भवे कथं परम्पराऽऽधारस्य ग्रहणमिति वाच्यम् । परम्पराऽऽधारग्रहणस्यैवाऽनुभवसिद्धत्वात् । तस्य साक्षात्क्रियाऽऽधारत्वेऽप्याधारपदे स्वरितत्वप्रतिज्ञया परम्पराऽऽधारस्य ग्रहणम् । किञ्च कालस्य साक्षात्तदाधारत्वे कालः पचति भूतानीतिवत्कर्तृत्वमेव स्यात् । परम्पराऽऽधारग्रहणे सिद्धे ( यस्य यद्द्वारा कारकत्वं तस्य तद्द्वारैव क्रियान्वयः ) इति व्युत्पत्त्याऽस्याऽऽधारस्य कर्तृकर्मद्वारैव क्रियाऽन्वयः । (१)अत एव, अक्षशौण्ड इत्यादौ समासः । यथा कटे शेते चैत्र इतिवाक्यात्कटाऽधिकरणकचैत्रकर्तृकं शयनमिति बोधस्तथाऽक्षाधिकरणकशौण्डकर्तृका भवनक्रियेतिबोधात्साक्षादेव सप्तम्यन्तस्य शौण्डादिभिः सामर्थ्येन समाससंज्ञासिद्धिरिति भावः ।

यत्तु कैयटेनोक्तम्—अक्षेषु शौण्ड इत्यत्राऽऽसक्तपदाऽध्याहारेणाऽसक्तिक्रियाद्वारा सामर्थ्यात्समास इति तन्न हृदयग्राहि, भाष्यकृता तस्याऽर्थस्याऽनुक्तत्वाद् यत्र च क्रियावाचकपदन्न श्रूयते तत्राऽपि तदन्वययोग्यक्रियावाचकपदाऽऽध्याहारेण क्रियाऽऽधारत्वस्योपपादनीयत्वान्मूले वृक्षः कपिसंयोगीत्यादावस्तिक्रियामध्याहृत्य तस्याः स्वकर्तृकपिसंयोगिवृक्षद्वारा मूलवृत्तितया मूलस्याऽऽधारत्वं बोध्यमिति दिक् ॥

औपश्लेपिकवैषयिकाऽभिव्यापकभेदादाधारस्त्रिधा । उप–समीपे श्लेष उपश्लेषस्तत्कृत औपश्लेषिकः । यन्मासेऽतिक्रान्ते दीयते तस्य मास औपश्लेषिकमधिकरणमिति 'तत्र च दीयते' इति सूत्रभाष्योक्तेः । अत एव, 'इको यणचि'त्यत्राऽचीत्यौपश्लेषिकाऽऽधारे सप्तमी । कटे आस्ते, स्थण्डिले शेते इत्याद्युदाहरणम् । कटाधिकरणिकैककर्तृकाऽऽसनक्रिया । स्थण्डिलाऽधिकरणिकैककर्तृका शयनक्रियेति बोधः । विषयकृतो वैषयिकः, अप्राप्तिपूर्वकप्राप्तिरूपसंयोगसमवायाऽतिरिक्तसम्बन्धेन यदधिकरणं तद्वैषयिकमधिकरणमिति फलितम् । मोक्षे इच्छाऽस्ति इत्याद्युदाहरणम् । स्थाल्यधिकरणककर्तृवृत्तिविक्लित्यनुकूलव्यापारः । मोक्षविषयकेच्छाकर्तृकसत्तेति बोधः । यत्र सर्वाऽवयवावच्छेदेनाऽभिव्याप्तिस्तदभिव्यापकमधिकरणम् । तिलेषु तैलं, दध्नि सर्पिः, सर्वस्मिन्नात्माऽस्तीत्याद्युदाहरणम् । तिलव्यापकाऽधिकरणकतैलकर्तृकसत्ता । दधिव्यापकाऽधिकरणकसर्पिःकर्तृकसत्ता । सर्वव्यापकाऽधिकरणकाऽऽत्मकर्तृकसत्तेत्येवं रीत्या बोधः । एतान्येव मुख्याधिकरणोदाहरणानि । पूर्वोक्तानि तु गौणाधिकरणस्येति बोध्यम् । अधिकरणत्वशक्तिमानधिकरणविभक्त्यर्थः ॥

क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्—इन्प्रकृतेः क्तान्तस्य कर्मणि सप्तमीति

---

( १ ) उक्तनियमस्वीकारादेवेत्यर्थः ।

सदर्थः । तेनाऽधीती व्याकरणे इत्यत्र सप्तमी । कृतपूर्वीकटमित्यत्र न सप्तमी क्तान्तस्येन्प्रकृतित्वाऽभावात् । अत्र न क्तः किन्तु भावे, अन्यथा क्तप्रत्ययेन कर्मण उक्तत्वात्तत्र सप्तम्यनापत्तेः । अधिपूर्वकादिङ्ग भावे क्ते तत 'इष्टादिभ्यश्चे'ति कर्तरीनौ गुणभूतक्रियया सम्बध्यमानव्याकरणरूपकर्मणि सप्तम्योक्तप्रयोगोपपत्तिरिति बोध्यम् । अत्र कर्मपदेन कालाऽतिरिक्तस्यैव ग्रहणान्मासमधीतीत्यादौ न मासशब्दात्सप्तमीत्यलम् ॥

साध्वसाधुप्रयोगे च—वार्त्तिकमिदं शेषपष्ठ्यपवादभूतं बोध्यम् । ननु 'साधुनिपुणाभ्यामि'त्येव सिद्धेऽत्र साधुग्रहणं व्यर्थमिति चेन्न । अर्चाऽविवक्षणे तत्त्वकथनमात्रेऽपि साधुर्भृत्यो राज्ञ इत्यादौ सप्तम्यर्थन्तस्याऽऽवश्यकत्वात् । नचोक्तसूत्र एवं साधुग्रहणं मास्त्वि.ति वाच्यम् । अर्चाविवक्षणे प्रतिप्रयोगे सप्तमीनिवृत्त्यर्थन्तस्याऽऽवश्यकत्वात् ॥

निमित्तात्कर्मयोगे—प्रत्यासत्त्या स्वाऽन्वयिक्रियाकर्मणा योगे सति निमित्तवाचकात्प्रातिपदिकात्सप्तमीत्यर्थः ।

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ।

द्वीपिचर्मणोरण्डकोपमृगयोश्च समवायसम्बन्धः । दन्तकुञ्जरयोः केशचर्मणोश्च संयोगसम्बन्धः । देवदत्तकर्तृवृत्तिचर्महेतुकद्वीपिनिष्ठप्राणवियोगाऽनुकूलव्यापार इत्यादिक्रमेण बोधः । नचाऽनेन निमित्तवाचकात्सप्तमीविधानात्मुक्ताफलाय करिणं रघुवीर हन्तीति रघुवंशप्रयोगोऽनुपपन्नः, निमित्तवाचकान्मुक्ताफलशब्दात्सप्तम्या दुर्वारत्वादिति वाच्यम् ! मुक्ताफलं लब्धुमित्यर्थे 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थ्या एव प्राप्तेरिति ॥

यस्य च भावेन भावलक्षणम्—भावः क्रिया सा लक्ष्यते येन तद्भावलक्षणम् । यस्येत्यत्र वृत्तित्वं षष्ठ्यर्थः । भावेनेत्यत्र प्रयोज्यत्वं तृतीयाऽर्थः । तथा च यद्वृत्तिक्रियाप्रयोज्यक्रियान्तरं लक्ष्यते ततोऽर्थाज्ज्ञापकक्रियाश्रयवाचकात्प्रातिपदिकात्सप्तमीत्यर्थः । तेन गोषु दुह्यमानासु गत इत्यत्र द्वाभ्यां गोपददुह्यमानपदाभ्यां सप्तमीसिद्धिः । ज्ञापकक्रियाश्रयवाचकः कर्त्ता कर्म च, तत्र ब्राह्मणेष्वधीयानेषु गत इतिकर्तर्युदाहरणम् । कर्मणि तु प्रागेवोदाहृतम् । अत्र काचित्क्रिया स्वाऽऽधारकालेनाऽन्यां क्रियां बोधयति, यथा प्रकृते, काचित्तु स्वाऽऽधारकालाऽव्यवहितपूर्वकालेन गोषु दुग्धास्वित्यादौ । एतत्सूत्रविहितसप्तम्या ज्ञापकत्वमर्थः । इदं सूत्रं स्वप्रवृत्तौ शब्दबोध्यमेव लक्ष्यलक्षणभावमपेक्षते न तु तस्य भूयोऽवयवदर्शनम् । ननु सूत्रेण ज्ञापकक्रियावाचकात्सप्तमीविधानेन राहूपरागे स्नायादित्यत्र ज्ञापकक्रियावाचकपदाऽभावात्सप्तमी न स्यादिति चेन्न । तत्र राहूपरागपदेन तदाश्रयकालस्य ग्रहणेनाऽधिकरणसप्तम्या एव प्राप्तेः । विवाहे नान्दी मुखं कुर्यादित्यत्र विवाहपदेन तत्प्राक्कालस्य ग्रहणादधिकरणसप्तम्येवेति दिक् ॥

अर्हाणां कर्तृत्वेऽनर्हाणामकर्तृत्वे तद्वैपरीत्ये च—यस्यां क्रियायां ये उचितास्तेषां कर्तृत्वे विवक्षिते, तथा यस्यां क्रियायां येषां कर्तृत्वस्य अनौचित्यं तेषां अकर्तृत्वविवक्षणे तथा तद्वैपरीत्ये येषां कर्तृत्वस्यौचित्यन्तेषामकर्तृत्वे येषान्तदनुचितन्तेषां कर्तृत्वे विवक्षिते सप्तमी वाच्येति वार्तिकार्थः। एषामुदाहरणानां मूले एव स्पष्टतया नात्र लिखितानि ॥

**षष्ठी चानादरे**—अनादर इति विषयसप्तमी । यस्य च भावेनेत्याद्यनुवर्तते । तथा च, अनादरस्य गम्यमानत्वे सति यत्क्रियाप्रयोज्यक्रियान्तरं लक्ष्यते ततः षष्ठी सप्तमी चेत्यर्थस्तत्फलितमाह-**अनादराधिक्य इति** । लक्ष्यलक्षणभावोऽत्र षष्ठ्यर्थः । प्रपूर्वकस्य व्रजतेरनादरविशिष्टं प्रव्रजनमर्थः । तत्र षष्ठी तात्पर्य्यं ग्राहयति । प्रत्यासत्त्या पुत्रादिविषयकाऽनादर एव गृह्यते इति भावः ॥

**यतश्च निर्धारणम्**—ननु यस्मात्समुदायान्निर्धारणं पृथक्करणं तादृशसमुदायघटकावृत्तिधर्मवत्त्वबोधनम् यत्र, तत्र तादृशसमुदायवाचकात्प्रातिपदिकात्पष्ठीसप्तम्यौ स्त इत्यर्थेन शब्दस्य समुदायवाचकत्वाऽभावान्नराणां क्षत्रियः शूर इत्यादौ षष्ठ्युपपत्तिर्न स्यादित्यत आह—**जातिगुणक्रियासंज्ञादिभिरिति** । विशिष्टस्येत्यध्याहारः तथा च, जातिगुणक्रियाविशिष्टस्यैकदेशस्य यतः स्वघटितसमुदायात्स्वेतरसमुदायघटकावृत्तिधर्मकरणकं पृथक्करणं तद्वाचकात्प्रातिपदिकात्पष्ठीसप्तम्यावित्यर्थो निर्गलितः । सूत्रे यत इत्यस्याऽभावे यस्य जात्यादिविशिष्टस्य स्वेतरावृत्तिधर्मवत्त्वबोधनं तत एव षष्ठ्यापत्तिः । क्षत्रियत्वजातिविशिष्टस्य क्षत्रियस्य स्वेतरब्राह्मणाद्यवृत्तिशूरत्वधर्मबोधनमिति क्षत्रियशब्दादेव तदापत्तिः तद्व्यावृत्त्यर्थं यत इत्यावश्यकमिति भावः । ननु क्षत्रियशब्दात्प्रथमाया एव प्राप्तौ तस्मादुक्तापत्तेरसम्भवेन कथं यत इत्यस्याऽसत्त्वे ततस्तदापत्तिप्रदर्शनं युक्तमिति वाच्यम् । षष्ठ्यपवादत्ववत्प्रथमाऽपवादत्वस्याऽपि सम्भवात् । स्वघटितसमुदायावधिकस्वेतरसमुदायघटकावृत्ति धर्मकरणकं पृथक्करणरूपनिर्धारणविषयत्वरूपोऽवयवाऽवयविभावरूपश्च सम्बन्धो विभक्त्यर्थः । नृणां नृषु वा द्विजः श्रेष्ठ इत्याद्युदाहरणानि । नृसमुदायावधिकद्विजेतरनराऽवृत्तिश्रेष्ठत्वकरणकपृथक्करणरूपनिर्धारणविषयो द्विजः श्रेष्ठ इत्येवं रीत्या बोधः । निर्धारणविषये उद्भूताऽवयभेदविवक्षया बहुवचनमेव न तु तिरोहिताऽवयवभेदविवक्षयैकवचनं 'कारके' इत्यत्र भाष्ये कारकेष्विति ब्रूयादित्युक्त्या तस्याऽसाधुत्वबोधनात् । नचैवं 'मिदचोऽन्त्यात्परः' इत्यत्रैकवचनं निर्धारणेऽसङ्गतमिति वाच्यम् । तत्र सौत्रत्वादेकवचनोपपत्तेः । नचैवमपि द्वन्द्वः सामासिकस्य चेति गीतावाक्यस्य का गतिरिति वाच्यम् । समाससमूहमध्ये समूहेऽर्थे 'अचित्ते'ति ठक एव तत्र गतित्वादिति दिक् ॥

**पञ्चमी विभक्ते**—अत्र यतश्च निर्धारणमित्यनुवर्तते । विभागश्चात्र भेदः । तत्र निर्धारणे सर्वत्र यथा कथञ्चिद्भेदस्य सत्त्वाद्विभक्तग्रहणसामर्थ्येन यत्र भेद एव तत्रैवाऽस्य प्रवृत्तिर्नतु केनाऽप्युपात्तरूपेण भेदसत्त्वे, इति नियमादाह—**यत्र निर्धार्य्यमाणस्य भेद एवेति** । निर्धारणविषयत्वरूपोऽत्र पञ्चम्यर्थः । माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इत्यतः पाटलिपुत्रकाऽवधिकनिर्धारणविषया माथुरा आढ्यतरा इति बोधः । एवञ्च पूर्वोक्तनिर्धारणनिरूपकवाचकस्य तदाश्रयवाचकस्य उक्तनिर्धारणप्रयोजकधर्मवाचकस्य च यत्रोपादानमुच्चारितेन शब्देन प्रतीतिस्तत्रैवैतत्सूत्रविहितपञ्चम्यन्तस्य साधुत्वम् । ननु पुरुषोत्तम इत्यत्र पुरुषाणामुत्तम इत्यर्थप्रतीत्या 'यतश्च निर्धारणमि'त्यनेन षष्ठीविधानात् 'न निर्धारणे' इति समासनिषेधः स्यादिति चेन्न । सम्बन्धसामान्ये षष्ठ्या समासोपपत्तेरित्यलम् ॥

**नक्षत्रे च लुपि**—लुप्शब्दस्याऽभावबोधकत्वात्तत्र नक्षत्रवाचकस्य वृत्तिर्नस्यादिति

लुप्शब्देन लुप्संज्ञया लुप्तप्रत्ययार्थो लक्ष्यते तदाह—नक्षत्रे प्रकृत्यर्थे यो लुप्संज्ञये-त्यादि—मूलेनाऽऽवाहयेद्देवीमिति । नक्षत्रवाचकान्मूलशब्दात् 'नक्षत्रेण युक्तः कालः' इत्यनेनाऽण् तस्य 'लुबविशेषे' इति लुप् । मूलनक्षत्रयुक्तचन्द्रकालाऽधिकरणदेवीकर्मक-वाहनमिति बोधः । 'सप्तम्यधिकरणे चे'त्यतो मण्डूकप्लुत्याऽनुवृत्तस्याऽधिकरणस्याऽग्रहणे-ऽस्य सूत्रस्य सर्वविभक्त्यपवादत्वेनेतराऽनपेक्षत्वरूपाऽन्तरङ्गत्वात्प्रातिपदिकार्थ एव षष्ठी-सप्तम्योर्विधानेन अद्य पुष्य इति प्रयोगो न सिद्ध्येदिति तदर्थन्तदावश्यकमिति । नक्षत्र इत्यस्याऽसत्त्वे पञ्चालेषु तिष्ठन्ति अत्र पञ्चालशब्दादुभयविभक्त्यापत्तिरतस्तत् । तत्र 'जनपदे लुबि'ति लुप् ॥

सप्तमीपञ्चम्यौ कारकमध्ये—'कालाऽध्वनोरत्यन्तसंयोगे' इत्यस्मात्कालाऽध्व-नोरित्यनयोरनुवृत्तिः । तौ च पञ्चम्या विपरिणम्येते । कारकशब्दोऽत्र शक्तिपरः । मध्य-शब्दस्याऽवधिद्वयसापेक्षत्वाद्द्विवचनान्तेन कारकशब्देन समासः, कारकयोर्मध्ये इति विग्रहः । शक्तिद्वयस्य शक्तित्वेनैव बोधो न तु द्वित्वेन । ननु कर्तृरूपकारकस्यैकत्वाद्भेद-निबन्धनमध्यव्यपदेशो न स्यादिति चेन्न । कर्तृत्वादिशक्तेरेव कारकरूपत्वात्तस्याश्च काल-भेदेन भेदादुक्तव्यपदेशोपपत्तेरित्याह—शक्तिद्वयमध्ये यौ कालाऽध्वानावित्यादि—अवध्यवधिमतोः साजात्यनियमात्कालाऽध्वनोः कारकमध्येऽसम्भवाच्छक्तिशब्देन शक्त्या-श्रयकालग्रहणं बोध्यम् । षष्ठ्या बाधकोऽयं योगः स्वाऽनन्तरकालवृत्तित्वादिकं विभक्त्यर्थः।

यस्य चेश्वरवचनमित्यत्र प्रमाणाऽभावाल्लक्ष्याऽनुरोधेन व्याख्यानाच्च निरूपितत्वस्य वृत्तित्वस्य वा षष्ठ्यर्थत्वेन यन्निरूपितेश्वरत्वं गम्यते यन्निष्ठेश्वरत्वं च गम्यते ततः सप्त-मीत्यर्थ इत्याह—स्वस्वामिभ्यां पर्य्यायेण सप्तमीति—क्रमेणोदाहरणम् । अधि भुवि रामः, अधिरामे भूः । इत्यधिकरणकारकप्रकरणम् ॥

इति कारकप्रकरणम् ।

# अथाव्ययीभावसमासप्रकरणम् ।

ननु कारकान्तेन सुप्संज्ञोद्देश्यसम्बन्धिन्याः संज्ञायास्तत्प्रयुक्तकार्यस्य च निरूपणा-ऽनन्तरं प्रसङ्गतस्समासनिरूपणमारभते—समर्थः पदविधिरिति—विधीयते इति विधिः कर्मसाधनः । तस्य षष्ठ्यन्तेन पदशब्देन समासः । पदस्य विधिः पदविधिरिति । समर्थ-पदस्य समर्थाश्रितोऽर्थः । तथा च, पदसम्बन्धी विधिः समर्थाश्रितो भवतीत्यर्थः । साम-र्थ्यं द्विविधम्—व्यपेक्षारूपम् , एकार्थीभावरूपञ्च अत्रैकार्थीभावरूपमेव सामर्थ्यं न तु व्यपेक्षारूपं व्याख्यानात् समासादिवृत्तिषु तस्याऽसम्भवाच्च । एकार्थीभावश्च ( संसृष्टाऽर्थे समर्थमि)ति भाष्यात् विशेष्यविशेषणभावाऽवगाह्येकोपस्थितिजनकत्वरूपः ।

शाब्दिकनये—समुदायशक्त्यङ्गीकारादस्ति कृत्तद्धितैकशेषसमाससनाद्यन्तधातुरूप-पञ्चवृत्तिष्वेकार्थीभावरूपसामर्थ्यम् । अत एव राजपुरुष इत्यादिसमासे न पदार्थैकदेशे राज्ञि ऋद्धादिविशेषणाऽन्वयः ( पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेने )ति व्युत्पत्तेः । एतत्फलितार्थकथनमेव ( सविशेषणानां वृत्तिर्न वृत्तस्य विशेषणयोगो ने )ति बोध्यम् । नचोक्तरीत्या पदार्थैकदेशे विशेषणान्वयस्याऽभावप्रतिपादनादेव[illegible] , ऋद्ध-

स्य राजमातङ्गा इत्यादेः प्रयोगस्याऽप्रामाण्यापत्तिरिति वाच्यम्। गमकत्वात्तत्र विशेषणाऽन्वयस्य युक्ततया तस्य प्रामाण्योपपत्तेः। न च महादेव इत्यत्राऽऽत्त्वं न स्यात्समासे समुदाये शक्त्या तस्यैवाऽर्थवत्त्वेन तदेकदेशस्याऽनर्थकत्वेन सूत्राप्राप्तेरिति वाच्यम्। सूत्राऽऽरम्भसामर्थ्याद्भूतपूर्वगतेराश्रयणाच्च सूत्रप्रवृत्तेरित्यलम्।

वैयाकरणैः—समासे समुदाये एव शक्तिः स्वीक्रियते नत्ववयवे; तथाहि–रथन्तरं, सप्तपर्णः, शुश्रूपेत्यादाववयवार्थप्रतीत्यभावात्समासादिपञ्चसु विशिष्ट एव शक्तिः। अत एव व्यपेक्षापक्षस्योद्भावनं कृत्वा (अथाऽस्मिन् व्यपेक्षारूपसामर्थ्ये योऽसावेकार्थीभावकृतो विशेषः स वक्तव्य) इत्युक्तम्भाष्ये। अत एव च धवखदिरौ। निष्कौशाम्बिः। गोरथः। घृतघटः। गुडधानाः। केशचूडः। सुवर्णालङ्कारः। द्विदशाः। सप्तपर्णः इत्यादौ साहित्य–क्रान्त–युक्त–पूर्ण–मिश्र–संघात–विकर–सुच्प्रत्ययलोप–वीप्साद्यर्था न वचनरूपेण वाच्या भवन्ति। अन्यथा तत्तदर्थं वचनं कर्त्तव्यमेव।

यत्तु तार्किकमीमांसकादयः—राजपुरुष इत्यादौ राजपदादेः सम्बन्धिनी लक्षणयैव राजसम्बन्धवदभिन्नः पुरुष इति बोधः स्यादेव समासे न स्वीकार्या शक्तिः। अत एव राज्ञः पदार्थैकदेशत्वेन तत्र ऋद्धादिविशेषणाऽन्वयो न (पदार्थः पदार्थेनान्वेति) इत्युक्तेः (सविशेषणानां वृत्तिर्न)त्युक्तेश्च। धवखदिरावित्यादौ न साहित्याद्यर्थप्रत्यायकवचनकर्त्तव्यतापत्तिः लक्षणयैवोक्तार्थत्वात् (उक्तार्थानामि)ति न्यायेन तदप्रयोगात्। लक्षणया राजसम्बन्ध्यभिन्न इति बोधनेच्छायां समासस्य, राजसम्बन्धवानिति बोधनेच्छायां विग्रहस्य च प्रयोगनियमसम्भवे 'विभाषे'ति सूत्रस्याऽपि नाऽऽवश्यकत्वम्। न चोक्तस्थलेपूक्तप्रकारेण विशिष्टशक्त्यनभ्युपगमेऽप्यवयवशक्त्यैव निर्वाहेऽपि पङ्कजशब्दात्पङ्कजनिकर्तृरूपार्थलाभार्थं समुदायशक्तिरावश्यिकेति वाच्यम्। उक्तार्थस्य योगादेव लाभादित्याद्याहुः।

तन्न, विशिष्टशक्त्यनङ्गीकारे विशिष्टस्याऽर्थवत्त्वाऽभावेन प्रातिपदिकत्वाऽनापत्तेः। अत एव अर्थवत्सूत्रभाष्ये अर्थवदिति किम्। अर्थवतां समुदायोऽनर्थकः, दश दाडिमानि षडपूपाः, कुण्डमजाजिनमिति प्रत्युदाहृतम्। एवञ्च त्वन्मते राजपुरुषपदयोः प्रत्येकमर्थवत्त्वेऽपि समुदायस्य तत्त्वाऽभावात्प्रातिपदिकत्वं न स्यात्। नचोत्तरसूत्रे समासग्रहणात्सुलभैव संज्ञेति वाच्यम्। समासग्रहणस्य नियमार्थत्वस्य भाष्यकृतैवोक्तत्वात्। अन्यथा सिद्धिं विना नियमत्वाऽसम्भवात्। समासग्रहणस्य नियमार्थत्वादेव राज्ञः पुरुषः, देवदत्तः पचतीत्यादिवाक्यस्य मूलकेनोपदंशमित्यादेश्च न प्रातिपदिकसंज्ञा। किञ्च विशिष्टशक्त्यस्वीकारे शक्यसम्बन्धरूपलक्षणाया अप्यसम्भवाल्लाक्षणिकार्थवत्त्वस्याऽप्यभावेन सर्वथा प्रातिपदिकत्वाऽभावस्य निश्चितत्वेन स्वाद्यनुत्पत्तौ (अपदं न प्रयुञ्जीते)ति भाष्यात्समस्तप्रयोगविलयाऽऽपत्तिरित्यलम्॥

ननु पूर्वं भूत इति विग्रहे 'सुपा' इत्यनेन समासे समासत्वात्प्रातिपदिकसंज्ञायाम् 'सुपो धातुप्रातिपदिकयोरि'त्यनेन प्रातिपदिकाऽवयवस्य सुपो लुकि पूर्वभूत इत्यत्रोभयोः पूर्वभूतशब्दयोरुक्तसमाससंज्ञाविधायकशास्त्रघटकप्रथमान्यपदबोध्यत्वादुपसर्जनसंज्ञाप्राप्तौ द्वयोस्तस्यां सत्यां पर्यायेण पूर्वप्रयोगापत्त्या निर्देशोपपत्तौ निर्देशादित्यादिमूलोक्तस्याऽसङ्गत्यापत्तिरिति चेन्न। उपसर्जनेतिमहासंज्ञाकरणसामर्थ्याच्छास्त्रीयोपसर्जनत्वसमानाऽधिकर

गलौकिकोपसर्जनत्ववत एव पूर्वनिपात इति कल्पनेन प्रकृते भवनक्रियाविशेषणत्वेन पूर्व-शब्दस्यैवोपसर्जनसंज्ञया पूर्वप्रयोगप्राप्तौ निर्देशोऽपपत्त्या तदर्थम्मूलोक्तस्याऽऽवश्यकत्वेन तत्संगच्छेरित्याह—**भूतपूर्वे चरडिति निर्देशाद्भूतशब्दस्यैव पूर्वनिपात इति—**

ननु निपातेनाऽभिनाऽधिकरणरूपार्थस्योक्तत्वेन (उक्तार्थानामप्रयोगः) इति न्यायेन तदर्थकसप्तम्या अभावेन समासाऽभावादधिहरीति प्रयोगो न स्यादित्याह—**निपातेनाऽभिहितेऽप्यधिकरणे वचनसामर्थ्यात्सप्तमीति।** उक्तरीत्या सप्तम्या अभावेन समासाऽप्राप्त्या विभक्त्यर्थे समाससंज्ञाविधायकवचनस्यासंगतिरिति तदनुरोधादुक्तेऽप्यधिकरणरूपार्थे सप्तम्या समास इति भावः। न च तिङ्कृत्तद्धितेतिपरिगणनादधिनोक्तत्वेऽपि सप्तमी स्यादेव वचनसामर्थ्यात्सप्तम्याः कल्पनं न युक्तमिति वाच्यम्। तस्य भाष्ये प्रत्याख्यातत्वात्। नचाऽन्यसुबन्तेनाऽपि समासेऽधिहरीति प्रयोगसिद्धिस्स्यादेव वचनसामर्थ्यादिति प्रयासो न विशेषफलजनक इति वाच्यम्। प्रत्यासत्त्या यद्विभक्त्यर्थवाचकाऽव्ययेन सुबन्तस्य समासस्तद्विभक्त्यर्थवाचकसुबन्तस्यैव ग्रहणेनाऽन्यविभक्त्यर्थवाचकसुबन्तेन समासस्याऽनिष्टत्वादिति दिक्॥

ननु समया ग्राममित्यादौ आराद्वनादित्यादौ च समासो दुर्वार इति पूर्वपक्षे समाधत्ते—**आराद्वनादित्यत्र तु नाऽव्ययीभाव इति।** यद्युक्तस्थलेषु समासः स्यात्तदा (अभितः) इति वार्त्तिकेन 'अन्यारादि'ति सूत्रेण च द्वितीयापञ्चम्योर्विधानस्य सर्वथा वैयर्थ्यं स्यादिति ताभ्यां तयोर्विधानसामर्थ्येन तदभावकल्पनमिति भावः। न च मध्यार्थकसमयाशब्दयोगे दूरार्थकाऽऽराच्छब्दयोगे च द्वितीयापञ्चम्योश्चारितार्थ्येन सामर्थ्यात्समासाऽभावकल्पनमयुक्तमिति वाच्यम्। 'दूरान्तिकार्थैरि' त्यनेन षष्ठीपञ्चम्योः प्राप्तौ षष्ठ्यपवादतया पञ्चम्या विधानेनाऽन्तिकार्थकाऽऽराच्छब्दयोगे षष्ठ्यपवादत्वेन पञ्चमीविधानस्य निरवकाशतया तत्सामर्थ्यादव्ययीभावाऽभावकल्पनस्य युक्तत्वात्। द्वितीयाविधानसामर्थ्यादव्ययीभावाऽभावकल्पनं तु न युक्तमुक्तस्थले द्वितीयाविधानस्य चरितार्थत्वात्॥

**दुर्यवनमिति**—ननु अर्थाऽभावाऽर्थकस्याऽपि दुरः सत्त्वादर्थाऽभावेन वात्र समाससिद्धौ व्यृद्ध्यर्थे समासविधानं विफलमिति चेन्न। येन समस्यते तदीयाऽर्थाभावे समासाऽभ्युपगमेन प्रकृते यवनऋद्धेरेवाभावसत्त्वेन यवनानामभावाऽभावात् तत्र समासाऽसिद्ध्यर्थं व्यृद्ध्यर्थे समासविधानस्य साफल्यात्॥

**निर्मक्षिकमिति**—मक्षिकाणामभाव इति विग्रहः। संसर्गाऽभावेऽयं समासो नत्वन्योन्याभावेऽपि। नचाऽत्र किं विनिगमकमिति वाच्यम्। अर्थग्रहणसामर्थ्यात्समस्यमानपदजन्यप्रतीतिविशेषविरुद्धाऽभावस्यैव ग्रहणेनाऽन्योन्याभावस्य तु प्रतियोगिताऽऽवच्छेदकेनैव विरोधेन तस्य च प्रकारत्वेऽपि विशेष्यत्वाऽभावेनाऽस्यैव तत्र गमकत्वात्॥

**अतिहिममिति**—हिमस्याऽत्यय इति विग्रहः। अत्ययाऽर्थेऽव्ययीभावः। परञ्चास्य सूत्रे ग्रहणं विफलमर्थाभावेनैव गतार्थत्वात्। अभावश्चात्र संसर्गाऽभाव एव, नत्वन्योन्याऽभावः। अन्यथा घटः पटो नेत्यत्रऽतिप्रसङ्गः स्यात्॥

**शब्दप्रादुर्भाव**—इत्यस्य शब्दविषयप्रकाशार्थेनाऽव्ययेन समास इत्यर्थः। अस्योदाहरणम्—इतिहरीति। अत्र हरिशब्दस्य स्वस्वरूपपरत्वं, तादृशषष्ठ्यन्तहरिशब्देन शब्दप्रकाशार्थकस्येतिशब्दस्य समासः॥

अनुविष्णु—विष्णोः पश्चादिति विग्रहः। अत्र अचः परस्मिन्निति सूत्रस्थात् ( ततः पश्चात्स्त्रंस्यते ध्वंस्यते चे )ति भाष्यप्रयोगात्। अनेकमन्यपदार्थे इति सूत्रस्थ-( सर्वपश्चादि ) ति भाष्यप्रयोगाच्च न पश्चाच्छब्दस्य समासः; किन्तु तदर्थकाऽनुशब्दस्यैव एतद्भाष्यप्रयोगादेतत्सूत्रे तत्तदर्थबोधकपदघटकतया गृहीताऽव्ययेन तत्तदर्थेन नायं समासः। अत एव 'यथाऽसादृश्ये' इतिसूत्रस्थभाष्ये सादृश्यसम्पत्तीति प्राप्नोतीत्युक्तम्। यथाशब्देन तुल्तसूत्रारम्भसामर्थ्यात्समासो भवत्येवेत्यलम्। नचास्य समासे का क्षतिरिति वाच्यम्। तथासति तस्य पूर्वनिपातापत्तेः।

ननु अविग्रहो नित्यसमासोऽस्वपदविग्रहो वेति नित्यसमासलक्षणसत्त्वे वाक्यं दुर्लभमित्यत आह—प्रतिशब्दस्य वीप्सायामित्यादि। इति प्राञ्चः। वस्तुतस्तु-प्रतिस्थानमित्यादौ पत्वाऽभावसम्पादनेन चरितार्थत्वात्सामर्थ्यविरहेण तत्सामर्थ्याद्वाक्यस्याऽसाधुत्वमिति, (अर्थमर्थम्प्रतिप्रत्यर्थमि)ति सरूपसूत्रस्थभाष्यप्रयोगाद्यदा द्विर्वचनं तदा प्रतिशब्दस्य वृत्तित्वाऽभावेन समासेन वीप्साया उक्तत्वान्न द्विर्वचनमित्यलम्॥

ननु समृद्धिसम्पत्त्योः पर्यायत्वादन्यतरग्रहणं न कार्यमित्याशङ्क्य समाधत्ते—ऋद्धेराधिक्यं समृद्धिरिति।

यथाऽसादृश्ये—असादृश्य इतिछेदः, असादृश्येऽर्थे विद्यमानो यथाशब्दः समर्थेन सुपन्तेन सह समस्यते इति तदर्थः। यथा हरिस्तथा हर इत्यत्र न समासः, यथाशब्दस्य सादृश्यार्थकत्वेनासादृश्येऽविद्यमानत्वात्। तत्र हरेरुपमानत्वस्य यथाशब्दो द्योतकः। ननु यथाहरिरित्यत्र यथाशब्दस्याऽसादृश्यार्थकत्वाऽभावेन समासाऽभावः समुचित एव, तथाहरिरित्यत्र तथाशब्दस्य सादृश्यार्थकत्वात्पूर्वसूत्रेण समासो दुर्वार इति चेन्न। सदृश इत्युक्त्या नियमतः प्रतियोग्याकांक्षादर्शनात्सादृश्यप्रतियोगिवाचकसमर्थसुबन्तेनैव तद्बोधकाऽव्ययस्य समास इति कल्पनेनोक्तापत्तेस्तत्राऽयोगात्। यथाशब्दः समर्थसुबन्तेन सह समस्यते सादृश्ये द्योत्ये नेति, 'यथाऽसादृश्ये' इत्यस्याऽर्थः। यथाशक्ति, यथाबलमित्याद्यस्योदाहरणम्। अत एव असादृश्ये इतिकिमर्थं यथा देवदत्तस्तथा यज्ञदत्त इत्युक्तं; न तु सूत्रमेव किमर्थमित्युक्तम्। ननु यथार्थत्वेनैव सिद्धौ सूत्रमिदम्व्यर्थमिति चेन्न। सूत्रगृहीताऽव्ययेन तेनाऽसमासेन सूत्रस्याऽवश्यकत्वात्। सूत्रगृहीताऽव्ययेन तेनऽसमासेन सूत्रस्याऽपि ज्ञापकत्वात्। न च प्रकारवचने विहितेन थाल्प्रत्ययेन निष्पन्नस्य यथा शब्दस्य सर्वथा सादृश्यद्योतकत्वात्सूत्रोदाहरणाऽसम्भवेन सूत्रं व्यर्थमिति वाच्यम्। अव्युत्पन्नस्य वीप्सायोग्यतापदार्थानवृत्तिबोधकस्यैव यथाशब्दस्याऽत्र सूत्रे ग्रहणेनोक्तयुक्त्योपपन्नस्य तस्याऽग्रहणादुदाहरणसम्भवेन सूत्रस्याऽवश्यकत्वात्। उदाहरणे यथाशक्ति, यथाबलमित्यादावुक्तार्थक एव यथा शब्द इति तत्र समासार्थं सूत्रमावश्यकमेवेति बोध्यम्। न च यथाशब्दस्य व्यञ्जनयोपमानत्वप्रतिपादकत्वमिति निखिलाऽभियुक्तोक्त्या यद्विशेषवान् हरिस्तद्विशेषवान् हर इत्युक्तबोधाऽनन्तरं व्यञ्जनयोपस्थापितार्थस्य शाब्दबोधविषयत्वं भवत्येवेति, उपमानदेवदत्ताऽभिन्न उपमेयो यज्ञदत्त इति बोधः, साधारणधर्मस्तु गृहीतविशेषणां एव।

(१)साधयन्ती सखि सुभगं क्षणे क्षणे दूनासि मम कृते ।
सद्भावस्नेहकरणीयसदृशं तावद्विरचितन्त्वया ॥

इति लक्षणामूलव्यञ्जनास्थल इव लक्ष्यार्थव्यङ्ग्यार्थयोरुभयोः शब्दजन्यबोधविषयत्वं सुवचम् । उपमानोपमेययोरभेदान्वयस्य सत्त्वादेव तयोः समानविभक्तिकत्वम् । एवञ्च पूर्वपदार्थत्वेनाऽप्रसक्त्या सूत्रेऽसादृश्य इति व्यर्थमिति वाच्यम् । सूत्रे प्रकारार्थकस्यैव यथाशब्दस्य ग्रहणेन तत्सामर्थ्याद्द्विमुनि व्याकरणमित्यादौ पूर्वपदार्थाऽप्राधान्येऽपि समासवत्तत्राऽपि समासस्य निर्बाधेनाऽसादृश्ये इत्यस्याऽऽवश्यकत्वात् । कृतेऽसादृश्यग्रहणे तु प्रकारवचनभिन्नस्याऽव्युत्पन्नस्यैव यथाशब्दस्याऽत्र सूत्रे ग्रहणेनोदाहरणसिद्धौ न कोऽपि बाधक इति । नचोदाहरणभूतयथाशक्ति, यथाबलमित्यादौ प्रकारार्थकथाल्न्तस्यैव यथाशब्दस्य ग्रहणमस्तु, तादृशस्य यथाशब्दस्य सादृश्येऽपि वृत्तेर्दर्शनात्साहश्यसम्पत्तीत्यनेनैव समासः स्यात् पूर्वसूत्रे ( अव्ययं विभक्ती )त्यादौ यथाग्रहणमस्तु सूत्रमिदञ्च मास्त्विति वाच्यम् । 'यथाऽसादृश्ये' इत्येतत्सूत्रारम्भसामर्थ्यात्सादृश्ये पदार्थानतिवृत्तिबोधकस्य यथाशब्दस्याऽप्रयोगेण सादृश्यसम्पत्तीत्यनेन समासाऽप्राप्त्या तदर्थमस्य सूत्रस्याऽऽवश्यकत्वात् । अव्युत्पन्नप्रकारार्थकयथाशब्दसत्त्वे इदमेव सूत्रं मानं बोध्यमित्यलम् ॥

विभाषा—अधिकारसूत्रमिदम् । ननु एकार्थीभावे समासस्य व्यपेक्षायां वाक्यस्य च सिद्धौ सूत्रमिदं व्यर्थम् । नचैकार्थीभाव एव समासविकल्पार्थमिदमावश्यकमिति वाच्यम् । नह्येकार्थीभावे संज्ञाया अभाव इत्यर्थकस्य ( न च संज्ञाया भावाऽभावाविष्येते ) इति भाष्यस्य विरोधदुर्वारतया एकार्थीभाव एव वैकल्पिकसमासस्याऽनिष्टत्वात् । एवमेकार्थीभावाभावेन समासाऽप्राप्त्या समासनिषेधसूत्राणि ( नित्यंक्रीडाजीविकयोरि )त्यत्र नित्यग्रहणञ्च नावश्यकानीति चेन्न । लक्षणैकचक्षुष्कान् प्रति क्वैकार्थीभावो नित्यः क्व पाक्षिकः क्व नाऽस्तीत्यर्थबोधनार्थं विभाषेति सूत्रस्याऽऽवश्यकत्वात् ॥

एतत्सामर्थ्यात्प्राचीनानां नित्यसमासत्वमिति—अयम्भावः-प्रागेव विभाषाधिकारस्य कर्तुमुचितत्वादत्रैतत्करणसामर्थ्यादितः पूर्वेषां नित्यत्वमेवेत्यवगम्यते । नचैवं ( सुप्सुपे ) त्यस्याऽपीतः पूर्वत्वान्नित्यत्वाऽपत्तिरिति वाच्यम् । तथा सत्यनेनैव सिद्धेऽव्ययं विभक्तित्यादिना समासविधानस्य वैयर्थ्यापत्तेः । नचाऽव्ययमित्यादिना समासाविधानेऽव्ययस्य समासशास्त्रप्रथमानिर्दिष्टस्योपसर्जनसंज्ञाविधायकेन (प्रथमानिर्दिष्टमि)ति शास्त्रेणाऽव्ययस्य नियमेनोपसर्जनसंज्ञाविधानाऽनुपपत्त्याऽधिहरीत्यादावध्यादेरपि परप्रयोगाऽऽपत्तिरिति वाच्यम् । समासव्याप्यसंज्ञाविधायके प्रथमानिर्दिष्टमुपसर्जनमिति प्रथमानिर्दिष्टमित्यस्यार्थकरणेनाऽव्यादेः परप्रयोगाऽऽपत्त्यभावादव्ययमित्यस्य वैयर्थ्येन तत्सामर्थ्यात्सुप्सुपेत्यस्य न नित्यत्वमिति दिक् ॥

इत्यव्ययीभावसमासप्रकरणम् ।

---

(१) अत्र नायकसमीपे प्रेषिता या दूती सा तन्नायकोपभोगेन निवृत्तेच्छा भूत्वा पुनर्नायिकासमीपे आगत्य स नाऽऽयातीत्युक्त्वा विरता तत उपभोगचिन्हेन तं वृत्तान्तं ज्ञात्वा तां दूतीम्प्रति नायिकाया उक्तिरियम् । मम प्राणप्रियं रमयन्त्या त्वया सदृशमनुचितमिति लक्ष्यते ।

# अथ तत्पुरुषसमासप्रकरणम् ।

ननु (तत्पुरुष) इत्यधिकारसूत्राऽनन्तरं (संख्यापूर्वो द्विगुश्चे)तिसूत्रकरणाच्चकारबलेन द्विगुतत्पुरुषयोःसमावेशः स्यात् । न च चकारस्योक्तसंज्ञाद्वयपर्य्यायार्थत्वेन समुच्चयार्थत्वाऽभावात् कथमुभयोः समावेशः स्यादिति वाच्यम् । (संख्यापूर्वो द्विगुरि)ति योगं विभज्य पूर्वेण (तद्धितार्थोत्तरपदसमाहारे च)त्यत्रोक्तस्य संख्यापूर्वस्य तत्पुरुषसंज्ञाविधानसामर्थ्यादेव पर्य्यायत्वसिद्धौ चकारस्य संज्ञाद्वयसमावेशार्थत्वाक्षतेः । एवञ्च द्विगुश्चेति सूत्रमनावश्यकमेवेत्याह—इदं सूत्रं त्यक्तुं शक्यमिति । द्विगुश्चेति सूत्रमित्यर्थः ।

ननु द्विगोस्तत्पुरुषत्वे किम्फलमित्यत आह—समासान्तः प्रयोजनं पञ्चराजमिति । पञ्चानां राज्ञां समाहार इति विग्रहे (राजाहः सखिभ्यष्टच्) इति टच् । न च (अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः) इत्यनेन टजन्तोत्तरपदस्य द्विगोः पञ्चराजस्य स्त्रीत्वबोधनेन टित्वान्ङीप् दुर्वार इति वाच्यम् । टचः समासस्यैवाऽन्ताऽवयवत्वं न तूत्तरपदस्येति उत्तरपदस्याऽकारान्तत्वाऽभावादुक्तवार्त्तिकेन स्त्रीत्वाऽबोधनेन ङीपोऽप्राप्तेः । न च समासार्थे यदुत्तरपदं तदन्तस्यैव समासान्तत्वमित्यर्थके समासार्थोत्तरपदान्ताः समासान्ता इति पक्षे द्विगोरकारान्तोत्तरपदत्वेन स्त्रीत्वादुक्तदोषस्तदवस्थ एवेति वाच्यम् । अत्र पक्षे पात्रादित्वान्नेत्यनेनैव दोषोद्धारादित्यलम् । पञ्चराजीति काशिकायामुदाहृतं तन्न युक्तमिति हरदत्तः । केचित्तु पात्रादित्वान्ङीबभावकल्पने विनिगमकाऽभावात्काशिकोक्तोदाहरणं युक्तमेवेत्याहुरिति दिक् ॥

द्वितीया श्रितातीतपतितेति—द्वितीयायाः प्रत्ययत्वेन प्रत्ययग्रहणपरिभाषया तदन्तविधिः । श्रितादीनां सुबन्तत्वाऽसम्भवेन स्वप्रकृतिके लक्षणा । तथा च द्वितीयान्तं श्रितादिप्रकृतिकैरित्यर्थः सम्पन्नः । न च सम्बोधने श्रितादीनां सुबन्तत्वासम्भवेन तेषां स्वप्रकृतिके लक्षणा नाऽऽवश्यिकेति वाच्यम् । (येन विधिरि)ति सूत्रस्थभाष्यप्रामाण्येन सम्बुद्धिस्त्रीलिङ्गप्रथमान्तभिन्नेऽपि समासस्येष्टत्वेन श्रितादीनां लक्षणाया आवश्यकत्वात् । श्रितादीनां समर्थविशेषणत्वात्प्राप्तस्य तदन्तविधेः (समासप्रत्ययविधौ प्रतिषेधः) इत्यनेन निषेधात्कष्टं परमश्रित इत्यादौ न समासापत्तिः । तदन्तविधौ तु श्रिताद्यन्तसमर्थप्रकृतिकैरित्यर्थे तत्रोक्तापत्तिर्दुर्वारैवेति दिक् ॥

स्वयं क्तेन—ननु अत्र सूत्रे आत्मनेत्यर्थकस्य स्वयमित्यव्ययस्य कर्तृत्वनिष्ठविशेष्यतानिरूपितबोधजनकत्वेन कर्मत्वविशेष्यकबोधजनकत्वाऽभावान्न द्वितीयायाः सम्बन्धः; किन्तु तृतीयाया एवेत्याह—द्वितीया तु नेह सम्बध्यते; अयोग्यत्वादिति—असम्भवादिति तदर्थः । क्तस्य प्रत्ययत्वात्प्रत्ययग्रहणपरिभाषया तदन्तविधौ स्वयमित्यव्ययं क्तान्तप्रकृतिकसमर्थसुबन्तेन सह समस्यते इति सूत्रस्यार्थः । स्वायंकृतिरित्युदाहरणम् । समासे स्वयंकृतशब्दादिञि आद्यचो वृद्धौ रूपं सिद्ध्यतीति समासस्योक्तप्रयोगोपपत्तिरैकपद्यमपि फलबोध्यम् । तदभावे तु कृत इत्यस्यैव षष्ठ्यन्तत्वेन तत एवोक्तप्रत्यये ऋकारस्य वृद्धौ रपरत्वे स्वयंकार्तिरित्यापत्तिरिति दिक् ॥

खट्वा क्षेपे—द्वितीया श्रितेत्यतो द्वितीयायाः स्वयं क्तेनेत्यतः क्तेनेत्यस्य चानुवृत्तिः, तयोश्च प्रत्ययत्वात्प्रत्ययग्रहणपरिभाषया तदन्तविधिः । क्षेपो निन्दा । खट्वा

शब्दस्य स्वप्रकृतिके लक्षणा, तथा च-खट्वाप्रकृतिकं द्वितीयान्तं क्तान्तप्रकृतिकसमर्थसुबन्तेन सह समस्यते सति निन्दाया गम्यमानत्वे इति सूत्रार्थः । खट्वारूढ इत्युदाहरणम् । खट्वामारूढ इति विग्रहः । स जाल्म इत्युच्यते । असमीक्ष्यकारीति तदर्थः ।

जाल्मोऽसमीक्ष्यकारी स्यात्कुण्ठो मन्दः क्रियासु यः ।

इत्यमरोक्तेः—समाप्तवेदव्रतेन पुरुषेण खलु खट्वाऽऽरोढव्या ब्रह्मचारिणैव भूमौ शयितव्यम् । अनेनैव खट्वाऽऽरुह्यते चेदयमेव जाल्म इत्युच्यते । अस्य शब्दस्य रूढत्वादुक्तेऽपि खट्वाऽऽरोहणे निन्दितानुष्ठानपरस्य सर्वस्याऽपि खट्वारूढत्वं बोध्यम् । अत एवाह—नित्यसमासोऽयमिति—वाक्येन निन्दाऽप्रतितेरिति भावः ॥

**तृतीयान्तं तत्कृतार्थेन गुणवचनेन**—सौत्रत्वात्तत्कृतेति लुप्ततृतीयान्तम् । तृतीयान्तपरामर्शितच्छब्देन तृतीयान्तार्थो लक्ष्यते । गुणवचनस्य शब्दत्वात् तृतीयान्ताऽर्थकृतेत्यस्याऽर्थद्वारा गुणवचनविशेषणत्वं तृतीयान्तार्थकृतो यो गुणस्तद्वचनेनेति, एतत्फलितार्थमाह—**तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेनेत्यादि**—ननु गुणवचनेनेत्यत्र वचनग्रहणं व्यर्थं गुणशब्दस्य धर्ममात्रपरत्वेन तेन समासाऽसम्भवेन तद्वाचिन एव ग्रहणादिति चेन्न । गुणमुक्तवानिति व्युत्पत्त्या गुणवाचित्वविशिष्टद्रव्यवाचिन एव ग्रहणार्थं वचनग्रहणस्य सार्थक्यात् । तेन घृतेन पाटवमित्यादौ न समासः । तत्र गुणशब्दस्य धर्ममात्रपरत्वादेव खण्डशब्दस्य क्रियावचनत्वेऽपि न कोऽपि दोषः । अस्य सूत्रस्य कृतशब्दार्थद्वारकसामर्थ्ये एव प्रवृत्तिर्न तु साक्षात्परम्पराऽन्वये । अन्यथोत्तरसूत्रेण निपुणश्लक्ष्णशब्दाभ्यां समासविधानं व्यर्थं स्यात् । न च सदृशशब्दस्याऽप्युक्तार्थे ज्ञापकत्वसम्भवात्कथमुभयोरेवोपादानमिति वाच्यम् । सदृशशब्दस्याऽनावश्यकत्वस्य प्रदिपादयिष्यमाणत्वात् । गुणवचननेनेत्यत्र गुणशब्दस्य तत्कृतेत्येतत्सापेक्षत्वेऽपि सौत्रत्वात्समासो बोध्यः । सूत्रे तत्कृतेत्यस्याऽनुपादानेऽक्ष्णा काण इत्यत्राऽपि समासापत्तिः, तदुपादाने तु अक्ष्णा काणत्वस्याऽकरणात्किन्तु कर्मादिनैव तत्करणात्काणशब्दस्य तृतीयान्तार्थकृतगुणवचनत्वाऽभावान्नोक्ताऽऽपत्तिः । गुणवचनेनेत्यस्याऽभावे गोसम्बन्धिदध्यादिभोजने देवदत्तादेर्वपावत्त्वात्तृतीयान्तार्थकृतत्वेन गोभिर्वपावानित्यादौ समासाऽऽपत्तिः । तत्सत्वे तु देवदत्तादेर्गुणवचनत्वाऽभावान्नोक्तापत्तिरिति दिक् ॥

**पूर्वसदृशसमोनार्थकलह**-ननु (तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्यामि)त्यनेन सदृशशब्दयोगे षष्ठ्या अपि विधानात्सदृशशब्देन षष्ठीसमाससिद्धावत्र सूत्रे सदृशग्रहणं व्यर्थम् । नचोक्तसूत्रविहितषष्ठ्याः प्रतिपदविधानषष्ठीत्वात् (प्रतिपदविधाना षष्ठी न समस्यते) इति निषेधवचनस्य जागरूकत्वादुक्तसमासाऽप्राप्त्या समासार्थन्तत्र सदृशग्रहणमावश्यकमिति वाच्यम् । उक्तसूत्रषष्ठ्या न प्रतिपदविधानत्वमित्यस्य प्रतिपादयिष्यमाणत्वात् । न च (तत्पुरुषे तुल्यार्थतृतीया)इत्यनेन पूर्वपदप्रकृतिस्वरसिद्ध्यर्थं सदृशग्रहणमस्त्विति वाच्यम् । ( सदृशप्रतिरूपयोः सादृश्ये ) इत्यनेनैवोक्तस्वरसिद्धेः । तत्र हि दास्याः सदृश इत्यादौ षष्ठ्या अलुकि पूर्वपदप्रकृतिस्वरार्थं सदृशग्रहणमावश्यकम् । न च मनसा सदृश इत्यत्र समासार्थमस्तु सदृशग्रहणमिति वाच्यम् । तस्य संज्ञात्वाऽभावेन तदर्थमपि तस्याऽनावश्यकत्वात् । एवञ्च प्रयोजनाऽभावाद्व्यर्थमेव सदृशग्रहणमिति चेन्न । भोजनेन सादृश्यवानित्यर्थे भोजनसदृश इत्यत्र समासार्थन्तस्याऽऽवश्यकत्वात् । न चा-

ऽत्रापि हेतोः शेषत्वविवक्षया षष्ठीत्यनेनैव समाससिद्धावेतदर्थमपि तदनावश्यकमेवेति वाच्यम् । उक्तरीत्या समासोपपत्तावुक्तस्वरसिद्ध्यापत्तेः । न च सदृशप्रतिरूपयोः सादृश्ये इत्यनेनैव स्वरसिद्धिरिति वाच्यम् । तत्र सादृश्यग्रहणेन तस्योपमानबोधकपूर्वपदके एव प्रवृत्तेः ।

वस्तुतस्तु—भोजनेन कृतः सदृश इत्यर्थे (तृतीया तत्कृतार्थेनेति) (तत्पुरुषे तुल्यार्थ)ेति सूत्राभ्यां समासस्वरसिद्ध्युपपादने तु व्यर्थमेव सदृशग्रहणमिति ध्वनितं प्रकृतसूत्रस्थकैयटे इत्यलमतिविस्तरेण ॥

**मिश्रग्रहणे सोपसर्गस्याऽपि ग्रहणमिति**—पणबन्धेनैकार्थ्यं सन्धिस्तस्मिन् गम्यमाने सति अनुपसर्गतृतीयान्तात्परं इत्युत्तरपदमन्तोदात्तमित्यर्थके 'मिश्रं चाऽनुपसर्गमसन्धावि' ति सूत्रे (समासप्रत्ययविधौ प्रतिषेधः) इत्यनेन तदन्तविधिप्रतिषेधात्सोपसर्गेण समासाऽप्राप्त्याऽनुपसर्गेणैव समाससिद्धौ व्यावर्त्याऽभावाद्व्यर्थमनुपसर्गग्रहणमुक्तमर्थं ज्ञापयतीति भावः ॥

ननु (कर्तृकरणे कृते)त्यस्य कर्तृकरणयोरर्थयोर्विहिततृतीयान्तस्य बहुलं समास इत्यर्थे प्रत्ययग्रहणपरिभाषया निर्विशिष्टभिन्नस्य कृदन्तत्वाऽभावेन नखनिर्भिन्न इत्यत्र समासो न स्यादत आह—**कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति**—यत्र गतिकारकसमभिव्याहृतं कृदन्तं तत्र गतिकारकसमभिव्याहृतस्यैव कृदन्तस्य ग्रहणमपिशब्दात्तदसमभिव्याहृते कृदन्ते केवलस्याऽपि तस्य ग्रहणमिति तदर्थः । तथा च-अवतरणदलोक्तोदाहरणे नीरूपगतिविशिष्टस्य भिन्नस्य कृदन्तत्वात्समाससिद्धिरिति सर्वमनवद्यमिति भावः ॥

**बहुलग्रहणं सर्वोपाधिव्यभिचारार्थमिति**—बहूनर्थान् लातीति बहुलमिति बहुलपदस्यार्थात् कर्तृकरणयोर्विहितस्यापि क्वचिन्न समासः क्वचिद्विभक्त्यन्तरस्याऽपि समासः । दात्रेण लूनवान्, दात्रेण छिन्नवान्, हस्तेन कुर्वन्नित्यादीन्याद्यस्योदाहरणानि । पादहारकः, गलेचोपक इत्यादि द्वितीयस्य । ह्रियते इति हारकः, बाहुलकात्कर्मणि ण्वुल् पादाभ्यां हारकः पादहारकः । पादाभ्यामित्यपादानपञ्चम्यन्तस्य समासः । चोपयतीति चोपकः, हेतुमण्ण्यन्ताच्चुप मन्दायां गतावित्यस्मात्कर्मणि ण्वुल् । गले चोपको गलेचोपकः, (अमूर्धमस्तकादि)ति सप्तम्या अलुक् ॥

ननु सूत्रे सुपेत्यधिकारात्तिङन्तेन समासाऽनतिप्रसक्त्या कर्तृत्वकरणत्वयोः क्रियानिरूपित्वेन कर्त्राद्याक्षिप्तक्रियाबोधककृदन्तेनैव समासलाभेन व्यावर्त्याऽभावात्कृद्ग्रहणं व्यर्थमित्याशयेनाऽऽशङ्कते–कृतेति किमिति ।

समाधत्ते—**काष्ठैः पचतितरामिति**—कर्तृत्वकरणत्वयोः क्रियानिरूपितत्वात्तद्वाचकसुबन्तस्य तद्धितान्तघटितस्याऽपि सम्भवात्तेनाऽपि समासे प्रत्युदाहरणभूतोक्तप्रयोगे समासाऽऽपत्तिर्दुर्वारैवेति तद्वारणाय कृत्ग्रहणमावश्यकमिति भावः । कृदन्तेनैव समासो यथास्यान्न सुबन्तेनेत्यर्थं कृद्ग्रहणं प्रत्युदाहरणे शानजन्तादिभिरिव बहुलग्रहणात्समासवारणं शक्यमिति केचिदित्यलम् ॥

**चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः**—अत्र तदर्थपदं तस्मै इदं तदर्थमित्यर्थकं तच्छब्देन प्रकृतत्वाच्चतुर्थ्या परामर्शः । तस्याश्च प्रत्ययत्वात्प्रत्ययग्रहणपरिभाषया तद-

न्तविधौ चतुर्थ्यन्तमिति सामर्थ्यात्तेन तदर्थो लक्ष्यते तस्मात्तादर्थ्ये चतुर्थीत्यभिप्रेत्याह—चतुर्थ्यन्तार्थाय यत्तद्वाचिनेत्यादि—चतुर्थ्यन्तवाच्ययूपार्थे यद्दार्वादि तद्वाचकशब्देन चतुर्थ्यन्तस्य वा समास इत्यर्थः । यूपाय दार्वित्यादीन्युदाहरणानि ।

ननु सूत्रे तदर्थपदेन प्रकृतिविकृतिभावातिरिक्तग्रहणे तेनैव बलिरक्षितशब्दाभ्यामपि समाससिद्धौ याभ्यां समासार्थे कृतमुक्तशब्दद्वयग्रहणं व्यर्थं सज्ज्ञापयति तदर्थपदेन प्रकृतिविकृतिभावस्यैव ग्रहणमित्याशयेनाह—तदर्थेन प्रकृतिविकृतिभाव एव गृह्यते, बलिरक्षितग्रहणाज्ज्ञापकादिति—न च हितसुखशब्दयोरपि ज्ञापकत्वसम्भवेन शब्दचतुष्टयस्यैव ज्ञापकत्वप्रतिपादनस्य युक्तत्वाद्द्वयोरेव तत्त्वप्रदर्शनमयुक्तमिति वाच्यम् । हितसुखशब्दयोगे । ( चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैरि )त्यनेनाऽतादर्थ्येऽपि चतुर्थीसम्भवात् उक्तशब्दद्वयेनाऽन्योपकाराऽजननेन तद्योगे तादर्थ्यचतुर्थ्या असम्भवाच्चोक्तशब्दद्वयस्य ज्ञापकत्वाऽसम्भवात् । न च समासत आशिषोऽप्रतीत्या (चतुर्थी चाशिषी)ति विहितचतुर्थ्यन्तस्य समासाऽस्वीकाराद्बलिरक्षितग्रहणवद्धितसुखशब्दयोरपि ज्ञापकत्वं सम्भवतीति वाच्यम् । ब्राह्मणहितं, गोहितं गोसुखमित्यादिलक्ष्यदर्शनादतादर्थ्यचतुर्थ्यन्तस्यापि समासाङ्गीकारात्तदर्थन्तयोरावश्यकत्वात्सामर्थ्यविरहेण ज्ञापकत्वाऽसम्भवादित्यलम् ॥

ननु बलिरक्षितग्रहणज्ञापकज्ञापितस्य प्रकृतिविकृतिभावस्य तदर्थपदेन ग्रहणमितिनियमस्य रन्धनाय स्थालीत्यत्र समासवारणमेव फलं तत्र षष्ठीसमासस्य दुर्वारत्वान्नियमो व्यर्थ एव । न च सति षष्ठीसमासे समासस्वरः, तादर्थ्यचतुर्थ्या तु नियमेन समासवारणात्पूर्वपदप्रकृतिस्वर इति स्वरे विशेष इति वाच्यम् (चतुर्थी तदर्थे) इत्येतद्विहितपूर्वपदप्रकृतिस्वरस्यापि प्रकृतिविकृतिभाव एवेष्टत्वादुक्तस्वराऽप्राप्त्या स्वरेऽविशेषादुक्तसमासस्याऽनिवार्यत्वेन नियमवैयर्थ्यस्य तादवस्थ्यादिति चेन्न । रन्धनाय स्थालीत्यत्र शब्दशक्तिस्वभावात्तदर्थत्वेनैव भानेन सम्बन्धत्वेनाऽभानात् षष्ठ्यभावेन तत्समासाऽप्राप्त्या सत्यां तादर्थ्यचतुर्थ्यां प्राप्तं तत् समासनिवृत्त्यर्थमुक्तनियमस्याऽऽवश्यकत्वेन सार्थक्यात् । एतत्सर्वं प्रकृतसूत्रस्थभाष्ये स्पष्टम् । तत्र हि—(चतुर्थी तदर्थमात्रेण चेत्सर्वप्रसङ्गोऽविशेषात् । सर्वस्य चतुर्थ्यन्तस्य तदर्थमात्रेण सह प्रसङ्गो भवति । अनेनाऽपि प्राप्नोति, रन्धनाय स्थाली, अवहननायोलूखलमि)ति । अत्राऽनेनाऽपि प्राप्नोतीत्युक्त्वा कथमप्येषु समासो न भवतीत्युक्तम् । उक्तञ्च कैयटेन नाऽनभिधानाद्रन्धनस्थाल्यादयः षष्ठीसमासा भवन्तीति । नचोक्तदुक्त्या चतुर्थीषष्ठीसमासवारणेऽपि रन्धनार्था स्थाली रन्धनस्थालीति मध्यमपदलोपिसमासो बाधकाऽभावात्स्यादेवेति वाच्यम् । अनभिधानादुक्तसमासस्याऽप्यप्राप्तेरिति दिक् ॥

अश्वघासादयस्तु षष्ठीसमासा इति—तदर्थपदेन प्रकृतिविकृतिभावग्रहणात्समासाप्राप्त्याऽत्रापि घासादीनामुपकारकत्वेन तादर्थ्यचतुर्थ्यां सत्यां न समासः; किन्तु वाक्यमेव । सम्बन्धत्वेन भाने तु षष्ठीसमासो भवत्येवेति भावः ॥

अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यमिति—अनेन वार्त्तिकेन कार्यद्वयं विधीयते । एवमर्थशब्देन चतुर्थ्यन्तस्य नित्यसमासत्वं द्वितीयं विशेष्यगतलिङ्गत्वञ्च एतद्द्वयसत्त्वे विभाषाऽधिकारेण समासस्य पाक्षिकत्वात् [illegible] वाक्ये [illegible]ऽपी-

ष्टापत्तौ द्विजायार्थ इति प्रयोगः स्यात् । 'अर्थैरैविभवा अपी'त्यमरोक्त्याऽर्थशब्दस्य नित्यपुंस्त्वात् (परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरि)त्यनेन सर्वत्र पुँल्लिङ्गस्यैव प्रयोगात् द्विजार्था यवागूः द्विजार्थं पय इत्यादयः प्रयोगा न स्युः !

वस्तुतस्तु—अनेन विशेष्यलिङ्गतैव विधेया, समासनित्यत्वरूपद्वितीयविधेयस्य तु चतुर्थ्या तादर्थ्यस्योक्तत्वादर्थशब्देन विग्रहाऽप्रसक्त्या न्यायसिद्धत्वात् । गुरोरिदं गुर्वर्थमित्यादाविव लिङ्गस्यापि लोकतः सिद्धत्वे तु स्पष्टार्थमेवैतद्वार्त्तिकमित्यवसेयमिति दिक् ॥

पञ्चमी भयेन । पञ्चम्यन्तं भयशब्दप्रकृतिकसमर्थसुबन्तेन समस्यते इत्यर्थः । अत्र सूत्रे विनिगमकाऽभावात्सूत्रेणैव वृकभीत इत्यादौ समाससिद्धौ (भयभीतभीतिभीभिरिति वाच्यम्) इत्येतद्वार्त्तिकाऽऽरम्भाच्च न भयेत्यर्थग्रहणं किन्तु स्वरूपस्यैव । तेन न वृकात्त्रास इत्यादौ समासाऽऽपत्तिरूपो दोषः । वार्त्तिके उपलक्षणत्वान्निर्गतजुगुप्सयोरपि ग्रहणं बोध्यम् । न च सूत्रे भयेत्यर्थाग्रहणे स्वरूपस्य ग्रहणाद् भोगोपरत इत्यादौ समासो न स्यादिति वाच्यम् । बहुलग्रहणात्क्वचिद्विभक्त्यन्तरस्याऽपि कृता समास इत्यस्य पूर्वमेवाभिहितत्वेन तत्र समासोपपत्तेः । सुप्सुपेति मयूरव्यंसकादित्वाद्वा तदुपपत्तेश्च ॥

प्रतिपदविधाना षष्ठी न समस्यत इति वाच्यम् । पदं पदं प्रति विहिता प्रतिपदविधाना कारकविशेषोपादानेन विहितेत्यर्थः । 'षष्ठी शेषे' इत्येतद्विहितषष्ठ्यतिरिक्ता सर्वाऽपि षष्ठी प्रतिपदविधानेत्युच्यते सा न समस्यत इति तदर्थः । ननु (न निर्धारणे) इत्यनेन निर्धारणविहितषष्ठ्याः समासो निषिध्यते, वार्त्तिकेनापि प्रतिपदविधानषष्ठ्याः समासनिषेधः क्रियते । एवञ्च शेषषष्ठ्यतिरिक्तायाः सर्वस्या अपि षष्ठ्याः प्रतिपदविधानत्वाद्वार्त्तिकेनैवोक्तसूत्रप्रयोजनस्य गतार्थत्वात्सूत्रं व्यर्थमिति चेन्न । (यतश्च निर्धारणम्)त्यनेन षष्ठ्या अविधानेन सप्तम्या एव विधानादनया तस्या बाधाऽभावाय, तत्प्रतिप्रसवात्तत्र सम्बन्धसामान्य एव षष्ठ्या विधानात्तस्याश्चाऽप्रतिपदविधित्वाद्वार्त्तिकेनाऽगतार्थतया सूत्रस्य सार्थक्यात् । यत्तु (ज्ञोऽविदर्थस्य करणे) इत्यादि (कृत्वोऽर्थप्रयोगे कालेऽधिकरणे) इत्येतेषु सूत्रेषु शेषपदसम्बन्धात्तैः शेष एव षष्ठीविधानात्तत्र च (शेषे षष्ठी)-त्येव सिद्धावुक्तसूत्रसमुदायसामर्थ्यात्तत्तत्सूत्रविहितषष्ठ्याः समासाभावकल्पनेन वार्त्तिकस्य सिद्धत्वान्नापूर्वत्वदिति; तन्न । उक्तसूत्राणां तत्तद्धातुयोगे उपात्तकारकाणां शेषत्वाऽभावज्ञापनद्वारा वार्त्तिकज्ञापकत्वे विनिगमकत्वाऽभावात् । वार्त्तिकस्यापूर्वत्वादेव नेदं भाष्ये प्रत्याख्यातम्, अत एव च प्रतिपदविधानेतिपूर्वपक्षोद्धाटने,शेषलक्षणाऽतिरिक्ता सर्वा प्रतिपदविधाना, 'कर्तृकर्मणोः कृती' ति कृद्योगेति च तत्रोक्तम् । तत्र शेषलक्षणेत्यस्य शेषमात्रलक्षणेत्यर्थ इति दिक् ॥

ननु ब्राह्मणस्य ये दन्तास्ते शुक्ला इत्यर्थाद्ब्राह्मणशब्दस्य दन्तैरेवाऽन्वयात्तेनैव सामर्थ्येन शुक्लशब्देनाऽसामर्थ्यात् (सविशेषणानां वृत्तिर्न वृत्तस्य च विशेषणयोगो ने)ति निषेधाच्च ब्राह्मणस्य शुक्ला इत्यत्र समासो न स्यादत आह—यदा प्रकरणादिना दन्ता इति विशेष्यं ज्ञातं तदेदमुदाहरणमिति । अधुना शुक्लशब्दस्यैव विशेष्यसमर्पकत्वमिति न समासप्राप्तिरिति भावः ॥

अनित्योऽयं गुणेन निषेध इति । गुणवाचकशब्देन षष्ठ्यन्तस्य समासनिषेधो-

ऽसार्वत्रिकेत्यर्थः। पूरणार्थेन च षष्ठ्यन्तस्य समासनिषेधोऽपि तथेत्यपि बोध्यम्। अत्र प्रमाणं ('तदशिष्यं संज्ञाप्रमाणत्वात्') इत्यादिनिर्देश एव, तथाहि, गुणेन पूरणार्थेन च समासनिषेधस्य नित्यत्वे तस्य अशिष्यमित्यत्र समासनिषेधेन निर्देशाऽसङ्गतिरिति स एव व्यर्थीभूतो ज्ञापयति, अनित्योऽयमित्यादि। पूरणार्थेन समासनिषेधस्य नित्यत्वे 'लोपेन चेत्पादपूरणमि'ति निर्देशः प्रमाणम्। तथाहि, पूरणार्थेन समासनिषेधस्य नित्यत्वे पादस्य पूरणमिति समासाऽनापत्त्या निर्देशासङ्गतिरिति स एवोक्तार्थं ज्ञापयतीति भावः। तेन कुम्भपूरणभव उञ्छषष्ठ इत्यादौ समाससिद्धिः।

शेखरकृतस्तु—पूरणार्थेन समासनिषेधाऽनित्यत्वस्य नोक्तोदाहरणे समाससिद्धिः फलम्। कुम्भसम्बन्धी पूर्णं उञ्छसबन्धी षष्ठ इति मध्यमपदलोपिसमासस्य सिद्धत्वात्। अत एव गुणेन समासनिषेधाऽनित्यत्वम्भाष्ये नोक्तम्। (१) अन्यत्राऽस्याऽनभिधानम्। (२)अत एव, सर्वश्वेत इत्यादौ गुणेन न समास इति सन्दिह्य (गुणात्तरेणतरलोपश्चेति) वचनमारब्धं सर्वगुणेति सूत्रे भाष्ये (३)। संख्याशब्दानां (४) भावशब्दत्वाद्योजनशतादौ क्रोशशतादौ गोविंशतिरित्यादौ च नायं निषेध इति। तथा च पंक्तिविंशतीति सूत्रभाष्यम् (ते एते विंशत्यादयः शब्दाः समुदाये सन्तो भाववचना भवन्ती)ति (विंशत्यादिषु भाववचनेष्वि)ति च, यत्तु तत्र (५)एषां गुणवचनत्वव्यवहारोऽपि स तु (६)तत्सादृश्यात्। (७) अन्यथा गावो धनमित्युपक्रमस्य धनमेको गुणः, अपत्यमेको गुणः इत्यपि भाष्योक्तेश्चैत्रधनं चैत्राऽपत्यादीनीत्यादि न स्यादित्याहुः॥

**पूर्वोक्तसाहचर्य्येण कृदव्ययस्यैव ग्रहणमिति**—पूर्वपरयोः सत्त्वव्ययोः कृतोः सान्निध्यादव्ययपदेन कृदव्ययस्य ग्रहणादेव (सर्वपश्चादि) तिभाष्यप्रयोग उपपन्नः। अन्यथा कृदकृत्साधारणस्याऽव्ययस्याव्ययपदेन ग्रहणेन पश्चाच्छब्दस्याव्ययत्वेन तद्योगे समासनिषेधापत्तावुक्तभाष्यप्रयोगो नोपपद्येत। प्रकृतसूत्रस्थभाष्येऽपि अकृदव्ययैरुच्चैरादिशब्दैः सामर्थ्याभावान्नसमास इत्यभिधाय कृदव्ययमेवोदाहृतम्। एतेन सति सामर्थ्येऽन्याव्ययैः समासस्येष्टत्वमवगम्यते।

**नागेशास्तु**—द्विजस्य कुर्वन्कृत्वेत्यादौ सूत्रेण कारकषष्ठ्या समासनिषेधात् कटाद्यपेक्षया शेषषष्ठ्यां तु असामर्थ्यात्समासप्राप्तिरेव नेति सन्दिह्य द्विजस्य द्विषन् पुरा सु-

---

(१) नन्वेवं काककार्ष्ण्यमित्याद्यपि स्यादत आह—अन्यत्रेति। भाष्यादावनुक्तत्वान्नान्यत्रोक्तसमास इति भावः।

(२) अस्य निषेधस्याऽनित्यत्वाऽभावादेवेत्यर्थः।

(३) अस्य निषेधस्याऽनित्यत्वाऽभावाद्गोविंशतिरित्यादिसिद्धिर्न स्यादत आह—संख्याशब्दानामिति।

(४) भावप्रवृत्तिनिमित्तकत्वादित्यर्थः। यथा 'तस्यभाव' इत्यत्र भावशब्दस्य धर्मपरत्वं तथैवाऽत्रापि तस्य तत्वमिति भावः।

(५) विंशत्यादीनामित्यर्थः। (६) गुणसादृश्यादित्यर्थः।

(७) गुणबोधकत्वस्यैव स्वीकार इत्यर्थः।

र्थ्यस्योदेतोरित्यादौ ( द्विषः शतुर्वा वचनन्तोसुन्कसुनोरप्रतिषेध ) इति कारकषष्ठीसत्त्वात्त-त्रोदाहृतम्भाष्ये तस्मादीदृशे विषये शेषत्वविवक्षणस्य तादर्थ्यस्य सम्बन्धत्वविवक्षणस्य चाऽभाव एव पाणिनितात्पर्यनिर्णयायैव भाष्यकृत्प्रवृत्तेरिति वदन्ति ॥

समानाधिकरणे समासनिषेधोदाहरणं—तक्षकस्य सर्पस्येति—अत्र परत्वात्प्राप्तसमानाधिकरणसमासं बाधित्वा प्राप्तस्य षष्ठीसमासस्य निषेधः। नच षष्ठ्यन्तयोः समासेऽर्थाऽभेदात्प्रधानस्याऽपूर्वनिपात इत्येतन्निरूपणप्रस्तावे येन सुबन्तेन समासस्तन्निरूपितसम्बन्धार्थकस्यैव षष्ठ्यन्तस्य ग्रहणमित्युक्त्या प्रकृते तादृशषष्ठ्यभावात्समासाऽप्राप्त्या निषेधो विफल एवेति वाच्यम्। भाष्यप्रामाण्याद्यत्र व्यधिकरणषष्ठ्यन्तयोः समासस्तत्र तादृश्या षष्ठ्या ग्रहणेन समानाधिकरणषष्ठ्यन्तयोः समासे उक्तनियमाऽभावात्समासप्राप्त्या निषेधस्य साफल्यात्। अत्र प्रकृतसूत्रस्थसमानाधिकरणग्रहणमेव मानमिति सूत्रकृत्तात्पर्य्यम्। नचाऽत्रासामर्थ्यादेव समासाऽप्राप्त्या निषेधो व्यर्थ एवेति वाच्यम्। कष्टोऽपि कर्म भीष्मादयोऽपीति पक्षे परस्पराऽन्वय एवेति सामर्थ्यस्य सत्वान्निषेधस्य सार्थक्यात्। क्रियान्वयनियमश्च न साक्षादेव; किन्तु यद्द्वारा कारकत्वं तद्द्वारकोऽपीत्युक्तम्। नच समानाधिकरणाऽधिकारे समानमध्यमवीराश्चेति पाठात् तस्य समानाधिकरणाधिकारस्थले समासविषयत्वाऽभावेऽप्यन्यत्राप्रवृत्तौ प्रमाणाऽभावेन समानाधिकरणमसमर्थवदित्यसामर्थ्यात्समासाऽप्राप्त्या निषेधो व्यर्थ इति वाच्यम्। अधात्वभिहितमित्युक्त्या धातूत्तरप्रत्ययेन कर्माभिधाने यजुषः पीयमानत्येत्याद्यर्थं निषेधस्य सार्थक्यात्। इदं भाष्ये स्पष्टम्। ननु तक्षकस्य सर्पस्येत्यत्र विशेषणतावच्छेदकतक्षकत्वस्य सर्पत्वात्मकविशेष्यतावच्छेदकाऽव्यभिचारान्न विशेषणसमासप्राप्तिरिति चेन्न। कैलासाद्रिरित्यादौ समासानापत्या 'विशेषणं विशेष्येण बहुलमि'त्यत्र विशेषणविशेष्योभयोपादानेन विशेषणत्वविशेष्यत्वाऽवच्छेदकधर्मद्वयस्य परस्परव्यभिचारे एव विशेषणसमासप्राप्तिरिति नियमाभावेन तत्रोक्तसमासस्य दुर्वारत्वात्। एवं च षष्ठीसमासनिषेधेऽप्युक्तसमासः स्यादेवेतिनिषेधो विफल एवेत्याशङ्क्य समाधत्ते—विशेषणसमासस्त्विह बहुलग्रहणान्नेति। उक्तस्थले विशेषणसमासेऽपि फले विशेषाभावादिति भावः। समानाधिकरणे समासनिषेधस्य फलान्तरमप्याह—गोर्धेनोरित्यादि—विभक्त्यन्तरे चरितार्थस्य पोटायुवतीत्यादेः परत्वाद्बाधकस्य षष्ठीसमासस्याप्यनेन बाध इति भावः। अन्यथा तत्र हि षष्ठीसमासे सति गुणप्रवृत्तिनिमित्तकत्वादप्रधानत्वेन प्रथमानिर्दिष्टत्वेन च धेनोः पूर्वनिपातः विशेषणसमासे तु गोरिति भेदः। तत्रादिपदेन भोज्यस्योष्णस्येत्यादेः संग्रहो बोध्यः। ये तु नोपसर्गसंज्ञाया अन्वर्थत्वमङ्गीकुर्वन्ति तेषां मते षष्ठीसमासे पूर्वनिपातनियम इति तद्वारणाय निषेधः, विशेषणसमासस्तु स्यादेवेति कैयट इति प्राञ्चः।

नागेशास्तु, ( प्रथमानिर्दिष्टमि ) तिसूत्रस्थभाष्योक्तरीत्या ( षष्ठी ) इति सूत्रे येन सुबन्तेन समासस्तदर्थनिरूपितसम्बन्धार्थकषष्ठ्या ग्रहणात्प्रकृते समासाऽप्राप्त्या निषेधस्याऽनावश्यकत्वेन समानाधिकरणग्रहणं व्यर्थमेव, ध्वनितञ्चेदम्भाष्ये। तथाहि भाष्यं समानाधिकरणे किमुदाहरणम्, एकदेश्याह, राज्ञः पाटलिपुत्रकस्य, प्रष्टाऽह नैतदस्ति, असामर्थ्यादत्र न भविष्यति। येन सुबन्तेन समासस्तदर्थनिरूपितषष्ठ्यन्तेनाऽसामर्थ्यरूपः।

'उदाहरणवाचेकदेश्याह—कथमसामर्थ्यं प्रत्येकदेश्याह, समानाधिकरणमसमर्थवदिति । उदाहरणवाचेकदेश्याह, अधात्वभिहितमिति तच्छेपात्सर्पिपः पीयमानस्येत्युदाहरणमित्युपसर्जनसंज्ञासूत्रस्थभाष्यैकवाक्यत्वेनाऽस्यैवं व्याख्यानमेव युक्तमिति वदन्ति ।

**राजपूजितमित्यादौ भूते क्तान्तेनेति**—न च (तक्रकौडिन्य)न्यायेन वर्त्तमानार्थक्तेन भूतार्थक्तस्य बाधान्मूलोक्तमयुक्तमिति वाच्यम् । भूतार्थक्तस्याऽवश्यं प्राप्तौ वर्त्तमानार्थक्तस्याऽनारम्भात् । भूतत्ववर्त्तमानत्वयोर्युगपद्विवक्षाया असम्भवात् । दधिदानस्याऽवश्यं प्राप्तौ तक्रदानारम्भाद्युक्त एव तक्रदानेन दधिदानबाधः; प्रकृते तथा नास्तीति भावः ।

केचित्तु—उक्तन्यायेन वर्त्तमानार्थक्तेन भूतार्थक्तस्य बाधप्राप्तावन्यथा समाधत्ते—तथा हि—यद्युक्तन्यायेनोक्तार्थकप्रत्ययेनोक्तार्थकप्रत्ययस्य बाधः स्यात्तदा 'तेनैक् दिक्' इत्यनेन षष्ठीविधानादुपज्ञातशब्दस्य तेनेति तृतीयया योगो न स्यादित्युक्तनिर्देशाद्वर्त्तमानक्तेन न भूतक्तस्य बाध इति ज्ञायते । नचैवमप्युक्तनिर्देशस्य ज्ञानार्थेष्वेव ज्ञापकत्वमस्त्विति वाच्यम् ।

"पूजितो यः सुरासुरैः ।"

इति प्रयोगाऽनुरोधेन सामान्यविषयकज्ञापकत्वस्यैवौचित्यात्, केचिच्च कारकषष्ठ्या एव समासनिषेधकमिदं सूत्रं शेषषष्ठ्या स्यादेव समास इत्याहुरित्यन्यत् ॥

ननु भृञस्तृचि निष्पन्नस्य भर्तृशब्दस्य तृजन्तत्वेन 'तृजकाभ्यां कर्तरी'ति निषेधेन षष्ठीसमासाभावे भर्तृशब्दस्य याजकादिगणे पाठेन समासस्येष्टत्वाद्भत्रस्य भर्त्तेत्युदाहरणमयुक्तमित्यत आह—**पत्यर्थभर्तृशब्दस्य तु याजकादित्वात्समास इति** । प्रसिद्धत्वेन पत्यर्थभर्तृशब्दस्यैव याजकादिगणे पाठादन्यार्थकस्य तस्याऽग्रहणाद्भत्रस्य भर्त्तेत्यत्र भर्तृशब्दस्य धारणकर्त्रर्थकत्वेन नोक्तसूत्रेण समासाऽऽपत्तिरिति युक्तमेवोदाहरणम् । नच याजकादिषु भर्तृशब्दस्याऽर्थविशेषविशिष्टत्वेनाऽपाठात्सामान्यतस्तस्य तत्र पाठेनोदाहरणेऽप्यनेन समासस्याऽवश्यम्भावितयाऽयुक्तमेवोदाहरणप्रदर्शनमिति वाच्यम् । रूढेर्वंशीयस्त्वात्पतिपर्यायस्यैव भर्तृशब्दस्य ग्रहणेनोदाहरणप्रदर्शनस्य युक्तत्वात् । तृजकाभ्यामित्यत्र तृच्साहचर्य्येण कर्त्रर्थकस्यैवाकस्य ग्रहणेन कर्तृग्रहणमनावश्यकमिति नाशङ्क्यम्, तथा सति उत्तरसूत्रे भावार्थकस्यैवाकः सम्भवादर्थाधिकराऽनुरोधेन प्रकृतसूत्रेऽपि भावार्थकस्यैव ग्रहणमिति शङ्कानिरासाय कर्तृग्रहणस्यावश्यकत्वादिति भावः ॥

ननु ( तृजकाभ्यामि )तिनिषेधस्य जागरूकत्वात् त्रिभुवनविधातुरितिसमस्तप्रयोगो नैवोपपद्येतेत्याशयेनाऽऽशङ्कते—**कथं तर्हि घटानां निर्मातुरित्यादि** । समाधत्ते—**शेषषष्ठ्या समास इति** । प्रत्यासत्त्या कारकषष्ठ्या एवाऽनेन समासनिषेध इति भावः ।

न्यासकारास्तु—विधातृशब्दस्य तृन्नन्तत्वादनेनानिषेधात्षष्ठीति सूत्रेण समासादुक्तप्रयोगोपपत्तिः । न च तृन्योगे (नलोकाव्ययनिष्ठाखलर्थतृनामि)ति सूत्रेण षष्ठीनिषेधात्तत्समासाऽप्राप्त्या पुनस्तदवस्थ एवोक्तदोष इति वाच्यम् । त्रकाभ्यामित्येव वक्तव्ये तृचः सानुबन्धस्य ग्रहणसामर्थ्यादुक्तनिषेधानित्यत्वज्ञापनेनोक्तदोषोद्धारादिति वदन्ति ।

यत्तु (जनिकर्तुः) (तत्प्रयोजको हेतुश्चे)तिनिर्देशाभ्यां (तृजकाभ्यां कर्तरी)तिसमासनिषेधाऽनित्यत्वादुक्तप्रयोगोपपत्तिरित्याहुः केचित्, तन्न । शेषषष्ठीसमासेनैवोक्तनिर्देशद्वयोपपत्तौ सामर्थ्यविरहादुक्तसमासनिषेधाऽनित्यत्वज्ञापनस्याऽसम्भवादिति दिक् ॥

**पूर्वापराधरोत्तरमेकेति**—नन्वेकदेशशब्दस्याऽवयवे रूढत्वात्तस्य कर्मधारयत्वेऽपि तस्मात्मत्वर्थीयः । ( न कर्मधारयान्मत्वर्थीयः ) इति निषेधात्कथं कर्मधारयान्मत्वर्थीय इति वाच्यम् । कृष्णसर्पवानित्यत्रैवोक्तनिषेधस्य रूढेष्वेव प्रवृत्तेः । न च ( एकगोपूर्वादि)त्यनेन ठञ् दुर्वार इति वाच्यम् । एतन्निर्देशादेवैनेः प्रवृत्तेरित्याह—**अवयविना सहेत्यादि** ।

ननु ऊर्ध्वकाय इतिवत् (समुदाये हि प्रवृत्ताः शब्दा अवयवे प्रवर्तन्ते) इति न्यायात् पूर्वकाय इत्यादिप्रयोगाणां कर्मधारयसमासेनैव सिद्धौ सूत्रमिदं व्यर्थमित्यत आह—**षष्ठीसमासापवाद इति** । अयम्भावः—सूत्रसत्त्वे तेन समासे पूर्वशब्दस्य पूर्वप्रयोगे पूर्वकाय इत्युपपद्यते । सूत्राऽभावे षष्ठीसमासे तु षष्ठ्यन्तस्य कायशब्दस्य पूर्वप्रयोगे कायपूर्व इत्यनिष्टप्रयोग आपद्येतेति तन्निवृत्त्यर्थं सूत्रमावश्यकमिति भावः । उक्तप्रयोगे पूर्वकायस्येति विग्रहः । नच (अन्यारादि)ति सूत्रे दिशि दृष्टः शब्दो दिक्शब्द इति व्याख्यानेन सम्प्रति दिग्वृत्त्यभाववतामपि योगे पञ्चमीविधानात्षष्ठ्या दुर्लभतयोक्तविग्रहो दुर्लभ इति वाच्यम् । ( तस्य परमाम्रेडितमि)तिनिर्देशेनाऽवयवाचिदिक्शब्दयोगे पञ्चम्यभावज्ञापनात्षष्ठ्युत्पत्तौ बाधकाऽभावेनोक्तविग्रहस्य सुलभत्वात् । सूत्रे एकदेशिनेत्यस्याऽभावे पूर्वं नाभेः कायस्येत्यत्राऽपि समासापत्तिरिति तद्व्यावृत्त्यर्थं तदुपात्तम् । नाभेर्यः पूर्वो भागः स कायस्याऽवयव इत्यर्थः । नाभेरित्यस्य दिग्योगलक्षणपञ्चम्यन्तत्वादत्र पूर्वस्य भागस्य नाभिरवधिः, नत्वेकदेशिनीति न नाभ्या सह समासः । कायशब्देन तु पूर्वकायो नाभेरिति समासः स्यादेवेत्यलम् ।

ननु पूर्वपरेति सूत्रे पूर्वादीनामुपादानादेतेषामेवैकदेशानां समासः स्यादन्येषां न स्यात्तथा मध्यान्हः; सायाह्न इत्यादिप्रयोगो नैवोपपद्येतेत्याशङ्क्याह—**सर्वोऽप्येकदेशोऽन्हा समस्यत इति** । पूर्वादिभिन्नशब्दस्याप्याहन्शब्देन समास इति तदर्थः । अत्राऽर्थे (संख्याविसायपूर्वस्ये ) ति सूत्रमेव ज्ञापकं बोध्यम् । तथाहि-उक्तज्ञापनाऽभावेऽन्हस्य सायपूर्वत्वाऽभावेन सूत्राऽप्राप्त्या व्यर्थन्तदुक्तार्थं ज्ञापयतीति भावः । नच मध्यान्ह इत्यादेरूर्ध्वकाय इति वत्कर्मधारयेणैव निर्वाहाज्ज्ञापकत्वाश्रयणं व्यर्थमिति वाच्यम् । ( अहःसर्वैकदेशे ) त्यादिविहितसमासान्तस्य ( अन्होऽन्ह एतेभ्य ) इत्यन्हादेशस्य चैकदेशिसमासं विनाऽनुपपत्त्या ज्ञापकाश्रयणस्य सार्थक्यात् ॥

ननु उक्तज्ञापकादुक्तार्थज्ञापनेन मध्यान्ह इत्याद्युपपत्तावपि मध्यरात्र इति नोपपन्नमित्यत आह—**केचित्तु सर्व एकदेशः कालेन समस्यते नत्वह्नैवेति** । संख्याविसायेति ज्ञापकस्य सामान्यापेक्षत्वेन सर्वस्याप्येकदेशस्य कालवाचकशब्देन समास इत्यर्थज्ञापनेनोभयत्र निर्वाह इति भावः । नचैवं दिनमध्यो रात्रिमध्य इति नोपपद्येतेति वाच्यम् । ज्ञापकसिद्धस्याऽसार्वत्रिकत्वादिति भावः ॥

अर्द्धं नपुंसकम् । ननु समांशे समार्द्ध इति भाष्यप्रयोगात्खण्डवाचकार्द्धशब्द-

स्य नित्यक्लीवत्वाभावात्समांशवाचकोक्तशब्दस्य नित्यक्लीवत्वेन तस्यैवाऽत्र ग्रहणम्। प्रमाणञ्चात्र प्रकृतसूत्रस्थं नपुंसकग्रहणमेव। तथाहि—(पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे) इत्यत्रैवार्द्धशब्दस्य पाठात्समासोपपत्तौ पृथगर्द्धमिति योगविभागेन निर्देशान्नपुंसकत्वे लब्धे पुनर्नपुंसकग्रहणं फलाऽभावादूव्यर्थं सत् ज्ञापयति-'नित्यक्लीवार्द्धशब्द एवेह गृह्यत' इत्याह—नित्यं क्लीवे स इति।

केचित्तु—नपुंसकग्रहणस्य नोक्तार्थं ज्ञापकत्वमङ्गीकुर्वन्ति; किन्तु अद्र्धमिति निर्देशादेव नपुंसकत्वलाभे पुनस्तद्ग्रहणस्य सूत्रनिर्देशे लिङ्गाविवक्षार्थमेव। नच तस्य समांशवाचकनित्यक्लीवग्रहणार्थत्वेन सामर्थ्यविरहादुक्तार्थज्ञापकत्वं न सम्भवतीति वाच्यम्। एचो ह्रस्वविधाने अद्र्धैकारौकारयोर्विधानमाशङ्क्य (नैव लोके नैव वेदे अर्द्ध एकारोऽर्द्ध ओकारोऽस्ती)ति (एवोङ्) (एच, इगि) तिसूत्रस्थभाष्यप्रयोगात्समांशवाचिनोऽप्यर्द्धशब्दस्य नित्यक्लीवत्वाऽभावात्। तथा च नित्यनपुंसकोऽर्द्धशब्द एकत्वविशिष्टेनाऽवयविना समस्यते इत्यर्थः।

ननु पिप्पल्या नियमेन षष्ठ्यन्तत्वात् (एकविभक्ति चापूर्वनिपाते) इत्यनेनोपसर्जनत्वे (गोस्त्रियोरि)ति ह्रस्वत्वे अर्द्धपिप्पलि इति ह्रस्वान्तप्रयोगापत्तिरित्यत आह—एकविभक्तावषष्ठ्यन्तवचनमिति। एकविभक्तिपदघटितसूत्रे यदेकविभक्तिपदन्तदषष्ठ्यन्तबोधकमित्यर्थः। तेन पिप्पलीशब्दस्याऽनुपसर्जनत्वान्नोक्तापत्तिरिति बोध्यम्॥

ननु (एकविभक्तावषष्ठ्यन्तवचनमि)त्यभ्युपगमे पञ्चानां खट्वानां समाहार इति विग्रहे खट्वाशब्दस्य षष्ठ्यन्तत्वादुपसर्जनसंज्ञाप्रतिषेधेन ह्रस्वत्वाप्रवृत्तावदन्तत्वाऽभावेन (द्विगोरि)ति ङीपोऽप्रवृत्या पञ्चखट्वीति न स्यादित्याशङ्क्य समाधत्ते—एकदेशिसमासविषयकोऽयमुपसर्जनसंज्ञानिषेध इति। (अपथं नपुंसकमि)त्येतत्सूत्रे पञ्चखट्वीति भाष्यप्रयोगादेकविभक्तावित्यस्य सङ्कोचादेतल्लभ्यते इति भावः। अर्द्धं पिप्पल्या इति विग्रहे, अर्द्धपिप्पलीति। परवल्लिङ्गत्वात्स्त्रीत्वम्। अनेन द्रव्यैक्य एव समासो विधीयते तेनाऽर्द्धपिप्पलीनामित्यत्र न समासो; द्रव्यस्य बहुत्वात्। उक्तनियमाऽभावे तु समासे अर्द्धपिप्पलीत्येवेति दिक्॥

द्वितीयतृतीयचतुर्थतुर्य्याणि। ननु वृत्तिकारेण यदुक्तमस्य षष्ठीसमासापवादत्वन्तद्युक्तमिति ध्वनयन्नाह—अन्यतरस्यां ग्रहणसामर्थ्यात्पूरणगुण इति निषेधं बाधित्वेत्यादि। नच द्वितीयशब्दस्य भागार्थकाऽन्प्रत्ययान्तत्वात्पूरणार्थकप्रत्ययान्तभिन्नत्वेन निषेधाऽप्राप्त्या पूरणगुणेति निषेधं बाधित्वेति मूलोक्तमनुपपन्नमिति वाच्यम्। भागार्थकान्प्रत्ययान्तस्याऽपि स्वार्थिकत्वेन पूरणार्थकत्वान्मूलोपपत्तेः। स्पष्टञ्चेदम्भाष्ये। तत्र हि-अन्यतरस्यांग्रहणस्य पक्षे षष्ठीसमासमुक्त्वा कृतेऽप्यन्यतरस्यांग्रहणे षष्ठीसमासो न प्राप्नोति किंकारणम्। पूरणगुणेति निषेधात्। नैतत्पूरणान्तम्। अना एतत्पर्यवसन्नम्। व्यवहितं, स्वरभेदं प्राप्त इति यावत्। एतदपि पूरणान्तमेव। पूरणन्नामाऽर्थस्तमाह तीयशब्दः। अतः पूरणं योऽसौ पूरणान्तात्स्वार्थे भागेऽन् सोऽपि पूरणमेव। पूरणमन्नामाऽर्थ इत्यस्य पूरणाऽभिन्नो योऽर्थस्तस्य प्रतिपादनमतः स्वार्थिकत्वात्तदन्तेनाऽप्यस्त्येवेत्यर्थः। पूरणशब्दे प्रत्ययति ... विवक्षितसंख्याप्रकारकप्रतीति

जनयतीति व्युत्पत्या बाहुलकात्कर्तरि ल्युट् ॥

**उपमानानि सामान्यवचनैः**—उपमीयते वस्त्वन्तरं सादृश्येन परिच्छिद्यते येन तदुपमानम् । उपमानोपमेयसाधारणधर्मविशिष्टोपमेयवचनं सामान्यवचनम् । तथाच-उपमानबोधकानि सुबन्तानि उपमानोपमेयोभयसाधारणधर्मविशिष्टरूपसामान्यवचनैः समर्थसुबन्तैः सह समस्यन्ते इति सूत्रस्यार्थः । घनश्याम इत्याद्युदाहरणम् । इति प्राञ्चः ।

**शेखरकृतस्तु**, स्वसमभिव्याहृतनिष्ठमुपमानत्वमिवशब्दद्योत्यम् । इवशब्दसमीपोच्चारितघनादिपदार्थगतं यदुपमानत्वं सादृश्येन वस्त्वन्तरपरिच्छेदकत्वं तदिवशब्देन द्योत्यते इति तदर्थः । साधारणधर्मसम्बन्धस्योपमानोपमेययोर्बोधे तात्पर्य्यग्राहकता च । एवञ्च उपमानोपमेययोरभेदान्वयादेव तयोः समानविभक्तिकत्वनियमः । समासे तूक्तार्थस्य समासशक्तिबलाद्बोधः । उपमानत्वेनोपमानबोधकेत्यर्थास्वीकारे ससम्बन्धिकत्वात्सामान्यवचनैरित्येव उपमानेन समासलाभे उपमानग्रहणं स्पष्टमेव व्यर्थम् । एवमुत्तरसूत्रे उपमितमित्युपमानत्वेन बोधकमित्यर्थकम् । एवमेव भाष्यस्वरस इत्याहुः । तत्र हि यत्र किञ्चित्समानञ्च्किञ्चिच्च विशेषस्तत्रोपमानोपमेये भवत इत्युक्त्वा, उपमानं, हि नाम, अनिर्ज्ञातज्ञानार्थमुपादीयते तत्समीपे यन्नात्यन्ताय मिमीते तदुपमानमेव, मुक्त्वा शस्त्री श्यामेति सूत्रोदाहरणमित्युक्तम् । समानाधिकरणेनेति वर्तत इत्युक्तम् । तेन स्पष्टमेवोपमानोपमेययोरभेदान्वयो लभ्यत इति ॥

ननु घन इव श्याम इति विग्रहे घनश्यामशब्दयोरेकार्थवृत्तित्वरूपसमानाधिकरणत्वाऽभावात्समासो न स्यादत आह—**इह पूर्वपदन्तत्सदृशे लाक्षणिकमिति**—अत एव मृगीव चपला मृगचपलेत्यादौ पुंवद्भावः सिध्यति । तत्र सन्निधानादुत्तरपदोपस्थापितमृगत्वचपलत्वद्वारकस्यैव सादृश्यस्यैव ग्रहणमिति । न चैवं कथमुपमानपरत्वमितिवाच्यम् । भूतपूर्वगत्या शक्यार्थमादाय तत्परत्वोपपत्तेः ॥

ननु घनश्याम इत्याद्युदाहरणसिद्ध्यर्थमेव ( उपमानानि सामान्यवचनैरि ) ति सूत्रं तस्य विशेषणसमासेनैव सिद्धौ सूत्रं व्यर्थमेवेति चेन्न । सति विशेषणसमासे कुब्जखञ्जः खञ्जकुब्जः इति वद्घनश्यामशब्दयोः पर्य्यायतया पूर्वनिपातानापत्तेः । तस्मात्पूर्वनिपाताय सूत्रमावश्यकमित्याह—**पूर्वनिपातनियमार्थं सूत्रमिति** । 'तुल्यार्थतृतीयासप्तम्युपमानाव्यय' इति सूत्रे प्रतिपदोक्तस्यैवास्य ग्रहणेन ग्रहणार्थमपि सूत्रस्याऽऽवश्यकत्वम् । अत एव, पुरुषव्याघ्र इत्युदाहरणम् । उपमानशूरव्याघ्राऽभिन्नः शूर इति बोधः ( एवं मयूरव्यंसकादयश्चे ) त्यनेन समासेनोपमानस्वरप्रवृत्तिरिति तत्त्वमिति ॥

**उपमितं व्याघ्रादिभिः** । उपमेयमुपमितम् । भूतकालो नाऽत्रविवक्ष्यते । उपमेयस्य सम्बन्धिशब्दत्वात्तेनोपमेयस्याऽऽक्षेपात्, उपमानभूतैर्व्याघ्रादिभिः सहोपमेयं समस्यते सति साधारणधर्मस्याऽप्रयोग इत्यर्थः । ननु उपमेयस्योपमानपरिच्छेद्यत्वादुपमानोपमेययोः समभिव्याहारे उपमानस्य विशेषणत्वमेवेति तस्य विशेषणं विशेष्येणेति सूत्रेणैव पूर्वनिपातसिद्धौ विशेष्यस्य पूर्वनिपातार्थमिदं सूत्रमित्याह—**विशेष्यस्य पूर्वनिपातार्थं सूत्रमिति** । उपमितमित्येतत्पदस्वारस्येनोपमितस्योपमानेन सह नित्यसाकांक्षत्वेन च व्याघ्रादीनामुपमानत्वे लब्धे उपमानोपमेययोः समानलिङ्गत्वेन चेल्लाभः प्राप्तिः । अत

एव (परवल्लिङ्गम् द्वन्द्वतत्पुरुषयोरि)ति सूत्रे (द्वन्द्वैकदेशिनोरि)तिन्यासं कृत्वा तत्पुरुषग्रहणं प्रत्याख्यातं भाष्ये । अन्यथा—

भाष्याब्धिः क्वातिगम्भीरः क्वाहं मन्दमतिस्ततः ।
छात्राणामुपहास्यत्वं यास्यामि पिशुनात्मनाम् ।

इति कैयटश्लोके भाष्याब्धिरित्यत्र दृश्यमानपरवल्लिङ्गसिद्ध्यर्थं तत्पुरुषग्रहणस्यावश्यकत्वात्प्रत्याख्यानासङ्गतिः । उक्तप्रयोगे सत्यपि सामान्यधर्मप्रयोगे लिङ्गभेदे च ( मयूरव्यंसकादयश्चे)त्यनेन समासो बोध्यः । न च तत्र विशेषणसमास एवेति वाच्यम् । तथा सति उपमानस्य विशेषणत्वेन पूर्वनिपातापत्तेः ।

ननु सूत्रे सामान्याऽप्रयोगे इत्यस्यासत्त्वे पुरुषो व्याघ्र इव शूर इत्यत्र सामान्यधर्मस्य शूरत्वस्य सति प्रयोगे समासापत्तिरतस्तदुपात्तम् । न च शूरसापेक्षत्वेनाऽसामर्थ्यात्समासाऽप्राप्त्या प्रत्युदाहरणासङ्गतिरिति वाच्यम् । प्रधानस्य पुरुषस्य सापेक्षत्वेऽपि सामर्थ्याऽभावाभावात् । विशेषणरूपोपमानस्य नित्यसापेक्षत्वेऽपि तत्सापेक्षत्वस्य न दोषावहत्वमिति बोध्यम् । उपमानत्वञ्च साधारणधर्मवत्त्वेन परिच्छेदकत्वम् । परिच्छेदकत्वञ्च साधारणधर्मवत्त्वेन ज्ञानविषयीभूतस्यैवेति । नच नित्यसापेक्षत्वस्य दोषाऽऽधायकत्वाऽभावाद्विशेषणस्योपमानस्य नित्यसापेक्षवदुपमेयस्यापि नित्यसापेक्षत्वेनैव समाससंज्ञासिद्धौ प्रत्युदाहणे समासार्थं उपमानं नित्यसापेक्षमिति तत्सापेक्षत्वं न दोष इत्यस्यैव ज्ञापकत्वमित्ययुक्तमिति वाच्यम् । यद्यपि उपमेयत्वस्य साधारणधर्मवत्त्वेन परिच्छेद्यत्वमेव; तथापि उपमेयस्य साधारणधर्मवत्त्वं विधेयमेवेत्युपमेयस्य नित्यसापेक्षत्वाभावादिति दिक् ॥

**विशेषणं विशेष्येण बहुलम्**—ननु विशिष्यते येन तद्विशेषणम्, अन्यस्माद्व्यावर्त्तकमित्यर्थः । कर्त्तुः करणत्वविवक्षायां विपूर्वकाच्छिषेः ल्युटि रूपमित्याह—**भेदकं समानाधिकरणेनेति**—विशेषणविशेष्ययोरुभयोः सम्बन्धिविशिष्टत्वादन्यतरोपादानेनैवाऽऽक्षेपस्य सम्भवादुभयोपादानं स्पष्टार्थमिति कैयटः । यत्तु समस्तपदद्वयजन्यबोधप्रकारस्य विशेषणविशेष्यधर्मद्वयस्य यत्र परस्परव्यभिचारस्तत्रैव समासो नान्यत्रेतदर्थमुभयोपादानमिति; तन्न । कैलासाद्रिः भावपदार्थः, तर्कविद्येतिप्रयोगाणामसङ्गत्यापत्तेः ।

**युवाखलतिपलितवलिनजरतीभिः**—ननु 'विशेषणं विशेष्येण बहुलमि' त्यनेनैव समाससिद्धौ प्रयोजनाऽभावाद्व्यर्थमेवैतत्सूत्रमित्यत आह—**पूर्वनिपातन्नियमार्थं सूत्रमिति**—पूर्वसूत्रेण समासे युवतिशब्दस्य पूर्वप्रयोगानियमोऽनेन समासे तूक्तशब्दस्यैव पूर्वप्रयोग इति तदर्थमेव सूत्रमिति भावः ।

ननु सूत्रे पुंलिङ्गयुवन्शब्दस्यैवोपादानात्तस्य खलतीजरतीशब्दाभ्यां सामानाधिकरण्याभावेन समासाऽप्राप्त्या युवखलती युवजरतीत्यादि न स्यादित्याशंकां समाधत्ते—**लिंगविशिष्टपरिभाषया युवतिशब्दोऽपि समस्यते इति**—( प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषास्वरूपम् । प्रातिपदिकस्य ग्रहणे लिङ्गबोधकप्रत्ययविशिष्टस्य अपिशब्दात्केवलस्याऽपि ग्रहणम्बोध्यमिति तदर्थः । तथाचोक्तपरिभाषया सूत्रोपात्तयुवन्शब्देन युवतिशब्दस्यापि ग्रहणात्तस्याथ सामानाधिकरण्यादुक्तप्-

योगोपपत्तौ न किमपि बाधकमिति भावः ।

ननु सूत्रे समानाधिकरणाधिकारेण एकार्थबोधकत्वरूपसामानाधिकरण्याऽभावाद्युवजरतीति प्रयोगो न स्यादित्यत आह—युवत्यामेव जरतीधर्मोपलम्भेनेत्यादि—बोधकालीनेच्छाजन्यज्ञानस्यारोपरूपत्वाज्जरतीत्वस्य युवत्यामारोपाद्युवत्या अपि जरतिसामानाधिकरण्येन समासे उक्तप्रयोगोपपत्तिः । जरत्यां तु न युवतीत्वधर्मारोपः, तथा सति युवतीशब्दस्य विशेषणत्वेन विशेषणसमासेऽपि नियमतो युवतीशब्दस्य पूर्वनिपातसिद्धौ पूर्वनिपाताय कृतस्य सूत्रस्य वैयर्थ्यापत्तेरितिभावः ।

कुमारःश्रमणादिभिः—ननु सूत्रे कुमारशब्दस्य पाठात्तस्य श्रमणादिभिः सामानाधिकरण्याऽभावात्कुमारी श्रमणा कुमारश्रमणेति प्रयोगो न स्यादिति चेन्न । लिङ्गविशिष्टपरिभाषया कुमारशब्देन कुमारीशब्दस्य ग्रहणात्तस्य च श्रमणादिशब्देन समानाधिकरणत्वात्समासे उक्तप्रयोगोपपत्तेः । एतदेव कुमारग्रहणमुक्तपरिभाषाज्ञापकमिति बोध्यमित्यलम् ।

ननु निर्मक्षिकमित्यादावव्ययीभावस्य चारितार्थ्यादविघ्नमित्यत्र विघ्नानामभाव इति विग्रहे परत्वात्तत्पुरुषः स्यादित्याह—अर्थाऽभावेऽव्ययीभावेन सहायं विकल्पत इति—पूर्वपदार्थप्राधान्येऽव्ययीभावः, उत्तरपदार्थप्राधान्ये तत्पुरुष इत्यादिरीत्येति भावः । न्यायसिद्धे प्रमाणमप्याह—रक्षोहागमलघ्वसन्देहाः प्रयोजनमिति । अद्रुतायामसंहितमिति—असन्देह इत्यस्य सन्देहाऽभावो [ निश्चय ] इत्यर्थः । प्रमाणभूतमुपन्यस्तं द्वितीयं वार्त्तिकं संहितासूत्रस्थमिति बोध्यम् । द्रुताभिन्नायां मध्यविलम्बितवृत्तौ संहिताऽभाव इत्यर्थः । अव्ययीभावे कृते, द्वन्द्वे परवल्लिङ्गेनोपपन्नस्य असन्देहा इति पुंल्लिङ्गप्रयोगस्याऽनुपपत्तिः । द्वितीये द्रुतायामिति स्त्रीलिङ्गप्रयोगाऽनुपपत्तिश्च । उक्तभाष्यवार्त्तिकप्रयोगेण नञ्तत्पुरुषसमासस्याव्ययीभावेन वैकल्पिकत्वज्ञापनादनुपलब्धिरविवाद इत्याद्युपपन्नमिति भावः । न चाऽविद्यमाना विघ्ना यस्मिन्निति बहुव्रीहिणा अविघ्नं कर्मेत्याद्युपपत्तावव्ययीभावस्योदाहरणमिदं किमर्थमिति वाच्यम् । उत्तरे कर्मण्यविघ्नमस्त्वित्यादेरव्ययीभावं विनाऽनुपपत्तेरिति प्राञ्चः ।

शेखरकृतस्तु—भाष्ये उत्तरपदस्य धर्मपरत्वान्नञ्तत्पुरुषोऽन्यपदार्थप्रधानः, न विद्यते ब्राह्मण्यं यस्मिन् सोऽब्राह्मणः इति, । नच बहुव्रीहेरन्यपदार्थप्रधानत्वस्य प्रसिद्धत्वान्नञ्तत्पुरुषस्याऽन्यपदार्थप्रधानत्वे बहुव्रीहेर्वैयर्थ्यमिति वाच्यम् । उत्तरपदस्य धर्मिपरत्वे बहुव्रीहेश्चारितार्थ्यात् । उत्तरपदस्य धर्मिपरत्वे बहुव्रीहिसमासाऽऽश्रयणादेव 'अनेकमन्यपदार्थे' इत्येतत्सूत्रस्थं (नञोऽस्त्यर्थानामुत्तरपदलोपश्चे)ति वार्त्तिकं सङ्गच्छते । न च बहुव्रीहेरन्यपदार्थप्रधानत्वेऽस्य इत्यादौ सर्वनामकार्यं न स्यादिति वाच्यम् । 'एतत्तदोःसुलोपो ऽकोरनञ्समासे हलि' इत्येतज्ज्ञापकात्तत्र सर्वनामकार्योपपत्तेः । नोक्तार्थे सम्पूर्णसूत्रस्य ज्ञापकत्वम् ; किन्तु तदेकभूतस्याऽनञ्समास इत्यस्यैव तत्त्वमिति बोध्यम् , तथाहि यदि अस इत्यादौ सर्वनामकार्य्यं न स्यात्तदा 'हल्ङ्याब्भ्य' इत्यनेन सुलोपस्य दुर्वारत्वादनञ्समासग्रहणं व्यर्थमेव स्यादिति भावः । तत्र भाष्ये नञ्तत्पुरुषस्यान्यपदार्थप्रधानत्वपक्षे अवर्षा हेमन्त इत्यादौ विशेष्यवल्लिङ्गवचनानतिदेश उक्तः । न च 'लिङ्गमशिष्यं लोकाश्रयत्वा-

दि' त्यनेन लिङ्गदोषपरिहारसम्भवात्तदापत्तिप्रदर्शनमयुक्तमिति वाच्यम् । उक्तयुक्त्या लिङ्गदोषे परिहृतेऽपि वचनदोषापत्तेस्तादवस्थ्यात् ।

नञ्तत्पुरुषस्याऽन्यपदार्थप्रधानत्वपक्षेऽवर्षा हेमन्त इत्यादौ वचनदोषस्य दुर्वारत्वात्तद्व्यावृत्त्यर्थन्नञ्तत्पुरुषस्य पूर्वपदार्थप्रधानत्वमेवास्तु । अत्रापि पक्षेऽस इत्यादौ पूर्ववत्सर्वनामकार्य्योपपत्तिः । न चाऽवर्षा हेमन्त इत्यत्र पूर्वपदस्य नञोऽव्ययत्वात्तदर्थप्रधानस्य नञ्तत्पुरुषस्य लिङ्गसंख्याभ्यां योगाऽभावात्तस्य पूर्वपदार्थप्रधानत्वाऽभ्युपगमेन कथन्तत्रत्यदोषपरिहार इति वाच्यम् । शब्दशक्तिस्वभावाद्वाक्ये नञोऽसत्वभूतार्थाऽभिधायित्वेऽपि समासे सत्त्वभूतार्थाऽभिधायित्वेन लिङ्गसंख्यान्वयसम्भवात् । यद्वा गुणवाचकशब्दानामाश्रयगतलिङ्गादिवत्समासार्थप्रतियोगित्वेन यद्द्रव्यं श्रितस्तद्द्रव्यस्थलिङ्गादिसमासस्य भविष्यति ।

अभावरूपसमासार्थस्य प्रतियोगित्वेन वर्षारूपद्रव्याश्रयणादेतद्गतलिङ्गादिसमासस्य सुलभमेवेतिभावः । समासार्थेनाऽभावेन प्रतियोगिनोऽपि स्वज्ञानायाऽऽश्रयणादभावस्याऽपि प्रतियोग्याश्रयतया नोक्तदोषाऽवकाशः । नञ्घटितसमासघटकेन वर्षाशब्देनाऽभावस्योपस्थित्या वर्षाशब्दरूपाश्रयस्यैव ग्रहणमुचितम् । प्रतियोगिन आश्रयत्वाकल्पने अवर्षा हेमन्त इत्यादौ विशेष्यभूतहेमन्तगतलिङ्गवचनापत्तिदोषदूषितादन्यपदार्थप्रधानो नञ्तत्पुरुष इतिपक्षादङ्गीकृतेऽपि पूर्वपदार्थप्रधानत्वपक्षे विशेष्यगतलिङ्गवचनाऽऽपत्तिरूपदोषस्यातदवस्थत्वेन अस्तु तर्हि पूर्वपदार्थप्रधान इति भाष्याऽसङ्गतिः । पूर्वपदार्थप्रधानत्वपक्षस्य निर्दोषत्वादेतत्समकक्षया [ अथवा पुनरस्तूत्तरपदार्थ प्रधान ] इति भाष्यकृदुक्तेरसङ्गतिश्च । प्रतियोगिन आश्रयत्वाकल्पयितृरीत्या पूर्वपदार्थप्रधानत्वपक्षे दोषस्य स्थितत्वादस्तु तर्ह्युत्तरपदार्थप्रधान इति वक्तुमुचितम् । उक्तपक्षद्वयेऽपि 'अनेकमन्यपदार्थे' इति सूत्रेऽनेकमित्यत्र वक्ष्यमाणैकवचनासिद्धिं मनसि निधाय नञ्तत्पुरुषस्योत्तरपदार्थप्रधानत्वं सिद्धान्तितम्भाष्यकृता । उत्सर्गतस्तत्पुरुषस्योत्तरपदार्थप्रधानत्वम्भवति । अत्र नञ्तत्पुरुषस्य पूर्वपदार्थप्रधानत्वपक्षेऽस्याऽव्ययीभावाऽपवादत्वेनाऽव्ययीभावस्य बाधनात्, नञव्ययीभावाऽभावोऽवश्यं स्वीकर्त्तव्यः । अन्यथा नञ्तत्पुरुषस्य पूर्वपदार्थप्रधानत्वपक्षेऽव्ययीभावापवादत्वं स्यात् । अतोऽत्यन्ताऽभावार्थकस्य नञः क्रियादिप्रतियोगिकाऽभावबोधकत्वादुत्तरपदार्थेनाऽनन्वयादसामर्थ्यादमक्षिकमित्यादौ नाऽव्ययीभावः । न संदेह इत्यादौ संदेहस्य गुणरूपत्वान्नञः सन्देहाऽभावबोधकत्वम्भवत्येव, इत्यभिप्रायेण 'प्रसज्यायं क्रियागुणौ ततः प्रतिषेधप्रतीति'रिति भाष्ये उक्तम् । असन्देह इत्यादौ चाऽऽरोपितः संदेह इति भेदेनाऽऽरोपज्ञानात्सन्देहाऽत्यन्ताऽभावप्रतीतिर्भवतीत्याद्याहुरितिदिक् ॥

तत्रोपपदं सप्तमीस्थम्—इदमधिकारसूत्रम् । अस्याऽधिकारत्वादेव, अमैव तुल्यविधानमित्यादि प्राचां व्यवहारोपपत्तिः । येन सूत्रेणाऽमो विधानं तेन यस्योपपदसंज्ञाविधानमिति तदर्थात् । नतु एकस्य सूत्रस्योभयविधायकत्वन्न सम्भवतीति चेन्न । 'कर्मण्यणि' त्यादौ कर्मणीत्यादेः सौत्र्याः प्रथमार्थे सप्तम्याः सत्त्वाद्धातोरण् भवति, कर्म चोपपदसंज्ञमितितदर्थादेकस्याऽप्युभयविधायकत्वदर्शनात् । अत्र सूत्रे सप्तमीपदम् तदन्तप-

स्त्वम्, तत्स्थं तद्वाच्यमित्याह—सप्तम्यन्ते पदे कर्मणीत्यादौ वाच्यत्वेन स्थितमित्यादि। उपपदमितिमहासंज्ञया तत्रेत्यत्र प्रथमार्थे सप्तमीबलेन च लब्धार्थमाह—तद्वाचकं पदमिति—अत्र पदमित्यनेन विभक्त्यन्तस्य ग्रहणे स्तम्बेरमः, कर्णेजपः, इत्यत्र स्तम्बकर्णयोरुपपदत्वाऽनुपपत्तिस्तयोरविभक्त्यन्तत्वादिति वाच्यम्। 'स्तम्बकर्णयो रमिजपोरि'त्यत्र सुपीत्यधिकारेण स्तम्बकर्णयोस्वप्रकृतिकसुवन्ते लक्षणया तयोर्विभक्त्यन्तत्वेन तत्त्वोपपत्तेः। तत्र लक्षणाया अनङ्गीकारे उपपदमिति महासंज्ञया लब्धस्योपपदसंज्ञकसुवन्तस्यासत्वात् स्तम्बेरमः, कर्णेजप इत्यत्र समासानापत्तिः। सूत्रे स्तम्बकर्णयोरिति सप्तम्याः प्रथमार्थत्वाद्रमिजपोरनन्तरमच् प्रत्ययो भवति स्तम्बकर्णौ चोपपदसंज्ञकौ भवत इत्यर्थापत्या यच्च सुबन्तं न तत्सप्तम्यन्तपदस्थं यच्च सप्तम्यन्तपदस्थं न तत्सुवन्तमिति सूत्रार्थाऽनुपपत्त्या समासाऽनापत्तिरित्यर्थः। ननु स्तम्बेरमः, कर्णेजप इत्यत्र सूत्रे स्तम्बकर्णयोरुपादानसामर्थ्यात्तयोः सुवन्तत्वाऽभावेऽपि उपपदसंज्ञायाः सुलभत्वात्संज्ञाया; सुलभत्वात्समासोपपत्तौ तत्र तदनुपपत्तिप्रदर्शनं न युक्तियुक्तमिति चेन्न। उक्त्युक्त्योक्तस्थलीयसमासाऽऽपत्तिपरिहारेऽपि समाससंज्ञाविधायकशास्त्रे 'उपपदमतिङि'ति सूत्रे प्रथमान्तसुवन्तसुप्ग्रहणस्याऽनुवर्त्तनात्प्रथमान्तस्यैवोपपदसंज्ञकसुवन्तस्योक्तसूत्रेण समासविधानेन 'सुप्यजातावि' ति णिन्यन्ते राज्ञः दर्शीत्यादौ समासाऽनापत्तेर्दुर्वारत्वात्। तत्र प्रथमान्तं सुवन्तमेवोपपदं समस्यते इत्यर्थस्तु सुपीतिसप्तम्याः प्रथमार्थत्वाद्बोध्यः। तथा च राजानं पश्यति तच्छीलेतिविग्रहपरोक्तप्रयोगे दुर्वारमेवोक्तदूषणमिति। नचोपपदमतिङिति सूत्रस्याऽऽवृत्याऽर्थद्वयकरणात्प्रथमान्तसुवन्तोपपदस्याऽन्यविभक्त्यन्तसुवतोपपदस्य च समासे न कुत्राऽप्यापत्तिरिति वाच्यम्। गौरवादर्थद्वयकरणस्य कर्तुमशक्यत्वात्। उपपदमिति महासंज्ञाविरोधाच्च। स्तम्बकर्णेति प्रातिपदिकयोः पदत्वाऽभावेन तयोरुक्तसंज्ञाऽङ्गीकारे स्पष्ट एव महासंज्ञाविरोध इति भावः। एतेन पदस्यैवोपपदसंज्ञा भवतीत्यर्थादायातमिति ज्ञेयम्। 'सुप्यजातौ णिनिस्ताच्छील्ये' 'सुपिस्थः' इत्येतत्प्रभृतिविषये सप्तम्यन्तपदवाच्यत्वरूपतत्स्थत्वमादाय सुप्यजातावित्यादावुक्तरीत्योपपदत्वोपपादनेऽपि 'विभाषाग्रे प्रथमे' त्यादौ सुपीत्यस्याऽनधिकारादग्रेशब्दादीनां कथमुपपदत्वमिति वाच्यम्। उक्तस्थले तदनधिकारेऽपि महासंज्ञाबलेनाऽग्रादिशब्दानां तत्प्रकृतिकसुवन्ते लक्षणया तत्त्वोपपत्तेः॥

महासंज्ञाकरणसामर्थ्येन विभक्त्यन्तस्यैवोपपदसंज्ञास्वीकारादेव, अतिङ्ग्रहणादेतद्योगद्वये सुप्सुपेति निवृत्तमित्युक्तमुपपदमतिङिति सूत्रे भाष्ये। उप–समीपे उच्चरितं पदमुपपदम्। सामीप्यञ्च सप्तम्यन्तपदघटितसूत्रविधेयप्रत्ययप्रकृत्यर्थंऽन्वयित्वमेव नत्वाऽनुपूर्व्यं व्यवधानम्। 'कर्मण्यण्' इति सूत्रे उष्ट्रप्रणायमितिभाष्योदाहरणात्। 'आतोऽनुपसर्गे कः' इत्यत्राऽनुपसर्गग्रहणाच्च। नच आनुपूर्व्यव्यधानरूपसामीप्यस्याऽनाऽऽश्रयणे गुरुं नमस्कारोतीत्यादावण् दुर्वार इति वाच्यम्। भवन्तं शृणोतीत्यादाविवोक्तस्थलेऽनभिधानादणोऽप्रवृत्तेः। नन्वेतत्सूत्रस्याऽधिकारसूत्रत्वेऽत्र 'तत्र, ग्रहणं व्यर्थमधिकारेणैव प्रकृतधात्वधिकारविषयतायाः सिद्धत्वादित्यत आह—तस्मिंश्च सत्येवेति–उपपदे सत्येवेत्यर्थः। अयमभावः–तत्रग्रहणाऽभावे 'धः कर्मणि ष्ट्रन्' इत्यादौ यथा कर्मण्यभिधेये ष्ट्रन्

प्रत्ययो भवतीत्यर्थो भवति; तथैव 'कर्मण्यणि' त्यादौ कर्मण्यभिधेयेऽण् प्रत्यय इत्यर्थे कर्तर्यणप्रत्ययाऽनापत्तिः। किञ्च सप्तम्यन्तनिर्देशस्योपपदसंज्ञार्थत्वेन चारितार्थ्यात्केवला-दपि धातोः कर्तर्यण्प्रत्ययसम्भवः। कृते तु तस्मिन् कुम्भाद्युपपदस्य प्रत्ययोत्पत्तिहेतुभूत-त्वेन केवलादुक्तप्रत्ययापत्तिशङ्काकलङ्कोदयावसरो नैवास्तीति। अनेन च सूत्रेण प्रत्ययवि-शेषस्य पदसंज्ञासन्नियोगशिष्टत्वं बोधयति। यस्य प्रत्ययविधायकशास्त्रस्य सप्तम्यन्तपदैक-वाक्यता वा भवति तेन शास्त्रेण प्रत्ययविशेषस्य सप्तम्यन्तपदस्योपपदसंज्ञायाश्च युगप-द्विधानम्भवति यस्य तु प्रत्ययविधायकशास्त्रस्य नोक्तरूपत्वं तस्य केवलप्रत्ययमात्रविधा-यकत्वमेव। यथा तव्यत्तव्यानीयर इत्यादिशास्त्राणां केवलप्रत्ययविधायकत्वमेवेति तदा-शयः। प्रत्ययविधेरुपपदसंज्ञासन्नियोगशिष्टत्वाऽनङ्गीकारे त्वन्वाचयशिष्टत्वापत्तिः। अय-म्भावः--कर्मण्यणित्यादौ यस्मिन्प्रयोगे कर्मणो विधीयमानाऽण्प्रत्ययप्रकृत्यर्थाऽन्वयित्व-न्तत्रप्रयोगे कर्मण उपपदसंज्ञाऽपि भवति। धातोरण्प्रत्ययस्तूपपदाऽभावेऽपि भवतीति सम्भाव्येत। नच सूत्रे कर्मणीति सप्तम्यन्तपदसत्त्वात्कथन्तदभावे प्रत्ययसम्भव इति वा-च्यम्। कर्मणीतिसप्तम्यन्तपदोच्चारणस्य यत्र तादृशस्य समीपोच्चारितत्वन्त्रोपपदसंज्ञा-विधायकत्वेन चारितार्थ्यात्। अत्र सूत्रस्य प्रथमार्थसप्तम्यामेव प्रवृत्त्या 'भुवो भावे' इ-त्यादौ भावेऽर्थे भुवः क्यबित्यर्थाद्भावे इति अधिकरणसप्तम्यां न प्रवृत्तिरिति बोध्यम्। उपदेशेऽजनुनासिक इदि, ति सूत्रे प्रवृत्त्युपयोग्यानुनासिकत्वव(१)ल्लक्ष्यानुरोधेनैव काचि-त्सप्तमी प्रथमार्थे काचित्स्वार्थाऽधिकरण एवेति व्यवस्थाऽनुमेयेत्यलं पल्लवितेन॥

उपपदमतिङ्—सूत्रे सुबन्तस्याऽसत्त्वादुपपदेतिमहासंज्ञाबलात्तल्लाभस्तथा च उपप-दस्य सुबन्तस्य समर्थेन नित्यं समास इत्यर्थः। सुबन्तस्योपपदसंज्ञास्वीकारादेव 'राजनि युधि कृञः' इत्यत्र राजनीति सप्तम्याः प्रथमार्थत्वकल्पनात्सुबन्तस्यैव क्वनिप्प्रत्ययविधान-समकालिकोपपदसंज्ञास्वीकारेण राजानं योधितवतीति राजयुध्वेत्यादौ नलोपो जातः।

सूत्रेऽतिङितिपदे न तिङ् यस्मिन्निति बहुव्रीहिणा तिङन्ताघटित उपपदसमास इत्यर्थे ण्वुल्विधायकसूत्रस्थायाः क्रियार्थायां क्रियायामिति सप्तम्याः प्रथमार्थत्वेन एधानाहारको व्रजतीत्यत्र व्रजतीत्यस्य विभक्त्यन्तस्योपपदत्वेऽपि तिङन्तत्वान्न समासः।

नच तस्योपपदसंज्ञाविधाने किम्फलमिति वाच्यम्। तदुच्चारण एव प्रत्ययोत्पत्तेरेव फलत्वात्। एवञ्च तिङन्तस्य नोपपदसमास इति फलितमित्याह—अतिङन्तश्चायं स-मास इति--कथमपि तिङन्ताघटितः समाससंज्ञकः समुदाय इत्यर्थः। कुम्भ अस् कार इत्यलौकिकं प्रक्रियावाक्यमिति। समासप्रवृत्तियोग्यं लोके प्रयोगार्हमित्यर्थः। ननु [अ-न्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते] इतिन्यायबलेन 'सुपो धातुप्रातिपदिकयोरि' त्येत-त्सूत्रविहितलुका 'लशक्वतद्धिते' 'तस्य लोपः' इति सूत्रद्वयविहितयोः ङकारस्येत्संज्ञालोप-योर्बाधेन कुम्भ ङस् इत्येवं प्रदर्शनस्य युक्तत्वादुक्तवाक्यप्रदर्शनं न युक्तमिति चेन्न। इत्सं-

---

(१) लक्ष्याऽनुरोधेनैवेति। ब्रह्मभूयमित्येतच्छब्दजन्यशाब्दबोधे धात्वर्थभवनस्यैव विशेष्यत्वेन भानस्याऽनुभवसिद्धत्वाद्भाव इति सप्तम्या न प्रथमार्थत्वम्। भव्यम्प्रभव्यमि-त्यादौ क्यपोऽदर्शनात् 'अनुपसर्गे सुपि' इत्यनयोस्तु प्रथमार्थत्वमेवेतिकल्पनवल्लक्ष्यानुरोधेन कल्पनीयमिति भावः॥

ज्ञालोपयोर्बाधाऽबाधयोः फले विशेषाऽभावेनोक्तन्यायाऽप्रवृत्तेः । अत्र 'कर्तृकर्मणोः कृति' इत्यनेन कृद्योगलक्षणा षष्ठी । नचाऽन्तरङ्गपरिभाषया द्वितीयाया दुर्वारत्वात्कथं षष्ठीति वाच्यम् ।

(प्रकल्प्य चापवादविषयं तत उत्सर्गः प्रवर्त्तते) इति न्यायेन षष्ठ्या एव प्राप्तेः । नचोक्तसूत्रेण षष्ठीविधानात्षष्ठीसमासस्यैव सुलभत्वेन तं विहायोपपदसमासः कथमिति वाच्यम् । विभक्त्युत्पत्तेः पूर्वमेवाऽन्तरङ्गत्वादुत्तरपदे उपपदसमासप्रवृत्तेः । नच कृद्योगलक्षणषष्ठ्याः कारकषष्ठीत्वेनाऽन्तरंगत्वात्षष्ठीसमासस्याऽपि विभक्त्युत्पत्तेः पूर्वं प्रवृत्तौ कुतो नाऽयमेव समास इति वाच्यम् । सत्येवमस्य समासस्यैवेष्टत्वात् । नच षष्ठीसमासस्य नित्यत्वादेतत्कृतस्य तत्पुरुषसंज्ञाप्रयुक्तैकार्थीभावरूपसामर्थ्यस्याऽनपगमेनोक्तसमासप्रवृत्तेः। एकस्या एव संज्ञाया उभाभ्यामपि प्रवृत्त्याऽविरोधेन युगपदेवोभाभ्यां सेति भाष्ये स्पष्टमत्र सूत्रे । (१)एवञ्च 'द्वितीयाश्रिते'त्यादिसूत्रविहितसमासोऽप्युत्तरपदे सुबुत्पत्तेः प्रागेवेति बोध्यम् । (२)अतएव परिभाषायां कारकेतिसामान्यत एवोक्तम् । भाष्यकृता च न कारकांशे प्रमाणमुपन्यस्तम् । नच प्रकृतसूत्रस्थभाष्यात्परिभाषा न कर्त्तव्येत्यवगमेन परिभाषाघटककारकांशे नोपन्यस्तं भाष्यकृता प्रमाणमित्युक्तिर्न संगतिमाप्नोतीति वाच्यम् । प्रकृतसूत्रस्थभाष्यस्य विशिष्टायाः परिभाषाया अकर्त्तव्यपरत्वेनादोषात् । उक्तभाष्यस्यैतत्परत्वादेव परिभाषाप्रत्याख्यानोत्तरमपि गतिकारकेति समासवचनादित्युक्तम् । तेन कारकांशो वाचनिक इति लभ्यत इति ॥

ननु सूत्रेऽतिङ्पदसत्त्वात्तिङन्तस्य समासाऽभावबोधनं तत्सुपाऽधिकारेणैव सिद्धञ्चेत्कथं तद्ग्रहणमित्याशयेनाशङ्कते—अतिङ्किमिति । समाधत्ते–मा भवान् भूदिति । कारको व्रजतीत्यादिभाष्योक्तस्याऽप्युपलक्षणमिदमिति बोध्यम् । अत्र समासाऽभावं सूचयितुमेव मध्ये भवानिति प्रयुक्तम् । अयम्भावः—अतिङ्ग्रहणाऽसत्त्वे तिङन्तेन समासापत्तिः, 'माङि लुङि'ति सप्तमीनिर्देशेन माङ उपपदत्वात् । नच सुपाधिकारस्य प्रागेवोक्तत्वात्सुबन्तस्यैव समासेन तिङन्तस्य समासाऽभावाद्व्यर्थमेव तदिति वाच्यम् । तस्य वक्ष्यमाणपरिभाषाज्ञापनेन साफल्यात् । तथाहि–माङ उपपदत्वे तादृशमहासंज्ञाकरणबलात् कर्तुं देवदत्तो घटं ग्रामं व्रजतीति प्रयोगवत् 'ऐऔच्' 'तद्धितार्थे'ति सूत्रद्वयस्थभाष्याद्द्वित्रिपदव्यवधाने प्रयोगाऽभावबोधनेन माङि लुङिति सप्तम्याः प्रथमार्थत्वाऽभावात्तस्योपपदत्वे मानाऽभावेन तस्योपपदत्वे फलाऽभावेन चोक्तप्रत्युदाहरणभूतोक्तप्रयोगे समासापत्यभावाद्व्यावर्त्त्याऽभावेन व्यर्थमतिङ्ग्रहणं ज्ञापयति नात्र सूत्रे सुपेत्यस्यानुवृत्तिः 'कुगति प्रादयः' इत्यत्राऽपि न तदनुवृत्तिः । तत्र 'कुप्रादयः' 'गतिः' इति योगं विभज्य कुप्रादयः सुबन्ताः सुबन्तेन, समस्यन्ते, गतिश्च सुबन्तोऽतिङन्तेन समस्यत इत्यर्थः । तथा च सिद्धैषा परिभाषा ( गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः )

---

( १ ) गतिकारकेति परिभाषायां कारकशब्दमात्रस्योपादानात्कारकविभक्त्यन्तस्य कृद्भिः समासविधायकशास्त्राणां कृदन्तात्सुबुत्पत्तेः प्राक् प्रवृत्तिरित्यस्य सिद्धौ चेत्यर्थः ।

( २ ) परिभाषायां कारकसामान्यविषयत्वादेवेत्यर्थः ।

इति। उक्तयुक्त्या गत्युपपदयोर्लाभः कारकांशस्य तु 'कर्तृकरणे कृता बहुलमि'ति सूत्रस्थबहुलग्रहणाल्लाभः।

परिभाषाफलं प्रदर्शयन् गतिमुदाहरति—व्याघ्रीति। अत्र व्याङो घ्रशब्देन गतिसमासः। अस्य समासस्य सुबन्तस्याऽपेक्षणे तु सुबुत्पत्त्यर्थं संख्याऽपेक्षणात्ततः पूर्वमेव लिङ्गयोगात्तन्निमित्तकप्रत्ययटाबेव स्यान्न ङीप्। अविभक्त्यन्तस्य घ्रशब्दमात्रस्य जातिवाचकत्वाऽभावेन च ङीप् न स्यादिति भावः। नच परिभाषाघटकांशत्रयस्य मध्ये गत्यंशोदाहरणस्योपपदत्वेन सिद्धत्वाद्व्यर्थं एव स इति वाच्यम्। आङ उपपदत्वेन तस्य घ्रशब्देन समासेऽपि पश्चाद्विशब्देन समासार्थं गत्यंशस्याऽवश्यकत्वात्। आङः 'घ्रः संज्ञायामि'त्यनेनाङ्पूर्वकात् घ्राधातोः कप्रत्ययविधानादाङ उपपदत्वं न विशब्दस्येति भावः।

कारकमुदाहरति—अश्वक्रीतीति। अत्राश्वेन क्रीतेति विग्रहे 'कर्तृकरणे कृता बहुलमि'त्यनेन समासः। 'क्रीतात्करणपूर्वादि'ति ङिप्। सुबन्तेन सति समासे पूर्वोक्तयुक्त्या टाप्यदन्तत्वाभावान्नासाविति भावः। उपपदमुदाहरति—कच्छपीति। कच्छेन पिबतीति विग्रहे 'सुपी'ति योगविभागात्कः। अत्राऽपि सुबन्तेन समासे व्याघ्रीत्यत्रेव ङीप् न स्यादिति भावः। कच्छेन साधनेन पीबतीत्यर्थे कच्छस्य कारकत्वादस्यैवोदाहरणमिदं नोपपदस्य; तथा च मापवापिणीत्यस्योदाहरणम्। अत्र मापोपपदाद्वपधातोः 'सुप्यजातावि'ति णिनिः। ततो मापोपपदस्य कृदन्तेन समासे 'प्रातिपदिकान्तनुम्विभक्तिषु चे'ति सूत्रेण पूर्वपदस्थनिमित्तात्परस्य समासप्रातिपदिकान्तनकारस्य णत्वसिद्धिः, सुबन्तेन समासे तु अन्तरंगत्वान्नान्तलक्षणङीपो दुर्वारतया ततो वापिनीशब्देन समासे गर्गभगिनीत्यत्रेव णत्वानापत्तिरित्येके। कच्छेत्यस्य कारकत्वाऽभावाद्युक्तमेवोदाहरणमुपपदस्येत्यन्ये इति दिक्॥

अह्नष्टखोरेव। द्व्यहीन इति। द्वे अहनी भृतः क्रतुरिति विग्रहे 'तद्धितार्थोत्तरपदसमाहारे चे'त्यनेन तद्धितार्थे द्विगौ 'तमधीष्ट' इत्यधिकारे द्विगोर्वेत्यनुवर्त्तते 'रात्र्यहः सम्वत्सराच्चे'त्यनेन खे तस्मिन् 'अह्नष्टखोरेवे'त्यनेन टिलोपे खस्येनादेशे चोक्तरूपसिद्धिः। ननु खस्य टिलोपमात्रफलकत्वाऽभ्युपगमे तत्र तद्धितार्थे द्विगौ विहितेन टचैव टिलोपसिद्धौ खग्रहणं व्यर्थमिति चेन्न। समासान्तविधेरनित्यत्वेन टचोऽप्रवृत्त्या खग्रहणस्य सार्थक्यात्। समासान्तविधेरनित्यत्वादेव द्विगोर्वेत्यनुवर्त्तमाने रात्र्यहःसम्वत्सराच्चेत्यस्य चारितार्थ्यम्। नच 'अह्नष्टखो'रित्यनेन खे परे टिलोपविधानसामर्थ्यादेव समासान्तविधेष्टचोऽप्रवृत्तौ तस्याऽनित्यत्वपर्यन्तानुधावनं खपुष्पग्रहणवन्निष्फलमिति वाच्यम्। अहीन इत्यत्र खे टिलोपविधानेन अह्नष्टखोरित्यस्य सार्थक्यात्सामर्थ्याऽभावेन समासान्ताऽभावाऽसाधकत्वेनोक्तविधेरनित्यत्वमन्तरा टचो दुर्वारतयोक्तविधेरनित्यत्वपर्यन्तानुधावनस्य साफल्यात्। नच टचि को दोष इति वाच्यम्। 'अह्नोऽह्न एतेभ्यः' इत्यनेन द्व्यहीन इत्यस्याऽह्नादेशेनाऽसिद्ध्यापत्तेः। नच प्रमाणाऽभावात्समासान्तविधेरनित्यत्वं न स्यादिति वाच्यम्। अश्वादिगणे राजन्छन्दपाठस्यैव तत्र प्रमाणत्वात्। तथाहि—प्रतेरंश्वादयस्तत्पुरुषे' इत्यनेनाऽन्तोदात्तार्थमश्वादिगणे राजन्छन्दपाठः स चायं समासान्तविधेरनित्यत्वे सत्येव सफलः, अन्यथा टचैवान्तोदात्तत्वसिद्धौ तदर्थं कृतस्याश्वादिगणे राजन्छन्दपाठस्य वैयर्थ्यापत्तेरित्यलम्।

स्त्रियामदन्तत्वाट्टाविति । ननु 'रात्राऽह्नाहाः पुंसि' इत्यनेन रात्रिशब्दान्ताऽह्नशब्दान्ततत्पुरुषयोः पुंस्त्वविधानात्प्रकृतेऽह्नशब्दान्ततत्पुरुषस्य पुंस्त्वबोधनात्स्त्रीत्वस्य दुर्लभतया स्त्रियामित्याद्युक्तिर्न सम्यगिति चेन्न । सर्वमहः सर्वाह इत्यत्र पुंस्त्वविधानेन सफलस्योक्तवचनस्य लुप्ततद्धितेऽप्रवृत्तेः । न च प्रमाणाऽभावात्कथमिह तदप्रवृत्तिरिति वाच्यम् । 'लुपि युक्तवद्व्यक्तिवचने'इत्यस्यैव तत्र प्रमाणत्वात् । तथाहि—लुप्तप्रत्ययेऽपि प्राकृतलिङ्गाऽनुशासनप्रवृत्त्यभ्युपगमे स्पष्टमेव तद्वैयर्थ्यं स्यात् । लुप्तप्रत्यये प्राकृतलिङ्गाऽनुशासनाऽप्रवृत्तेरेव लवणः सूपः, लवणा यवागूरित्यादौ क्लीबत्वं न । नच द्वयोरह्नोर्भवेति विग्रहे 'कालाट्ठञि'त्यनेन विहितस्य ठञो 'द्विगोर्लुगनपत्ये' इत्यनेन लुकि 'राजाहः सखिभ्य' इति टचि टिलोपेऽह्नादेशे च निष्पन्नस्य द्व्यह्नशब्दस्य ठञन्तत्वेन 'टिड्ढाऽणञि' ति ङीपो दुर्वारतया टाबित्युक्तिर्न समीचीनेति वाच्यम् । अनुपसर्जनीभूतस्य ठञो योऽकारस्तदन्तप्रातिपदिकान्ङीब्विधायकसूत्रार्थं वर्णाश्रयत्वेन ( वर्णाश्रये नास्ति प्रत्ययलक्षणमि ) ति निषेधात्प्रत्ययलक्षणाप्रवृत्त्या ठञोऽसत्त्वेन ङीपोऽप्रवृत्तेः । नचैवं परिहारेऽपि टच्प्रत्ययस्य टित्वान्ङीप् स्यादेवेति वाच्यम् । टचः समासान्तत्वात्तद्धितार्थम्प्रति तस्योपसर्जनत्वेन तदप्रवृत्तेः । अत एव आपिशलिना प्रोक्तमधीयाना ब्राह्मणी आपिशलेत्युदाहृतम्भाष्ये । नच ( संख्या पूर्वो द्विगुरि )त्यनेन द्विगुसमासे (द्विगोरि)त्यनेन ङीप् दुर्वार एवेति वाच्यम् । उक्तङीब्विधायकस्य 'अपरिमाणबिस्ताऽचिते'ति निषेधेन तदप्रवृत्तेः । अतोऽत्र टाव एव युक्तत्वात्तथैवोदाहृतमित्यलं पल्लवितेन ।

दीर्घाऽह्नी प्रावृडिति । दीर्घाणि अहानि यस्यामिति विग्रहे 'अह्नोऽह्नः एतेभ्यः' इत्यनेनाऽह्नादेशे (क्षुभ्नादिषु च)ति णत्वनिषेधे रूपं सिद्ध्यति ।

यत्तु प्राचा । उक्तप्रयोगे णत्वाऽभावोऽदन्ताह्नादेशाऽभ्युपगमेनोपपादितः स तदायासो मुधैव, 'प्रातिपदिकान्तनुम्विभक्तिषु च' त्यनेन प्राप्तणत्वव्यावृत्त्यर्थं तस्य क्षुभ्नादिगणे पाठस्यावश्यकत्वेन तदुपपत्तेरिति भावः ।

ननु (लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमि) ति परिभाषया 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः' इत्येतत्सूत्रविहितप्रतिपदोक्तसमासस्यैवाऽत्र ग्रहणं स्यात्तथा च तत्र यदुत्तरपदं तस्मिन्नेव परे आत्वविधानं नान्यस्मिन्निति व्यर्थं समानाधिकारग्रहणमिति चेन्न । तस्य सामर्थ्यादुक्तपरिभाषाऽप्रवृत्तिकल्पनेन साफल्यात् । एवञ्च महाबाहुरित्यत्र नाऽऽत्वानुपपत्तिः । उक्तप्रयोगे महान्तौ बाहू यस्येति बहुव्रीहिः ॥

ननु आन्महत इत्यनेन महच्छब्दस्यात्वविधानादुत्तरसूत्रे द्व्यष्टनोरेव ग्रहणाच्च सर्वथाऽप्राप्त्या एकादशेत्यत्राऽऽत्वं न स्यादत आह–आदिति योगविभागादात्वमिति । योगविभागस्य भाष्याऽनारूढत्वमित्यत आह–प्रागेकादशभ्य इति निर्देशाच्चेति ।

ननु अर्द्धनावमित्याद्यर्थं लोकाश्रयत्वाल्लिङ्गस्येत्यस्यावश्यकत्वादनेनैव लिङ्गोपपत्तौ लिङ्गविधायकप्रकरणमनावश्यकमिति चेत्सत्यम् । जात्याख्यायामित्यादिसूत्रसमूहवदिष्टापत्तेरिति ध्वनयन्प्रकृताऽनुपयुक्तान्यपि तानि व्याचष्टे—जात्याख्यायामित्यादि । जातेः प्राधान्येनाऽऽख्यायामित्यर्थः । भावप्रत्ययमन्तरा प्राधान्येन जातिबोधे गवादिशब्दानां साधुत्वे इदमेव सूत्रं मानमिति बोध्यम् । तस्याऽविशेष्यत्वे बाह्यार्थेऽन्वयी व्यक्तिघटित-

परम्परया बोध्यः। तत्र जातेरेकत्वेनैकवचनं प्राप्नोतीत्यस्यारम्भः। अत्रैकत्वञ्च बहुवचनार्थः। एकस्मिन्नर्थे वर्तमानः शब्दो बहूनामर्थानां वचनं बोधको भवतीत्यर्थादर्थातिदेशोऽयमित्याह—**एकोऽप्यर्थो बहुवद्भवतीत्यादि**। तदुक्तम्भाष्ये-( यावद्ब्रूयादेकोऽर्थो बहुवद्भवतीति तावदेकस्मिन्बहुवचनमिती) ति। एकत्वेऽर्थे बहुत्वप्रयुक्तस्य कार्यस्यातिदेशात्कार्यातिदेश एवेति बोध्यम्। जातौ संख्यान्वये एकवचनस्य व्यक्तौ संख्याऽन्वये बहुवचनस्य सिद्धत्वादनावश्यकत्वेन भाष्ये प्रत्याख्यातमेतत्सूत्रम्। एवञ्च यथोत्तरं मुनीनां प्रामाण्यात्सूत्रोक्तार्थेऽसाधुत्वमेव प्रयोगाणामिति बोध्यम्।

**सविशेषणस्य प्रतिषेध इति**। मुख्यार्थे बहुवचननिषेधार्थमिदं वार्त्तिकम्। यदा तु अस्मच्छब्दस्य स्वघटिते उद्भूताऽवयवभेदे समुदाये लक्षणा तदा बहुवचनं भवत्येव, तेन

'त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः'।

इत्यादि सिद्धम्। गार्ग्योऽहं ब्रवीमीत्यादावयं निषेधः। उत्तमपुरुषाऽनुरोधेनाऽत्राहमित्यस्य स्वविशेष्यत्वादित्यलम्॥

ननु 'सभाराजाऽमनुष्यपूर्वं' त्यत्र सभेत्येको योगः, राजाऽमनुष्यपूर्वेत्यपरो योगः, तत्र सभान्तस्तत्पुरुषो नपुंसकं स्यादित्यर्थकेन सभेतियोगेनैव स्त्रीसभमित्यत्र नपुंसकत्वे सिद्धे 'अशाले'ति सूत्रं व्यर्थमित्यभिप्रायेणाशङ्कते—**अशाला किमिति**। समाधत्ते-धर्मसभेति। धर्मशालेत्यर्थः। अयमभिप्रायः—इनसभम्, ईश्वरसभमित्यत्रापि पूर्वयोगेनैव नपुंसकत्वोपपत्तौ व्यर्थः सन्नुत्तरयोगो ज्ञापयति स्त्रीत्वेतरलिङ्गविशिष्टप्राणिवाचकपूर्वपदकस्य सभान्तस्य तत्पुरुषस्य नपुंसकत्वञ्चेत्तर्हि राजाऽमनुष्यपूर्वपदकस्यैव स्यादेवञ्च स्त्रीत्वेतरलिङ्गविशिष्टप्राणिवाचकपूर्वपदकेतरत्वेन पूर्वयोगे संकोचे कृते स्त्रीत्वेतरलिङ्गविशिष्टप्राणिवाचकपूर्वपदकेतरत्वाऽभावेन इनसभमीश्वरसभमित्यत्र नपुंसकत्वार्थमुत्तरयोगस्यावश्यकत्वेन स्त्रीसभमीत्यत्रेव धर्मसभेत्यत्राऽपि नपुंसकत्वापत्तिरिति तदर्थमशालेति सूत्रमावश्यकमेवेति दिक्॥

इति तत्पुरुषः॥

# अथ बहुव्रीहिसमासप्रकरणम्।

**शेषो बहुव्रीहिः**। असर्वोपयोगार्थकाच्छिषेः कर्मणि घञा निष्पन्नस्य सूत्रघटकशेषपदस्योपयुक्तादन्यपरत्वेन यस्य पदस्याऽर्थस्य वा पूर्वत्रोपयोगस्तस्य पूर्वमप्रसिद्धिमभिधाय भाष्यकृता सिद्धान्तितं त्रिकतः शेष इत्येतन्मूलकव्याख्यानात् शेष इत्यस्य प्रथमान्तत्वाच्च। तेन प्रथमान्ताऽपेक्षशेषस्यैव ग्रहणमिति बोध्यम्। पदतः शेषस्य ग्रहणे सामान्यतो विशेषतो वा यस्य पदस्योपयोगस्तदन्याऽप्रसिद्धिः, 'सुप्सुपे' त्यत्र समान्यतः, द्वितीयाश्रिते' त्यादौ विशेषत उपयोगः। अर्थोऽपि पूर्वपदार्थप्रधानत्वेऽन्यपदार्थप्रधानत्वे चाऽव्ययीभावः। उत्तरपदार्थप्रधानत्वे तत्पुरुषः प्रसिद्ध एव, अतो यस्य त्रिकस्य विशिष्य समासो नोक्तः स शेष इति विवक्षितमितिभावः। **सशेषःप्रथमान्तमिति**। ननूक्तप्रकारेण प्रथमान्तस्य बहुव्रीहिरिति सिद्धम्, तत्कथं (प्राप्तमे गता[illegible]प्रथमया) इति

तत्पुरुषसमासप्रकरणस्थवार्त्तिकेन प्रगत आचार्य इत्यादौ प्रथमान्तस्य तत्पुरुषसमासविधानादिति चेन्न । उक्तवार्त्तिकेन प्रथमान्तेन प्रादीनामुक्तसमासविधानेऽपि प्रथमान्तस्योक्तसमासाविधानादिति भावः । नच कण्ठे काल इत्यादौ व्यधिकरणपदस्यापि बहुव्रीहिदर्शनात्प्रथमान्तस्यैवोक्तसमास इत्ययुक्तमिति वाच्यम् । तत्र तत्र ज्ञापकसाध्यबहुव्रीहेरिष्टत्वात् ।

**अनेकमन्यपदार्थे** । अन्यस्य समस्यमानपदातिरिक्तस्य पदस्यार्थोऽन्यपदार्थस्तत्र विद्यमानस्याऽनेकप्रथमान्तस्य वा समासः; स च बहुव्रीहिसंज्ञक इत्यर्थः । अन्यपदार्थ इत्यत्राऽन्यपदं भेदविशिष्टार्थकं ततश्च भेदस्य प्रतियोगिनि साकाङ्क्षत्वाच्छेपपदोपस्थितस्य प्रतियोगित्वेन तत्राऽन्वयाद्द्वितीयान्ताद्यर्थ इति लब्धम् । तथा च–स्वनिष्ठप्रतियोगितानिरूपितभेदविशिष्टार्थकपदार्थे विद्यमानस्याऽनेकप्रथमान्तस्य समास इति फलितार्थः ॥

**अप्रथमाविभक्त्यर्थे बहुव्रीहिरिति** । 'अनेकमन्यपदार्थे' इत्यनेकप्रथमान्तस्य समासविधानात्तत्राऽन्यपदार्थपदेन प्रथमान्तार्थातिरिक्तस्यैव ग्रहणं युक्तमित्येतत्फलितन्तदिति भावः ॥

**समानाधिकरणानामिति च फलितमिति** । समानाधिकरणत्वञ्च, एकार्थबोधजनकत्वम् । अनेकप्रथमान्तस्थले अभेदाऽन्वयप्रयोजकीभूतसमानविभक्त्यन्तविशेष्यविशेषणवाचकपदसत्वादर्थादेव समानाधिकरणत्वोपपत्तिरिति तदाशयः । अनेकप्रथमान्तस्य समासविधानादेकप्रथमान्तस्य तदभाव इत्याह—**प्रथमार्थे तु नेति** । सूत्रे प्रथमान्तमित्यस्य फलमाह—**पञ्चभिर्भुक्तमस्येति** ।

**प्रादिभ्यो धातुजस्येति** । प्रादिभ्यः परं यद्धातुजं पदं तदन्तस्य पदान्तरेण समासः पूर्वपदान्तर्गतस्योत्तरपदस्य धातुजस्य वा लोप इत्यर्थः । प्रपर्ण इत्युदाहरणम् ॥

**नञोऽस्त्यर्थानामिति** । नञः परं यदस्त्यर्थवाचि पदं तदन्तस्य पदान्तरेण बहुव्रीहिः, अस्त्यर्थवाचिनाम्पदानाम्वा लोप इत्यर्थः । अविद्यमानः पुत्रोऽपुत्र इत्युदाहरणम् । तत्राऽस्त्यर्थानामित्यस्याऽसत्वे अनुपनीतपुत्र इत्यत्रापि समासोत्तरपदलोपयोरापत्तिरतस्तत् । नञोऽसत्वे निर्विद्यमानपुत्र इत्यत्राप्युक्तापत्तिः । नन्विह सुपेत्यस्याऽसम्बन्धेऽपि सुवित्यस्य सम्बन्धादस्तीत्यस्य तिङन्तत्वेन समासो न स्यादत आह—**अस्तीति विभक्तिप्रतिरूपकमव्ययमिति** ।

अत्र केचित्—चित्रा जरती गौर्यस्येति विग्रहे सूत्रेऽनेकेतिपदसत्त्वेन त्रिपदबहुव्रीहिः तत्र सूत्रेणोत्तरपदे पुंवत्त्वविधानादुत्तरपदशब्दस्य समासस्य चरमावयवे रूढत्वेनोत्तरपदस्य मध्यमपदेन व्यवधानात्प्रथमस्य न पुंवद्भावः । गोरूपोत्तरपदे जरतीत्यस्य द्वितीयस्यापि न सः । पूर्वपदशब्दस्य प्रथमावयवे रूढत्वेन तस्य पूर्वपदत्वाऽभावात् तथा च चित्राजरतीगुः । जरतीचित्रागुर्वा । दीर्घातन्वीजंघः । तन्वीदीर्घाजंघ इत्येवेत्याहुः ।

वस्तुतस्तु—यथा द्वन्द्वसमासप्रकरणस्थे 'आनङ् ऋतो द्वन्द्वे' अत्र सूत्रे (होतृपोतृनेष्टोद्गातार) इति समर्थसूत्रस्थभाष्यप्रयोगान्न पूर्वपदाक्षेपः । अत एव भाष्यकृदुदाहृतस्य तृतीयस्यानङः सङ्गतिः । अन्यथा पूर्वपदशब्दस्य प्रथमावयवे रूढत्वात्तत्र तृतीयस्य पूर्वपदत्वाऽभावात्तदसङ्गतिः । तथैवाऽत्रापि पूर्वपदाक्षेपाऽऽभावेनोपान्त्यस्य पुंवत्वं स्यादेवेति चित्राजरद्गुरित्येव प्रयोगः । अत्र सूत्रे पूर्वपदसम्बन्धाऽभावादेव चित्राजरत्यौ

गावौ यस्येति द्वन्द्वगर्भे ऽपि बहुव्रीहौ चित्राजरद्गुरिति भाष्यं सङ्गच्छते। ननु तत्र पूर्वपदे पुंवत्वेन कुतो न टाब्निवृत्तिरिति चेन्न। द्वन्द्वान्तर्गतस्य जरच्छब्दस्योत्तरपदत्वेऽपि समानाधिकरणत्वाऽभावेन तदनिवृत्तेः। नचैवमपि द्वन्द्वात्मकपूर्वपदस्य समानाधिकरणोत्तरपदपरत्वेन सति पुंवद्भावे तदवस्थ एवोक्तदोष इति वाच्यम्। स्त्रीप्रत्ययप्रकृतिभूतयोर्द्वन्द्वान्तर्गतचित्राजरच्छब्दयोरेकैकस्य भाषितपुंस्कत्वेऽपि द्वन्द्वात्मकपूर्वपदस्य भाषितपुंस्कत्वाऽभावेनादोषादिति भावः। कर्मधारयपूर्वपदे तु पूर्वपदान्तर्गतोत्तरपदाश्रयणेन प्रथमस्योत्तरपदाश्रयणेन द्वितीयस्य च पुंवत्वे जरच्चित्रगुः। कर्मधारयोत्तरपदे तु जरति चासौ गौश्चेति विग्रहे 'गोरतद्धित' इति टचि टित्वान्ङीपि जरद्गवी, अस्य चित्राशब्देन बहुव्रीहौ चित्राजरद्गवी यस्येतिविग्रहे 'नद्यृतश्चेति वक्ष्यमाणसूत्रेण कपि चित्रजरद्गवीक इति प्रयोगः। सूत्रे भाषितपुँस्कादित्यस्याऽसत्वे गङ्गाभार्य्यं इत्यत्र भार्य्यारूपोत्तरपदपरत्वेन पुंवद्भावापत्तिः। न च गङ्गाशब्दस्य नित्यस्त्रीत्वान्नोक्तापत्तिरिति वाच्यम्। सूत्रेण स्त्रीरूपार्थकबोधकस्य शब्दस्य पुंस्त्वरूपार्थातिदेशकरणसमार्थ्यात्स्त्रीत्वरूपार्थबोधकत्वेऽपि गङ्गाशब्दस्योक्तापत्तेर्दुर्वारत्वादिति भावः॥

वृद्धिनिमित्तस्य च तद्धितस्येति—ननु वृद्धिशब्देन विहिता या वृद्धिरित्यर्थलाभः कथमिति चेन्न। व्याख्यानेन तल्लाभात्। तथाहि—यः सकलाया वृद्धेर्निमित्तं यस्त्रयाणामाकारैकारौकाराणां निमित्तमितिभाष्यप्रामाण्याद्वृद्धिशब्दस्यावृत्तिः। तथा च सुकर एवोक्तार्थलाभः॥ वृद्धिस्प्रति वृद्धिशब्देन फलोपधानाभावादिह पुंवदिति। वृद्धिशब्देन ताम्प्रतिस्वरूपयोग्यस्वीकारे तु स्रौघ्नीभार्य इत्यत्र वृद्धिशब्देन विहिताया वृद्धेरौकाररूपाया हेतुभूततद्धितस्वरूपयोग्यत्वं वैयाकरणभार्येत्यत्रापि तद्धितस्याऽणः सत्वान्निषेधापत्तिः। फलोपहितस्वीकारे तु नापत्तिः।

तथाहि—फलोपहितस्वरूपयोग्यभेदेन द्विविधं निमित्तम्। तत्राऽऽद्यं कार्य्याव्यवहितपूर्वकालावच्छेदेन कार्याधिकरणवृत्तित्वे सति कार्यसमानाधिकरणाऽत्यन्ताऽभावीयप्रतियोगिताऽनवच्छेदकधर्मवत्वरूपम्। अन्त्यश्च सत्यन्तविशेषणरहितम्। तथा च वृद्धिरूपकार्यसमानाधिकरणे उक्तप्रयोगेऽणः सत्त्वादणतिरिक्ताऽभावीयप्रतियोगिताऽनवच्छेदकाऽणत्वधर्मवत्ताया उभयत्र सत्त्वेऽपि वृद्धिरूपकार्य्याव्यवहितपूर्वकालावच्छेदेनोक्तरूपकार्य्याधिकरणे स्रौघ्नीत्यादिप्रयोगे वैयाकरणघटकस्याऽणोऽसत्वान्नापत्तिः। अत्र प्रवाहणस्य परस्य वृद्धिर्न पूर्वस्य तु वेत्यर्थके 'प्रवाहणस्ये' तिसूत्रे प्रवाहणेयीभार्य इत्यत्र वृद्धिनिमित्तस्य चेति पुंवत्त्वनिषेधो न प्राप्नोति माभूदेवं जातेरिति भविष्यतीति भाष्योक्तेरेवाऽत्र प्रमाणत्वं बोध्यम्। तावद्भार्य इत्यत्रत्यदोषव्यावृत्तये वृद्धेर्निमित्तं यस्मिन्नित्यर्थाश्रयणपरभाष्यादुक्तप्रयोगे वृद्धिनिषेध इष्ट एवेति शेखरकृदिति दिक्॥

ननु 'ओरोदि' त्येव लाघवात् सूत्रमस्तु गुणग्रहणघटितसूत्रकरणे संज्ञापूर्वकविधित्वेन गौरवाद्धेयम्। नच गुणग्रहणाघटितसूत्रकरणेऽपि भस्य तद्धिते इत्येवंरूपसंज्ञापूर्वकत्वस्य सत्त्वाद्गौरवाद्धेयमित्ययुक्तमिति चेन्न। यत्र संज्ञापदं विधेयसमर्पकं तस्यैव संज्ञापूर्वकविधित्वात्प्रकृते भस्य तद्धिते इति सत्वेऽपि संज्ञारूपविधेयसमर्पकपदत्वाऽभावेनादोषादिति चेन्न। गुणग्रहणस्य सामर्थ्यात् [ संज्ञापूर्वको विधिरनित्यः ] इत्यर्थज्ञापनेन साफ-

स्यात् । तेन स्वायम्भुवमित्यादिसिद्धिः । [ ओरोदि ] तिन्यासे ओदित्यत्र तकारस्योच्चारणार्थत्वात्तपरत्वे फलाऽभावान्न 'तपरस्तत्कालस्ये' त्यस्य प्रवृत्तिः । किञ्च 'ओरो' इत्येवास्त्विति भावः ॥

पूर्वपदात्संज्ञायामगः—ननु सूत्रेऽग इत्यस्य सत्त्वाद्गकारव्यवधाने पूर्वपदस्थनिमित्तात्परस्य नस्य णत्वन्नेत्यर्थे ऋगयनमितिपष्ठीतत्पुरुपे णत्वन्न भवतीत्याशयेनोदाहरति—अगः किम् । ऋगयनमिति ।

वस्तुतस्तु—नाग्ग्रहणस्योक्तस्थलीयणत्वापत्तिनिवृत्तिः फलम् । तस्य 'अणृगयनादिभ्यः' इति सूत्रे ऋगयनशब्दपाठसामर्थ्यान्निपातेनैव निवृत्तिरिति व्यर्थमेव तदिति भाष्ये स्पष्टमित्याह—अणृगयनादिभ्य इत्यादि ॥

उपसर्गाद्बहुलम्—नन्वस्य सूत्रस्याऽष्टाऽध्याय्यामपठितत्वात्कुत उपलब्धिरिति नाशङ्क्यम् । 'उपसर्गादनोत्परः' इत्यत्राऽनोत्पर इति परित्यज्य तत्स्थाने बहुलग्रहणं संयोज्य भाष्यकृतैव पठितत्वात् । सत्यस्मिन् नसो नस्योपसर्गस्थनिमित्तात्परस्य बहुलं णत्वमित्यर्थे प्रणोनयेत्यत्राऽव्याप्तिवारणं प्रश्नः पूपेत्यादावतिव्याप्तिवारणञ्च फलमित्यलम् ॥

ननु उक्तसूत्रे [ वेर्ग्रो वक्तव्यः ] [ ख्यश्चे ] ति वार्त्तिकद्वस्य सत्त्वात्ताभ्यां प्रत्ययोरन्यतरस्य विधानाद्विनसेत्यस्योपपत्त्यसम्भवादुक्तप्रयोगघटितस्य भट्टिपद्यस्य कथमुपपत्तिरित्याशयेनाशंकते–कथं तर्हि विनसा हतबान्धवेति भट्टिरिति । समाधत्ते—विगतयेति । एवञ्च विनसेति 'पद्दन्नस्'सूत्रेण नसादेशेन तृतीयान्तमिति न कश्चिद्दोप इति भावः ॥

इनः स्त्रियाम् । इनः प्रत्ययत्वेन ( प्रत्ययग्रहण ) परिभाषया तदन्तविधौ स्त्रियां विद्यमानादिन्नन्तबहुव्रीहेः कवित्यर्थः । तथाच उक्तपरिभाषया दण्डिन्नित्यस्यैवेन्नन्तत्वाद्बहुदण्डिन्नित्यस्य तत्त्वाऽभावात्कप् न स्यादित्यत आह—अनिनस्मन्ग्रहणान्यर्थवताचाऽनर्थकेन च तदन्तविधिं प्रयोजयन्तीति ॥

इति बहुव्रीहिः ॥

---

# अथ द्वन्द्वसमासप्रकरणम् ।

चार्थे द्वन्द्वः । 'अनेकमन्यपदार्थे' इत्यतोऽनेकमित्यस्यानुवृत्त्या चस्याऽर्थे विद्यमानानामनेकप्रथमान्तानां द्वन्द्वसमासो भवतीत्यर्थः । उक्तसूत्रादनुवृत्तस्याऽनेकमित्यस्य स्त्रग् वाग्दपदं होतृपोतृनेष्टोद्गातार इत्यादौ यथायथं समासान्तस्याऽनङश्च मध्येऽप्रवृत्तिरन्ते एव प्रवृत्तिश्च फलम्बोध्यम् ।

अत्र केचित् । चैत्रेण मैत्रेण च कृतमिति वाक्येऽवयवकर्तृत्वस्यैव प्रतीत्या चैत्रमैत्राभ्यां कृतमिति समासे समुदायकर्तृत्वस्यैव प्रतीत्या चैत्रेण मैत्रेण च कृतमिति वाक्यस्य समाससमानार्थकत्वाऽभावेन चैत्रेण मैत्रेणेत्यस्य चैत्रमैत्राभ्यामिति समुदायसाधुत्वप्रयोजकवाक्यत्वाऽभावात्प्रथमान्तानामेव द्वन्द्वो नतु परिनिष्ठितविभक्त्यन्तानामिति । वाक्यस्य समुदायसाधुत्वप्रयोजकत्वाऽभावादेव ( यतासे च प्रत्यवसे ते )त्यादौ व्यस्ते

प्रत्येकं देवतात्वप्रतीतिः । अग्नीषोमाभ्यामित्यादौ समुदाये देवतात्वप्रतीतिरिति व्यवस्था सिद्ध्यति । वाक्यस्याऽपि समुदायसाधुत्वप्रयोजकत्वे तु समास इव वाक्येऽपि समुदाये देवतात्वप्रतीतिरेव स्यात् । अत एव ( ङिसम्बुद्ध्योरनुत्तरपदे ) इति वार्त्तिके सम्बुद्धिग्रहणमिहाऽनावश्यकं राजवृन्दारकेत्यादौ सम्बुद्ध्यन्तानां समासः, इह तावत्समासस्समानार्थकेन वाक्येन भवितव्यम्। यश्चेहार्थो वाक्येन गम्यते नासौ कदाचित्समासेन गम्यते अवयवसम्बोधनं वाक्येन गम्यते समुदायसम्बोधनं समासेनेति 'न ङिसम्बुद्ध्योरि'ति सूत्रे भाष्ये उक्तम् । सम्बोधनविभक्त्यन्तस्य सम्मुखीभावफलकत्वात्प्रत्येकमेव सम्मुखीभावप्रतीत्या क्रियाऽन्वयेऽभावेन परस्परमसामर्थ्यमिति तदाशयः । यदा समानाऽधिकरणस्थलेऽपि न समासस्तदा व्यधिकरणानां सुतरां न द्वन्द्व इति परिनिष्ठितविभक्त्या समासेऽपि राजपुरोहिताविति द्वन्द्वोदाहरणम् । एवञ्च व्यधिकरणतृतीयाऽद्यन्तानामपि क्रियादावेवाऽन्वयेन क्रियाजनकत्वरूपकारकत्वस्य प्रत्येकमेव बोधान्न वाक्यसमासयोस्तुल्यार्थत्वमित्यलम् ॥

**मिलितानामन्वय इतरेतरयोग इति** । परस्पराऽपेक्षाणामुद्भूताऽवयवभेदसमूहरूपाणामेकस्मिन्धर्मावच्छिन्नेनाऽन्वय इति तदर्थः । तेन नीधातोः संयोगजनकव्यापाराऽनुकूलव्यापारवाचकत्वेन द्विकर्मकत्वेऽपि अजां ग्रामं नयतीत्यादौ नाऽपि चकारप्रयोगो नाऽपि समास एकधर्मावच्छिन्नेऽन्वयाभावात् । (१)अत एवाऽत्राऽनेकचकारप्रयोगः । यत्र मिलितानामन्वयस्तत्रेतरेतरयोगस्तादृशसमूहश्चार्थः इत्यन्वयः । समूहे उद्भूताऽवयवभेदत्वञ्च, अवयवगतसंख्यारोपवत्त्वं प्रत्यवयवं समूहरूपत्वाऽऽरोपो वा । समूह इति । अनुद्भूताऽवयवभेदः समूह इत्यर्थः । तत्रेतरेतरयोगे उद्भूताऽवयवभेदसमूहस्य प्रतीत्या प्रवृत्तिधर्मरूपमेव प्रवृत्तिनिमित्तम् । समाहारे तु अतिरिक्तत्वेनैव समूहत्वभानात्समूहत्वं प्रवृत्तिनिमित्तमिति विशेषः । ईश्वरं गुरुञ्च भजस्वेत्यादौ न समास असामर्थ्यादिति । अनेक सुबन्तानां चार्थे वृत्त्यभावेनैकार्थीभावरूपसामर्थ्याऽभावादित्यर्थः । समुच्चयस्थले च समभिव्याहृतस्यैकस्य सुबन्तस्य चार्थे वृत्तावपि अपरस्य चार्थे वृत्त्यभावः । अन्वाचये तु उभयोरपि चार्थे वृत्त्यभाव इति भावः ॥

ननु उद्भूताऽवयवभेदविवक्षणे इतरेतरयोगद्वन्द्वे द्विवचनबहुवचनस्य, अनुद्भूताऽवयवभेदविवक्षणे समाहारद्वन्द्वे समुदायगतैकत्वादेकवचनस्य चोपपत्तावेकवद्भावविधायकप्रकरणमन्तरापीति व्यर्थमेवैतत्प्रकरणम् । इतरेतरयोगद्वन्द्वे नेष्ट एकवद्भावो लक्ष्यानुरोधादिति चेन्न । प्राण्यङ्गादीनां समाहार एव नेतरेतरयोग इति नियमार्थत्वेन सार्थक्यात् । तथा च नैतेभ्यो बहुवचनद्विवचनापत्तिरुद्भूताऽवयवभेदविवक्षयेति बोध्यम् । ( तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे ) इति विपरीतनियमो नाऽऽशङ्कनीयः । तथा हि एकवचनस्य द्विवचनाऽभावो बहुवचनग्रहणप्रयोजनम् । विपरीतनियमे तु प्राण्यङ्गाद्यतिरिक्तस्य समाहारत्वाऽभावादेकवचनाऽनुत्पत्त्या बहुवचनस्यैव द्विवचनसिद्धौ पुनर्बहुवचनग्रहणं व्यर्थमेव स्यादित्यभिप्रायेणाशंक्य समाधानमाह—**समाहारस्यैकत्वादेकत्वे सिद्धे नियमार्थं प्रकरणमिति** । नियमस्तूपरिष्टादुक्त एवेति बोध्यमित्यलम् ॥

---

( १ ) अत एव परस्पराऽपेक्षासत्वादेवेत्यर्थः ।

ननु ,विभाषा वृक्षमृगे' तिसूत्रेऽप्राणिनो ग्रहणं व्यर्थमिति चेन्न । तस्य 'जातिरप्राणिनामि'ति सूत्रप्राप्तनित्यद्वन्द्वस्य विकल्पविधानेन सार्थक्यादित्याह—विभाषावृत्त इति सूत्र इति ।

ननु विभाषा वृक्षमृगेति सूत्रे पशुग्रहणाऽभावे हस्त्यश्वादिनां सेनाङ्गत्वेन 'द्वन्द्वश्चप्राणितूर्यसेनाङ्गानामि'त्यनेन नित्यद्वन्द्वो दुर्वारः स्यादित्यत आह—हस्त्यश्वादिषु सेनाङ्गत्वान्नित्ये प्राप्ते पशुग्रहणं विकल्पार्थमिति ॥

ननु उद्भूतावयवभेदविवक्षाऽनुद्भूतावयवभेदविवक्षाभ्यां रुरुपृषतम् रुरुपृषताः शुकबकम् शुकबका इत्यत्र (चार्थे द्वन्द्वः) इत्यनेनैव द्वन्द्वसिद्धौ विभाषावृक्षमृगेतिसूत्रे मृगशकुनिग्रहणं व्यर्थमिति चेन्न । तस्य नियमार्थत्वेन सार्थक्यात्; सचेत्थं नियमः—मृगाणां मृगैरेव द्वन्द्वः, शकुनीनां तैरेवेति ! अन्यैस्तु सहेतरेतरयोग एवेत्याह—मृगाणां मृगैरेवेत्यादि ।

अश्ववडवग्रहणं तु पक्षे नपुंसकत्वार्थमिति । अश्ववडवयोः पशुत्वाद्विकल्पसिद्धौ तयोर्ग्रहणं प्रतिपद्विधानार्थम्। तथा च—अश्ववडवमित्येकवद्भावपक्षे 'पूर्ववदश्ववडवौ' इत्येतत्सूत्रं बाधित्वा 'स नपुंसकमि' त्येव भवतीति भावः ।।

ननु 'विप्रतिषिद्धं चानधिकरणवाची'ति सूत्रं व्यर्थम्, उद्भूतावयवभेदविवक्षया इतरेतरयोगद्वन्द्वे द्विवचनादेः, अनुद्भूतावयवभेदविवक्षया समाहारद्वन्द्वे एकवचनस्य च वचनमन्तराऽप्युपपत्तेरिति चेन्न । विरुद्धार्थानां द्वन्द्वस्यैकवद्भावश्चेद्द्रव्यवाचिनामेवेति नियमार्थत्वेन तस्य सार्थक्यादित्याह—वैकल्पिकः समाहार इत्यादि । निमफलञ्ञशीतोष्णे उदके स्त इत्यत्र द्रव्यवाचित्वादितरेतरयोग एवेति भावः ।।

विप्रतिषिद्धं किमिति । एतद्ग्रहणे अद्रव्यवाचिनामेवद्वन्द्वे एकवद्वेति सामान्यतो नियमेऽविरुद्धार्थयोर्द्रव्यवाचिनोरेकवद्भावविधानान्नन्दकपाञ्चजन्यावित्येव स्यान्नतु नन्दकपाञ्चजन्यमित्यतस्तद्ग्रहणमित्याशयेनाह—इह पाक्षिकः समाहारद्वन्द्वो भवत्येवेति । अनधिकरणवाचीत्यस्याग्रहणे शीतोष्णे उदके स्त इत्यत्र पाक्षिकसमाहारद्वन्द्वस्याऽनिष्टस्यापत्तिरिति भावः ।

ननु 'आनङ् ऋतो द्वन्द्वे' इत्यस्य लक्ष्याऽनुरोधेन ऋदन्तानां द्वन्द्वे ऋदन्तस्य पूर्वस्याऽऽनङ् स्यादृदन्त उत्तरपद इत्यर्थस्वीकारे पिता त्रावित्यत्राऽऽनङ् न स्यादृन्तानां द्वन्द्वाऽभावादृदन्तोत्तरपदपरत्वाऽभावाच्चेत्याशंक्य समाधत्ते—पुत्रेऽन्यतरस्यामित्यत इति । उक्तसूत्रात्पुत्र इत्यस्य मण्डूकप्लुत्याऽनुवर्त्तनेन वाक्यभेदाश्रयणेन ऋदन्तानां द्वन्द्वे ऋदन्तस्य पूर्वस्याऽऽनङ् ऋदन्ते उत्तरपदे ऋदन्तस्य पूर्वस्याऽऽनङ् पुत्रशब्दे इति द्विधार्थकरणान्नोक्तस्थलीया काचिदनुपपत्तिरिति दिक् ।

ननु 'आनङ् ऋतो द्वन्द्वे' इत्यतो द्वन्द्वपदानुवृत्त्यैव सिद्धौ पुनः 'देवता द्वन्द्वेचे'त्यत्र द्वन्द्वग्रहणम्व्यर्थमित्यत आह—पुनर्द्वन्द्वग्रहणं प्रसिद्धसाहचर्यस्य परिग्रहार्थमिति । येषां सहचरणं प्रसिद्धन्तेषामेव द्वन्द्वे आनङुत्तरपदे इत्येतदर्थन्द्वन्द्वग्रहणम्; तेन ब्रह्मा च प्रजापतिश्चेति विग्रहे ब्रह्मप्रजापतीत्यादावानङ् न । एतयोरेकहविर्भागित्वेन सहचरणं न दृष्टं श्रुतञ्चेति भावः ॥

इति द्वन्द्वः ॥

# अथैकशेषसमासप्रकरणम् ।

ननु एकशेषस्य द्वन्द्वापवादसङ्गत्यर्थमेतदुत्तरमेकशेपारम्भं प्रदर्शयति—अथैकशेष इति । नचाऽपवादस्याऽपि सङ्गतित्वे,

सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा ।
निर्वाहकैकार्य्यंत्वे, षोढा सङ्गतिरिष्यते ॥

इत्यनेन षोढात्वकथनस्य विरुद्धत्वमिति वाच्यम् । अपवादेत्यनेनाऽपि अपवाद्या-ऽपवादकभावरूपप्रसङ्गनिर्वाहकसम्बन्धस्य सूचनेनाऽविरोधात् ॥

**वृद्धो यूना तल्लक्षणश्चेदिति** । अत्र सूत्रे वृद्धपदेन अपत्यमन्तर्हितं वृद्धमिति पूर्वाचार्य्यपरिभाषितस्य पाणिन्युक्तगोत्राऽपरपर्य्यायस्य ग्रहणम् । न च वृद्धपदेनेदृशस्य ग्रहणे किं प्रमाणमिति वाच्यम् । कृत्रिमेन यूना साहचर्य्यस्यैव चात्र प्रमाणत्वादित्यत एवाह मूले—**गोत्रं शिष्यत इति** । गोत्रयुवप्रत्ययमात्रेति । अत्र प्रत्ययपदस्य प्रतीति-परत्वाद्गोत्रयुवत्वप्रतीतिमात्रेत्यर्थः । तेन गर्गाश्च गार्ग्यायणाश्च गर्गा इत्यस्य सिद्धिः । एवशब्दार्थो मात्रं, तेन प्रत्ययार्थकृत्स्नादेः प्रकृत्यर्थस्य च प्रतीतेर्व्यवच्छेदादाह—कृत्स्नमि-ति । एतदेव विकारलभ्यन्तत्कृत एव विशेषश्चेन्नतु तत्कृतारिक्त इत्यर्थः । सूत्रे तल्ल-क्षणः किमित्यस्य तल्लक्षण एव किमित्यर्थः । प्रत्युदाहरति—**भागवित्ति भागवित्ति-काविति** । भागवित्तस्य गोत्राऽपत्यं भागवित्तिः । अस्मादपत्येऽर्थे इञ् यूनि अर्थे 'वृद्धा-ट्ठक् सौवीरेषु बहुलमि'ति कुत्साया ठकि, तस्य कादेशे द्वितीयस्य सिद्धिः अत्र कुत्सासौ-वीरत्वयोरधिकयोरपेक्षणाद्युवत्वमात्रकृतवैरूप्याऽभावाच्चैकशेष इति बोध्यम् । **कृत्स्नं कि-मिति** । एवकारेण प्रकृत्यर्थस्यापि व्यावृत्तिः किमर्थेति प्रश्नः । उत्तरयति—**गर्गवात्स्या-यनाविति** । अत्र प्रकृत्यंशे वैरूप्यं न गोत्रादिकृतमिति नैकशेषः । तल्लक्षणविशेष इत्येव सामर्थ्यात्तल्लक्षण एवेति लाभे स्पष्टार्थमेवकारग्रहणमिति बोध्यम् ॥

**नपुंसकमनपुंसकेनैकवच्चेति** । नन्वानन्तर्य्यार्थकचशब्दबलाच्च सूत्रघटकस्या-ऽन्यतरस्यामित्यस्यैकवच्चेत्यनेनैव सम्बन्धो नत्वेकशेषेणेत्यत आह—**तच्चैकवद्वेति** । **अन-पुंसकेनेति किमिति** । एतद्ग्रहणाभावे नपुंसकेनापि द्वन्द्वे एकशेषापत्तिः । शुक्लश्च, शुक्लञ्च, शुक्ले इति । ननु 'नपुंसकमनपुंसकेनैकवच्चास्याऽन्यतरस्यामि'त्येवं सूत्र-करणेऽपि यत्राऽनेनैकशेषस्तत्रैकवद्भावो भविष्यतीति प्रकृतसूत्रेऽस्य ग्रहणं व्यर्थमिति चेन्न । अनपुंसकेन सहोक्तौ नपुंसकस्यैकशेषस्तस्यैवैकवद्भाव इति बोधनार्थन्तस्याऽऽव-श्यकत्वेन सार्थक्यात् । तेन नाऽन्यसूत्राणां समाहारद्वन्द्वविषये प्रवृत्तिरिति बोध्यम् । ननु 'सरूपाणामि'ति सूत्रस्य तर्हि समाहारविवक्षायामप्राप्त्याऽपवादाऽभावाद्घट-घटमिति समाहारविवक्षायान्द्वन्द्वः प्राप्नोतीति चेन्न । अनभिधानाद्घटघटमिति द्वन्द्वा-ऽप्राप्तेः । एकशेषविषये घटघटमिति द्वन्द्वव्यावृत्त्यर्थमनभिधानस्याऽऽवश्यकत्वाद्द्वन्द्व-मात्रस्यैकशेषविषयेऽनभिधानमाश्रित्यैकशब्दस्याऽनेकार्थत्वाच्चाश्रित्य प्रत्याख्यातमेकशेष-प्रकरणम्भाष्ये । एकशब्दस्यानेकार्थत्वाऽभावे एकशेषाऽऽरम्भेऽपि गार्ग्यावित्यतो गार्ग्या-यणस्य बोधो न स्यात्तस्य अर्थेकत्वाऽभावात् । शुक्लश्च शुक्ला च शुक्लश्चेति विग्रहे शु-

क्वानीत्येतत्सूत्रोदाहरणम् । तत्रविग्रहवाक्ये परपदोपादानं शुक्लादिपदानां गुणे पुंस्त्वाद्गुणिपरत्वबोधनायेत्यलम् ॥

श्वशुरः श्वश्र्वा । ननु पितृशब्देन मातापित्रोः श्वशुरशब्देन श्वश्रूश्वशुरयोर्लक्षणया बोधसम्भवादिदं पिता मात्रेति च सूत्रद्वयं व्यर्थम् । नच यथा सरूपाणामित्यादिसूत्रसमूहस्य द्वन्द्वव्यावृत्त्यर्थमावश्यकत्वं तथैतत्सूत्रद्वयमपि द्वन्द्वनिवृत्त्यर्थमावश्यकमिति वाच्यम् । पक्षे द्वन्द्वस्यापीष्टापत्तेः । एवञ्च तदवस्थैवोक्तसूत्रद्वयस्य वैयर्थ्यशंकेति चेन्न । पितृश्वशुरशब्दयोरिव मातृश्वश्रूशब्दयोः केवलयोर्द्वन्द्वविषये प्रयोगव्यावृत्तये सूत्रद्वयस्यावश्यकत्वात् । नच द्वन्द्वविषये तादृशप्रयोगस्याऽनभिधानादेव वारणसम्भवादनारम्भणीयमेव सूत्रद्वयमिति वाच्यम् । अनभिधानाऽऽश्रयणेन प्रत्याख्यानस्याऽनौचित्यादिति भावः ॥

त्यदादीनि सर्वैर्नित्यम् । अत्र सूत्रे द्विपर्यन्तानामिति नियमो न प्रवर्त्तते; अहञ्च भवांश्च आवामिति भाष्योदाहरणात् । उक्तनियमप्रवृत्तौ तु अस्मच्छब्दस्य द्विपर्यन्तानामित्येतन्मध्येऽसत्वात्तस्यैकशेषानापत्त्या भाष्योदाहरणाऽसङ्गतिरिति भावः ।

इत्येकशेषसमासः ॥

---

# अथ सर्वसमासशेषप्रकरणम् ।

वृत्तिनिरूपणप्रस्तावादाह—कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तय इति । परार्थाऽभिधानं वृत्तिरिति । परशब्देन परपदार्थो गृह्यते । अर्थशब्देन स्वस्यार्थो गृह्यते, परेण पदार्थेन युक्तो यः स्वस्याऽर्थः स परार्थस्तस्य योऽभिधाजन्योपस्थितिस्तत्करणत्वमिति तदर्थः । इतरपदार्थान्वितस्वार्थविषयकाऽभिधाजन्योपस्थितिजनकत्वमिति फलितोऽर्थः ।

यद्वा परेण प्रधानशब्देन शब्दान्तरार्थस्याऽभिधानं विशेषणत्वेन ग्रहणं तत्करणमित्यर्थः । यत्रत्यप्रधानपदेनेतरविशेषणकस्वार्थस्यैवोपस्थितिस्तत्करणमिति यावत् ।

यद्वा परेणऽप्रधानशब्देनाऽन्यशब्दार्थस्य विशेष्यत्वेन ग्रहणमित्यर्थः । वृत्तिरिति शेषः । साचाऽवयवशक्तिसहकृतसमुदायशक्तिसाध्या अवयवशक्तिर्लोकसिद्धा । शास्त्रकल्पिता च समुदायशक्तिरिति । तद्धितादिप्रत्यये समुदायस्य वृत्त्याश्रयत्वादेषामौपचारिको वृत्तित्वव्यवहारः प्राचाम् । सा च वृत्तिः समर्थःपदविधिरिति परिभाषा लभ्या, तत्र समासतद्धितयोः पदोद्देश्यकविधित्वस्य स्पष्टत्वान्मानान्तरसिद्धैकार्थीभावस्य सत्त्वाच्च स्पष्टैव परिभाषाप्रवृत्तिः । उपपदनिमित्तकानां कृतामपि स्पष्टमेव पदविधित्वम् । तत्साहचर्य्येणाऽन्यत्रापि पदविधित्वं बोध्यम् । अत एव पाचकादीनां क्रियाकारकभावसम्बन्धप्रवृत्तिनिमित्तकत्वमूलकः क्रियाशब्दत्वव्यवहारः । एकशेषेऽपि द्वन्द्वस्याऽनुवर्त्तनादेतद्विषये एकशेषविधानादेकार्थीभावस्याऽऽवश्यकत्वम् ।

वस्तुतस्तु—परार्थाऽन्वितस्वार्थोपस्थापकत्वाऽभावादेकशेषस्य वृत्तित्वे मानाऽभावः । शिष्टपदेन स्ववृत्त्यैव तत्तत्समूहार्थोपस्थानस्य भाष्ये स्पष्टप्रतिपादनात् । एकशेषस्य वृत्तित्वाऽभावादेव [illegible] एकशेषसङ्ग्रहः

भाष्ये इत्यवसेयम् । सनादिषु क्यजादेः सुबन्ताद्विधानेन स्पष्टमेव पदविधित्वमिति । स्वभावत एव वृत्त्यवृत्त्योः सिद्धत्वाद्वावचनं न कार्य्यमिति तत्प्रत्याख्यानपरभाष्यप्रमाण्यात् लभ एवैकार्थीभावः सनीति बोध्यम् । प्रातिपदिकप्रकृतिकणिचाप्येकार्थीभावः सुघट एवेति । वाक्यमिति । तत्र तत्तत्समासघटकपदानान्तत्तत्समासप्रवृत्तियोग्यविभक्त्यन्तानां पृथक्प्रयोगरूपमित्यर्थः । संज्ञाविषयसमासे वाक्येन संज्ञाऽनवगमेऽपि वृत्तिघटकपदज्ञापनायासमस्यमानपदार्थबोधकवाक्यप्रयोगो भवत्येव । नित्यसमासव्यवहारस्तु तल्य वाक्यस्य वृत्तिसमानार्थत्वाऽभावाद्गौणो बोध्यः । अविग्रह इति । लौकिकविग्रहरहित इत्यर्थः । नित्याऽधिकारीयसमासे समासघटकपदानां व्यपेक्षाया अभावेन लौकिकवाक्याऽभावात् । एवञ्च विग्रहप्रदर्शनफलम्बोध्यम् । अश्वपदेति । समस्यमानयावत्पदाघटित इत्यर्थः । समासविभाजकोपाधिगणनाया आवश्यकत्वादाह—सुपां सुपा तिङा नाम्नेत्यादि । अथ तिङामित्यतः प्राक्सर्वत्र तिङामित्यस्य सम्बन्धः । अत्र सुपां तिङेत्यनेनैव तिङा सुबन्तेनेत्यस्य लाभात्समासस्य पञ्चविधत्वमेव युक्तम् । उभयत्रापि सुप्तिङ्घटितत्वस्याऽविशिष्टत्वादित्यलम् ।

इति सर्वसमासशेषः ॥

## अथ समासान्तप्रकरणम् ।

ऋक्पूरब्धूरिति—अ अनक्षे इतिछेदः, अ इति लुप्तविभक्तिकसौत्रो निर्देश इति भावः ॥

ननु सुष्ठु आपो यस्मिन्निति विग्रहे अप्शब्दान्तत्वेन 'ऋक्पूरब्धूरि' त्यनेन समासान्तोऽप्रत्ययः स्यादिति चेन्न 'न पूजनादि, ति तन्निषेधात् । तथा च 'द्व्यन्तरुपसर्गेभ्योऽप ईदि'ति नेत्वापत्तिरित्याशयेनाह—कृतसमासान्तग्रहणान्नेह सुविति ॥

कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यते । 'संख्याया नदीगोदावरीभ्यां चे'ति वार्तिकद्वयन्नाऽपूर्वं किन्तु 'अच् प्रत्यन्ववपूर्वात्सामलोम्नः' इत्यत्राऽजितियोगविभागात् सिद्धमेव, एवञ्च योगविभागेनैव सिद्धत्वाद्वार्तिकद्वयं नारम्भणीयमिति केचित् । केचिच्च भाष्ये योगविभागस्यादर्शनादुक्तवार्त्तिकद्वयोदाहरणानां पृषोदरादित्वात्सिद्धिरित्याहुः ।

इति समासान्ताः ।

## अथाऽलुक्समासप्रकरणम् ।

अलुगुत्तरपदे—पदे इत्येव सिद्धे उत्तरग्रहणसामर्थ्यादुत्तरपदशब्दस्य समासचरमावयवे रूढत्वम् । तथा च समासचरमावयवे परे पञ्चम्यादीनामलुगिति तत्तत्सूत्राणामर्थः । 'पञ्चम्याः स्तोकादिभ्यः' इत्यादेरारम्भान्नायं विधिः किन्त्वधिकार एवेत्याह—अलुगधिकारः प्रागानङः, उत्तरपदाधिकारस्त्वाऽऽपादपरिसमाप्तेरिति ।

पूरण इति वक्तव्यम् । पूरणप्रत्ययान्ते उत्तरपदे आत्मनश्छन्दप्रतिकृतीयाया अलुगिति तदर्थः । ननु उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणमित्यस्य 'हृदयस्य

हृल्लेखे'त्यत्र लेखग्रहणज्ञापितस्य सत्त्वात्तदन्तविध्यभावात्पूरणप्रत्ययान्त इत्यर्थो न स्यादिति चेन्न। आत्मनूशब्दात्पूरणे प्रत्ययासम्भवेन तदन्तग्रहणस्याऽऽवश्यकत्वादुक्तार्थस्य सुलभत्वात्। एतदुदाहरणे हेताविति प्रकृत्यादिभ्य इति तृतीया, सुप्सुपेति समासः॥

ननु प्रकृतिविकृतिभावस्य विरहेण रन्धनाय स्थाली इत्यत्रेव, 'आत्मनेपदम्' 'आत्मनेभापे'त्यत्र समासो न स्यादित्यत आह—**चतुर्थीतियोगविभागात्समास इति**। अलुग्विधानसामर्थ्यादपीह समासः क्वच इत्यपि बोध्यम्॥

**गवियुधिस्थिरः**—ष्ठा धातोः 'अजिरशिशिर' इत्यौणादिकसूत्रेण किरचि स्थिरशब्दो निष्पन्नः। अत्र सात्पदाद्योरित्यनेन निषेधे प्राप्ते एतदारम्भः, अनेन षत्वे गविष्ठिरो युधिष्ठिर इति सिध्यति। ननु लुकं बाधित्वादन्तरङ्गत्वाच्चाऽऽदेशे 'हलदन्तात्सप्तम्याः संज्ञायामि' त्यनेनैवाऽलुक् सिद्ध्यतीति किमर्थं सूत्रमिदमिति चेन्न। (अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते) इति; न्यायेनाऽऽदेशात्पूर्वं लुक्प्राप्त्या हलदन्तादित्यस्याऽप्राप्त्याऽस्यावश्यकत्वादित्याशयेनाह—**अत्र गवीति वचनादेवाऽलुगिति**॥

इत्यलुक्समासः।

## अथ समासाश्रयविधिप्रकरणम्।

**घरूपकल्पचेलड्ब्रुवगोत्रेति**—घरूपकल्पप्रत्ययेषु परेषु चेलडादिषु चोत्तरपदेषु भाषितपुंस्काद्विहितस्य ङ्यन्तस्याऽनेकाचो ह्रस्व इत्यर्थः। ननु घादीनां प्रत्ययत्वात्प्रत्ययग्रहणपरिभाषया तदन्तविधिर्दुर्वार इति चेन्न। लेखग्रहणेनोत्तरपदाधिकारे क्वचित्प्रत्ययग्रहणे तदन्तविध्यभावज्ञापनात्। इत्थंहि ज्ञापनप्रकारः—यदि प्रत्ययग्रहणे तदन्तग्रहणं स्यात्तदाऽणः प्रत्ययत्वात्ततस्तदन्तविधावणन्तरूपोत्तरपदे हृदादेश इत्यर्थं लेखशब्देऽप्यादेशस्य सौलभ्येन लेखग्रहणस्य वैयर्थ्यं स्पष्टमेव। न च घञन्तलेखशब्दस्य प्रयोगघटकत्वं यत्र तत्राऽप्यादेशार्थं लेखग्रहणस्याऽऽवश्यकतया कथं तद्वैयर्थ्योद्भावनमिति वाच्यम्, लेखग्रहणस्योक्तार्थज्ञापकत्ववर्णनपरभाष्यप्रामाण्याद् घञन्तलेखशब्दोत्तरपदकपूर्वपदस्य प्रयोगस्याऽनभिधानादिति भावः॥

**हृदयस्य हृल्लेखेति**—अत्र सूत्रेऽणन्तस्यैव लेखशब्दस्य ग्रहणं नतु घञन्तस्य, अण्प्रत्ययसाहचर्यात्, अत एव घञन्तरूपोत्तरपदे हृदयलेख इत्येव रूपं नत्वस्मिन् हृदादेशः। नन्वणन्तलेखशब्दग्रहणेऽण्ग्रहणेनैव सिद्धे लेखग्रहणं व्यर्थमिति चेन्न। उत्तरपदाधिकारे तदन्तविधिर्नास्तीति ज्ञापनेन तस्य सार्थक्यात्। ज्ञापनप्रकारश्च प्रागेवोक्त इति भावः॥

**इको ह्रस्वोऽङ्यो गालवस्य**—ननु सूत्रे गालवग्रहणं विकल्पेन ह्रस्वविधानार्थमेव तिष्ठति तच्चेत्पूर्वसूत्रात् 'एकहलादौ पूरयितव्येऽन्यतरस्यामि'त्यस्मादन्यतरस्यामित्यनुवृत्त्यव सिद्धमिति निष्फलमेव तद्ग्रहणमित्यत आह—**गालवग्रहणं पूजार्थमिति**।

**सम्प्रसारणस्य**—उत्तरपदे सम्प्रसारणस्य दीर्घ इत्यर्थः। ननु कौमुदगन्धीपुत्र इत्यत्र 'इको ह्रस्वोऽङ्यो गालवस्ये' ति ह्रस्वो दुर्वारः। नच कृते ह्रस्वे दीर्घविधानं व्यर्थं

स्यादिति वाच्यम्। तस्य ह्रस्वस्य वैकल्पिकत्वेन पक्षे सावकाशत्वात्। एवञ्च ह्रस्वापत्तिस्तदवस्थैवेत्यत आह—**व्यवस्थितविभाषया ह्रस्वो नेति**। इति प्राञ्चः।

**इ. खरकृतस्तु**—ग्रामणिकुलमित्यत्र ह्रस्वस्याऽवकाशः, ह्रस्वस्य वैकल्पिकत्वादेतदभावे कौमुदगन्धीपुत्र इत्यत्र सम्प्रसारणस्य सावकाशस्ततो ह्रस्वप्रसङ्गे उभयप्राप्तौ परत्वात्सम्प्रसारणदीर्घत्वमेवेति भाष्ये स्पष्टमित्याहुः।

ननु ष्यङः प्रत्ययत्वेन प्रत्ययग्रहणपरिभाषया तदादिपदोपस्थितौ पूर्वपदरूपविशेष्यान्तरसद्भावात्तदादिविशेष्यकतदन्तविध्यभावे पूर्वपदविशेष्यकतदन्तविधौ तदादेर्भेदसम्बन्धेन तदन्तेऽन्वये तदाद्यभिन्नं यत्ष्यङन्तं पूर्वपदं तस्य सम्प्रसारणमिति सम्प्रसारणविधाकस्य ष्यङः सम्प्रसारणं पुत्रपत्योरित्यस्याऽर्थे परमकारीषगन्ध्येत्यस्य ष्यङन्तपूर्वपदत्वस्य सत्त्वेऽपि यस्मात् ष्यङ् विहितस्तदादित्वाऽभावात्सम्प्रसारणं न स्यादित्यत आह—**स्त्रीप्रत्यये चानुपसर्जने नेति**। कोऽअर्थस्तावदस्याः परिभाषाया इति पूर्वपक्षे प्रक्रान्तेऽत्र श्रीमद्गुरवः। लक्ष्येऽनुपसर्जनस्त्रीप्रत्ययस्य सद्भावेऽपि तत्र तदादेरप्रसङ्गेन उत्सर्गापवादयोः समानदेशत्वभङ्गेन च अनुपसर्जने स्त्रीप्रत्यये न तदादिविधिरिति न तावदेतदर्थः। सम्प्रसारणविधायकशास्त्रघटकष्यङ्पदस्याऽनुपसर्जनपरमकारीषगन्ध्याघटकष्यङ्बोधकत्वात्तदादिनियमाऽभावे ष्यङन्तपूर्वपदस्य सम्प्रसारणमित्यर्थेऽतिकारीषगन्ध्या पुत्र इत्यत्राऽपि सम्प्रसारणस्य दुर्वारत्वेन, उक्तसूत्रघटकस्य ष्यङ्पदस्योपसर्जनस्याऽपि बोधकत्वान्निषेधाऽप्रवृत्या तदादिनियमेन परमकारीषगन्धीपुत्र इत्यत्राऽपि सम्प्रसारणाऽप्रसङ्गेन च, प्रत्ययग्रहणपरिभाषाऽपवादत्वादत्राऽपि ग्रहणपदसम्बन्धेनाऽनुपसर्जनस्त्रीप्रत्ययबोधके तत्पदघटितशास्त्रे तदादिविधिर्नेत्यर्थोऽपि नेति चेदुच्यते—ष्यङः सम्प्रसारणमिति सूत्रे ष्यङ्पदे आवृत्तिः, एकं ष्यङ्पदमनुपसर्जनबोधकमपरमुपसर्जनबोधकम्। तत्राऽनुपसर्जनबोधके तदादिनियमोऽनया वार्यते, ततश्चाऽनुपसर्जनष्यङन्तपूर्वपदस्य ह्रस्व इत्यर्थे परमकारीषगन्धीपुत्र इत्यत्र भवति सम्प्रसारणम्। उपसर्जनष्यङन्ततात्पर्यके ष्यङ्पदे तदादिनियमादुपसर्जनष्यङन्ततदादिपूर्वपदस्य ह्रस्व इत्यर्थेऽतिकारीषगन्ध्या पुत्र इत्यत्र पूर्वपदस्य तदादित्वाऽभावादुपसर्जनवाक्यस्य ष्यङ उपसर्जनत्वादनुपसर्जनवाक्यस्याऽप्रसङ्गाच्च नाऽतिप्रसङ्ग इत्याहुरित्यलम्॥

**समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु**—उत्तरपदे समानस्य स आदेशः छन्दसि मूर्धादिरूपोत्तरपदे परे नाऽसाविति तदर्थः। ननु उत्तरपदशब्दस्य समासचरमावयवे रूढत्वात्पक्षादिशब्दानां समासचरमाऽवयवत्वाऽभावेन तद्रूपोत्तरपदे चादेशाऽप्राप्त्या सपक्षः साधर्म्यमित्यादि न स्यादित्यत आह—**समानस्येतियोगो विभज्यते इति**। अत्र योगविभागो भाष्ये नोपलभ्यत, इत्यरुचेराह—**अथवा सहशब्दः सदृशवचनोऽप्यस्तीति**। तथा च सहशब्देन समासे 'वोपसर्जनस्ये'ति सादेश इति भावः।

ननु 'पुरगामिश्रकासिध्रके'ति दीर्घनिर्देशेनाऽसंज्ञायां दीर्घाऽभावात्संज्ञायामेव णत्वमित्यस्य फलितत्वात् 'पूर्वपदात्संज्ञायामि'त्यनेनैव णत्वसिद्धौ पुनः कृतदीर्घस्य पुरगादिपञ्चकस्य णत्वार्थनिर्देशो व्यर्थ इत्यत आह—**तेषां कृतदीर्घाणां णत्वविधौ निर्देशो नियमार्थं इति**। तथाचायं नियमः—कृतदीर्घेभ्यः पुरगादिभ्य एव परस्य वनशब्दघट-

नकारस्य णत्वं नाऽन्येभ्य इति, नचैभ्यो वनस्यैव णत्वं नाऽन्यस्येति विपरीतनियमः कुतो नेति वाच्यम् । वनाऽतिरिक्तोत्तरपदे पुरगादीनां दीर्घान्तत्वाऽसम्भवेन विपरीतनियमाऽप्राप्तेरिति भावः ।

ननु अग्रेशब्दस्याऽसंज्ञात्वात् 'पूर्वपदात्संज्ञायामग' इत्यस्याप्राप्त्या णत्वार्थमस्य ग्रहणमावश्यकमेवेत्यत आह—अग्रेशब्दस्य तु विध्यर्थं इति । निर्देश इति शेषः । नच गकारव्यवधानेन 'पूर्वपदात्संज्ञाया'मित्यस्याऽप्राप्त्या पुरगाशब्दग्रहणस्याऽपि विध्यर्थत्वसम्भवात्तस्य नियमार्थत्वोक्तिर्न युक्तेति वाच्यम् । अग इत्यस्य पञ्चम्यन्तत्वाऽभ्युपगमेन गान्तात्पूर्वपदात्परस्य नस्य णत्वं नेति व्याख्यानेन पुरगाशब्दस्याऽकारान्तत्वेनाऽग इति निषेधाऽप्राप्त्या पूर्वसूत्रेणैव सिद्धत्वसम्भवान्नियमार्थत्वोक्तेर्युक्तत्वात् । अत एव अग इत्यस्य ऋगयनमित्येकमेवोदाहरणं दत्तमित्यलम् ॥

ननु वनस्याऽग्रे इति विग्रहेऽग्रेवणशब्दस्याऽधिकरणशक्तिप्रधानत्वात्प्रथमा न स्यादिति चेन्न । 'अभितः सोर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्न' इति भाष्येण प्रथमापपत्तेरित्याशयेनाह—प्रातिपदिकार्थमात्रे प्रथमेति ।

ननु पानशब्दस्य क्रियावाचकत्वात्क्षीरशब्देन तस्य समानाऽधिकरणत्वाऽभावेन क्षीरं पानं येषामित्युपपन्नमित्यत आह—कर्मणि ल्युडिति । 'कृत्यल्युटो बहुलमि'त्यत्र बहुलग्रहणादिति भावः । पीयते इति पानमिति विग्रहः । कर्मणि ल्युटा निष्पन्नस्य पानशब्दस्य द्रव्यवाचित्वेन क्षीरशब्देन सामानाऽधिकरण्यान्नानुपपत्तिरिति ।

ननु मापान्वपतस्तच्छीलौ पुरुषौ मापवापिणावित्यादौ ( उत्तरपदत्वे चापदादिविधौ प्रतिषेधः) इति निषेधस्य जागरूकत्वाद्वापिन्नित्यस्योत्तरपदरूपप्रातिपदिकत्वाऽभावेन पूर्वपदेनोत्तरपदस्याक्षेपात्पूर्वपदस्थनिमित्तात्परस्योत्तरपदरूपप्रातिपदिकान्तस्थनकारस्य णत्वमिति, णत्वविधायकस्य 'प्रातिपदिकान्तनुम्विभक्तिषु चे'त्यस्याऽर्थे णत्वं न स्यादिति चेन्न । उत्तरपदशब्दस्य समासचरमाऽवयवे रूढत्वेन वापिन्नित्यस्य समासचरमाऽवयवत्वेनोत्तरपदत्वाऽक्षततया णत्वसिद्धेरिति भावः ॥

ननु पूर्वपदस्थनिमित्तात्परस्य प्रातिपदिकान्तस्थनकारस्य णत्वमित्यर्थे गर्गभगिनीत्यत्रण त्वं दुर्वारम्; नकारस्य भगिन्निति प्रातिपदिकान्तस्थत्वादित्याशङ्क्य समाधानवार्त्तिकमवतारयति—उत्तरपदं यत्प्रातिपदिकं तदन्तस्यैव णत्वमिति । उत्तरपदरूपप्रातिपदिकान्तनकारस्यैव णत्वम्भवतीत्यर्थः । तथा चोत्तरपदशब्दस्य समासचरमाऽवयवे रूढत्वेनेहोत्तरपदं भगिनीशब्दो न तु भगिन्निति तस्य प्रातिपदिकत्वेऽप्युत्तरपदत्वाऽभावान्न णत्वाऽऽपत्तिरिति भाव इत्येतदभिप्रायेणैव मूले गर्गाणां भगिनीति विग्रहो दर्शित इति । उक्तवार्त्तिके ज्ञापकं घटयति—अत एव नुम्ग्रहणं कृतमिति । पूर्वपदाक्षिप्तोत्तरपदेन प्रातिपदिकस्य विशेषणादेवेति हेत्वर्थः । अन्यथाऽङ्गस्य नुम्विधानादस्याङ्गस्यैव भागत्वादुत्तरपदस्य तत्त्वाऽभावान्नुम उदाहरणे व्रीहिवापाणीत्यादौ प्रातिपदिकान्तेत्येव णत्वोपपत्तौ प्रयोजनाऽन्यथोपपत्त्या नुम्ग्रहणं व्यर्थं सज्ज्ञापयति पूर्वोक्तवार्त्तिकमिति । वक्ष्यमाणप्रयोजनार्थंनुम्ग्रहणस्यावश्यकत्वेन ज्ञापकत्वेन ज्ञापकत्वाऽसम्भवात्तद्विघटयति-किञ्चेति । प्रहिण्वन्नित्यादौ हिवेर्नुमो णत्वार्थमपीति । एवाऽर्थकोऽत्राऽपिः ।

णत्वार्थमेवेत्यर्थः । अयम्भावः—नुम उदाहरणे व्रीहिवापाणीत्यादावङ्गस्य नुम्विधानात्त-स्याङ्गभागत्वेन प्रातिपदिकान्तेतिणत्वप्राप्तिसम्भवः, प्रहिण्वन्नित्यत्रत्यप्रहिणु इत्य-स्याऽप्रातिपदिकत्वेन तेन तदप्राप्त्या तदर्थं नुम्ग्रहणं कर्त्तव्यमेवेति ॥

**पदव्यवायेऽपि** । मापकुम्भवापेन । चतुरङ्गयोगेनेति । ननु मापकुम्भस्य वापः, चत्वार्यङ्गानि यस्य तेन योग इति विग्रहे उत्तरपदत्वे चाऽपदादिविधाविति प्रत्ययलक्षण-निषेधात्कुम्भाऽङ्गयोः पदत्वस्य दुर्लभत्वेन पदव्यवायेऽपीति निषेधाऽप्रवृत्त्या णत्वापत्ति-र्दुर्वारेति चेन्न । प्रत्यासत्त्या उत्तरपदस्य कार्यित्व एवोक्तनिषेधवार्त्तिकप्रवृत्तेः । अपदा-दिविधाविति पर्युदासेन पदान्तविधावेव तत्प्रवृत्तेश्च । नचैवमपि मापकुम्भस्येत्यादेर्वापा-दिनिरूपितकारकत्वाद्गतिकारकोपपदानामित्यनेन वापादिभ्यः सुबुत्पत्तेः प्राक् समासे तेषां पदत्वं दुर्लभमितिसप्तमीसमासेन व्याख्याने णत्वनिषेधाऽसिद्धिरिति वाच्यम् । तस्या अनित्यत्वेनात्र सुबुत्पत्त्यनन्तरमेव समासेनादोषात् ।

यत्तु 'कुमति चे'ति सूत्रे भाष्ये मापकुम्भवापेनेत्यत्र षष्ठीतत्पुरुषोत्तरपदकषष्ठीतत्पुरुषे 'कुमति चे'त्यनेन नित्यणत्वेन भवितव्यम् । षष्ठीतत्पुरुषे प्रातिपदिकान्तेति विभाषयेत्युक्तं तत् णत्वप्राप्तिनिरूपणमिति बोध्यम् ।

यत्तूक्तसूत्रस्थभाष्यादयं पदव्यवायेऽपीति निषेधः 'उपसर्गादसमासेऽपा'त्यादेरेव तेन प्रावनद्धमित्याद्येवास्योदाहरणमिति तन्न, पदव्यवायेऽपीत्येतच्छेषभूतस्य ( अतद्धित ) इति वार्त्तिकस्याऽऽर्द्रगोमयेणेत्यादिभाष्योक्तोदाहरणाऽसङ्गत्यापत्तेरित्यलम् ।

**विष्किरः शकुनौ वा** । वृत्तिकारमते विष्किरः शकुनौ विकिरोवेति सूत्रपाठ इति स्वमतेनाशङ्कते—वावचनेनैव सुड्विकल्पे सिद्ध इति । तस्याऽपीति । विकिरश-ब्दस्याऽपीत्यर्थः । भाष्यविरोधादिति । इत्थं हि भाष्यम्—'विष्किरः शकुनौ विकि-रो वेति वक्तव्यम् , न वक्तव्यम् , शकुनिवाच्ये वैकल्पिकः सुट् तदतिरिक्ते नित्यम् , तत्तर्हि व-क्तव्यम् , न वक्तव्यम् , न वावचनेन शकुनिरभिसम्बध्यते किन्तर्हि निपातनमभिसम्बध्यते शकुनिवाच्ये विष्किर इति वा निपातः, एतद्भाष्येण वृत्तिकारमताऽभिप्रेतसूत्रपाठस्य तच्छङ्कासमाधानयोश्च स्पष्ट एव विरोध इति भावः ॥

इति समासाश्रयविधिप्रकरणम् ।

---

# अथ तद्धितप्रकरणम् ।

अवसरसङ्गत्या तद्धितप्रकरणमारभते—**समर्थानां प्रथमाद्वा** । अत्र सूत्रे पदत्रयम् । प्रत्येकं पदानां स्वरितत्वात्प्राग् दिश इत्येतदवधि यावदधिकारः । पदत्रये स्वरितत्वप्र-तिज्ञाप्रयोजनं तु कस्मिंश्चिन्निवर्त्तमानेऽपि अपरस्य निवृत्त्यभावः । यथा प्राग्दिश इत्यत्र समर्थानां प्रथमादित्यनयोर्निवृत्तिः, वेत्यस्याऽनुवृत्तिः । ननु समर्थानामिति व्यर्थम् , समर्थः पदविधिरित्यनेनैव गतार्थत्वात् । नच पदविधित्वाऽभावान्न तेन गतार्थतेति वाच्यम् । 'धकालतनेष्वि'त्यलुग्विधानसामर्थ्यात्सुबन्तात्तद्धितोत्पत्तेः सिद्धान्तितत्वात्तस्य पदविधि-त्वस्य सुलभत्वादित्यत आह—**सामर्थ्यमिति** । समर्थशब्दः शक्तपर्यायः; शक्तत्वञ्च—

अर्थप्रतिपादकत्वम् । तच्च परिनिष्ठितस्यैव सम्भवतीत्यत आह—कृतसन्धिकार्यमिति । नहि 'सु उत्थित' इत्यस्य कल्पनयाऽप्यर्थवत्त्वम् । सूत्रे समर्थानामिति निर्धारणे षष्ठी समर्थानाम्मध्ये प्रथमादित्यर्थः । प्रथमत्वञ्च तत्तत्सूत्रेषु प्रथमोच्चारितशब्दप्रतिपाद्यत्वमेव । एवञ्चानेकसमर्थसम्भव एवाऽस्य सम्बन्ध इति ॥

तस्यापत्यम् । तस्येति न स्वरूपग्रहणं किन्तु षष्ठ्यन्तमात्रोपलक्षणमित्यत आह—षष्ठ्यन्तादिति । पञ्चम्यर्थस्याऽध्याहारः । अथवा अनुकरणात्पञ्चम्याः सौत्रो लुगिति बोध्यम् ॥

ननु उपगु अ इति स्थितौ गुणादेशस्य पितृव्यादौ साऽवकाशत्वात् 'ओर्गुणः' इत्येतं बाधित्वा परत्वात्' अचो ञ्णिति' इति वृद्धिप्रसङ्गः । गुणे च कृतेऽवादेशे च 'अत उपधायाः' इति वृद्धिप्रसङ्गश्च स्यादित्यत आह—आदिवृद्धिरन्त्योपधावृद्धी बाधत इति । 'तद्धितेष्वचामादेः' इदं सूत्रमुक्तसूत्राभ्यां परमिति परत्वात्तयोरनेन बाधः । अन्त्योपधावृद्ध्योः, गौः, पाचकः, इत्यादाववकाशः । आदिवृद्धेस्तु सौश्रुतः इत्यादाववकाशः । औपगवः; त्वाष्ट्रो जागत इत्यादावुभयप्राप्तौ परत्वादादिवृद्धिरेवेति भावः । नचादिवृद्ध्या परत्वादन्त्योपधावृद्ध्योर्बाधेऽपि ( पुनः प्रसङ्गविज्ञानात्सिद्धम् ) इति न्यायेन पुनः कुतो न ते इति वाच्यम् । अत्र लक्ष्याऽनुरोधात् ( सकृद्गतो विप्रतिषेधेन यद्बाधितं तद्बाधितमेवे)त्यस्यैवाऽऽश्रयणात् । अनुशतिकादिगणे पुष्करसच्छब्दपाठस्योक्तार्थे ज्ञापकत्वं बोध्यम् । तथाहि—पुष्करसच्छब्दात्पौष्करसादिरित्यस्य सिद्ध्यर्थमनुशतिकादिपूक्तशब्दपाठः । आद्युपधावृद्धिभ्यामुक्तप्रयोगसिद्धावुक्तगणे उक्तशब्दपाठो व्यर्थीभूतो ज्ञापयति, आदिवृद्धिरिति । तथा च, आदिवृद्धयोपधावृद्धेर्बाधादुक्तप्रयोगाऽसिद्धया तदर्थमुक्तगणे तत्पाठस्याऽऽवश्यकत्वेन स्वांशे चारितार्थ्यं जातम् । न च पुष्करसदा चरतीत्यर्थे ठकि पौष्करसादिक इत्येतत्प्रयोगसिद्ध्यर्थमनुशतिकादिपूक्तशब्दपाठस्याऽऽवश्यकत्वम् । न चोपधावृद्ध्यैवोक्तप्रयोगसिद्धौ तत्र पाठो व्यर्थ एवेति वाच्यम् । उपधावृद्धेर्ञ्णित्येव विधानादिति वाच्यम् । पुष्करसच्छब्दाट्ठोऽनभिधानात् । उक्तज्ञापकेन सत्यपि सम्भवे बाधनं भवतीत्यवश्यमाश्रयणीयम्भवतीति बोध्यम् । ननूक्तज्ञापनेऽपि जागत इत्यादावुपधावृद्धेर्बाधोऽस्तु, औपगव इत्यत्रादिवृद्धिप्रवृत्त्यवसरे उपधावृद्ध्यप्राप्त्या कथन्तद्बाध इति चेन्न । जागत इत्यादावुपधावृद्धिबाधस्य निर्णये जाते कुत्रचित्कालान्तरप्राप्ताया अप्युक्तवृद्धेर्बाधस्य समुचितत्वादिति भावः ।

ननु इदमर्थेऽपत्यसमूहविकारादीनामन्तर्भावादपत्येऽपि 'तस्येदमि'ति सूत्रेणाऽणः सिद्धौ किमर्थं 'तस्याऽपत्यमि'ति सूत्रम् । नचास्य 'अत इञ्' इत्याद्यर्थमावश्यकमिति वाच्यम् । तस्य तदर्थकत्वेनाऽऽवश्यकत्वेऽपि तत्रैव पाठस्य युक्ततया योगविभागस्य नैरर्थक्यादित्याशङ्क्य समाधत्ते—तस्येदमित्यपत्येऽपि बाधनार्थं कृतम्भवेदिति । तस्येदमित्येतद्बाधकस्य 'वृद्धाच्छः' इति सूत्रस्य बाधनार्थं तस्याऽपत्यमिति पृथक्कृतमिति तद्भावः । ननु अपत्यचतुर्थ्यर्थपर्यन्तेभ्योऽन्योऽर्थः शेष इति स्वीकारेण तस्येदमित्येतत्सूत्रविहितस्याऽणः 'वृद्धाच्छः' इत्येतद्विहितस्य छस्य च शैषिकत्वादपत्यार्थे प्रवृत्त्यभावात्कथन्तद्बाधनार्थत्वं योगविभागस्येत्यत आह—उत्सर्गः शेष एवाऽसौ वृद्धाऽन्यस्य

प्रयोजनमिति। उक्ततत्तत्प्रकृत्यर्थान्वितापत्याद्यर्थस्यैवोक्तत्वादुपग्वादेस्तद्धितत्वेन शेषत्वात्तत्रापवादप्रवृत्तिरस्त्येवेति। तस्यापत्यमिति योगविभागे तु उपग्वपत्यत्वस्याऽनेनोक्तत्वाच्छेषत्वाऽभावेनाऽपवादस्य प्रसङ्ग एव नास्तीति अपवादाऽप्रवृत्तिरूपोऽपवादः। ननु उपग्वादेरवृद्धत्वेन वृद्धाद्विहितस्य छस्य स्वत एव प्रसङ्गो नास्तीत्याशङ्कायामाह—वृद्धाऽन्यस्य प्रयोजनमिति। भान्वादिवृद्धप्रातिपदिकेभ्यः छाऽभावः प्रयोजनमिति भावः॥

ननु अन्तरङ्गत्वात्सन्धौ कृतायामेव प्रत्ययोत्पत्तिरिति व्यर्थं समर्थानाम्प्रथमाद्वेति सूत्रस्थं समर्थग्रहणमित्याशयेनाऽऽशङ्कते—कृतसन्धेः किमिति। समाधत्ते—अकृतव्यूहपरिभाषया साद्युत्थितिर्माभूदिति। अयम्भावः—तदसत्त्वे कृतसन्धिकार्यात्तद्धितप्रत्यय इत्यर्थाऽभावादुक्तपरिभाषया वृद्धौ सत्यामन्तरङ्गदीर्घस्य निमित्तविनाशसद्भावात्पूर्वमेतदप्रवृत्त्याऽनिष्टाऽऽपत्तिरिति तदावश्यकं तस्मिन्सति कृतसन्धेस्तद्धितोत्पत्त्या सुतरामिष्टसिद्धिरिति। समर्थग्रहणेन ज्ञापितेयम्परिभाषेति हरदत्तप्रभृतयः। लोकतः सिद्धेति केचित्॥

ननु 'तस्यापत्यमि'त्यत्र निर्दिष्टस्य पदद्वयस्य मध्ये प्राथमिकस्यैव प्रकृतिसमर्थकत्वेनाऽपत्यस्याऽतत्त्वात्प्रकृत्याकाङ्क्षायाम्प्राथमिकस्यैव ग्रहणेन प्रथमादिति व्यर्थमित्याशयेनाऽऽशङ्कते—प्रथमात्किमिति। समाधत्ते—अपत्यवाचकादिति। अयम्भावः, प्रथमादित्यस्याऽसत्त्वे यथा तस्याऽपत्यमित्यादिसूत्रविहितप्रत्ययस्य षष्ठ्यन्तादभ्युपगतिस्तथैवाऽपत्यवाचकदेवदत्तादिशब्दात्प्रत्ययः स्यादिति शङ्का स्यादिति तद्व्यावृत्त्यर्थं प्रथमादित्यावश्यकमिति। ननु यद्यपि उपगोरपत्यमिति विग्रहवाक्येऽपत्यवाचकस्य देवदत्तादेरप्राथम्यान्न ततः प्रत्ययापत्तिस्तथापि अपत्यमुपगोरिति वाक्ये तस्य प्राथम्येनोक्तापत्तिस्तदवस्थैवेति चेन्न। पूर्वसूत्रादनुवृत्तस्य समर्थादित्यस्य सामर्थ्यान्नियतत्वादत्र लक्षणाऽपंक्षस्यैव प्राथम्यस्य ग्रहणाद्विग्रहवाक्यापेक्षस्य तस्याऽनियतत्वाद्ग्रहणेनाऽदोषात्। षष्ठ्यर्थे मा भूदिति। इन्द्रो देवताऽस्य हविष इति विग्रहे ऐन्द्रं हविरिति प्रथमान्तात्प्रत्ययोत्पत्तिवत्, उपगुरपत्यमस्य देवदत्तस्येति विग्रहे औपगवो देवदत्त इति भवतु परं देवदत्तोऽपत्यमस्योपगोरिति विग्रहे दैवदत्तिरुपगुरिति माभूदित्यर्थः।

ननु तद्धितस्याऽपवादत्वान्नित्यं समासबाधकत्वम्। न च तद्धितस्य विकल्पतया पक्षे समासस्याऽपि सम्भवाद्बाधकत्वकथनं न युक्तमिति वाच्यम्। 'पारे मध्ये षष्ठ्या वा' इत्यत्रत्यवाग्रहणज्ञापितस्य यत्रोत्सर्गापवादौ महाविभाषा विकल्पते तत्राऽऽपवादविनिर्मुक्तोत्सर्गस्याऽप्रवृत्तिरित्यस्य सत्त्वात्पक्षे समासाऽप्राप्तेरित्याह—दैवयज्ञि इति सूत्राऽन्यतरस्यां ग्रहणानुवृत्तेः समासोऽपीति॥

अपत्यं पौत्रप्रभृतिगोत्रम्। ननु पौत्रादेरपत्यत्वाऽव्यभिचारादपत्यग्रहणमन्तराऽप्यपत्यरूपपौत्रादेर्गोत्रसंज्ञा स्यादेवेति व्यर्थमपत्यग्रहणमित्यत आह—अपत्यत्वेन विवक्षितमिति। पौत्रादीनामपत्यत्वेन विवक्षायामेव गोत्रसंज्ञा स्यात्पौत्रत्वादिना विवक्षायां सा माभूदित्यर्थमपत्यग्रहणम्। तेन औपगव इत्यादावप्यणो गोत्रसंज्ञासिद्धिः। अणोऽपत्यत्वमेव शक्यतावच्छेदकं न पौत्रत्वादिकम्। इत्थं च गोत्राऽधिकारस्थयनाद्य-

र्थस्यैव गोत्रसंज्ञा स्यान्नत्वण इति । नचाऽपत्याऽधिकारे गोत्रयुवसंज्ञाकरणसामर्थ्यादपत्यस्य लाभात्तेनैवोक्तप्रयोजनसिद्धौ प्रयोजनाऽभावाद्व्यर्थमपत्यग्रहणमिति वाच्यम् । 'ते तद्राजाः' इत्येतत्सूत्रघटकतत्पदेन 'जनपदात् क्षत्रियादञ्' इत्येतत्सूत्रविहिताऽञादीनामेव ग्रहणेन गोत्रयुवसंज्ञाप्रकरणेन व्यवधानादञादेः पूर्वप्रत्ययानामग्रहणेनाऽपत्याधिकारपाठसामर्थ्यस्योपक्षीणतयाऽपत्यस्याऽसम्बन्धशङ्कान्याबृत्यर्थं पुनरपत्यग्रहणस्याऽऽवश्यकत्वादिति भावः ॥

ननु 'एकस्मिन् गोत्रे' इदं सूत्रमव्यर्थम् । नच तत्राऽनेकप्रत्ययव्यावृत्त्यर्थमावश्यकं सूत्रमिति वाच्यम् । युगपदेकस्मिन् गोत्रेऽनेकप्रत्ययानामप्रसक्तेरित्याशङ्क्य सूत्रारम्भफलं प्रदर्शयति—गोत्रे स्वैकोनसंख्यानां प्रत्ययानां परम्परेति । स्वयं गोत्रन्तदपेक्षया एकोनसंख्यानां प्रत्ययानां तृतीये द्वयोः चतुर्थे त्रयाणां, पञ्चमे चतुर्णाम्परम्परा प्रसज्यत इति तदर्थः । तथा हि—उपगुशब्दात्तृतीये वाच्ये द्वयोरणिञोः प्रत्ययोरापत्तिः । तस्मादेवोक्तशब्दात्पञ्चमे वाच्ये चतुर्णामणिञ्फगिञां प्रत्ययानाम्परम्परेति । नच 'यस्येति च'ति सूत्रेणाऽणाऽदेर्लोपेनाऽविद्यमानत्वादणिञादीनाम्प्रत्ययानां परम्परेत्युक्तेः कथं सङ्गतिरिति वाच्यम् । अणन्तादिञुत्पत्तिः । इञन्तात्फक उत्पत्तिरित्युत्पत्तिमात्राऽभिप्रायेण प्रत्ययपरम्परेत्युक्तेः सुसंगतेः ।

यद्वा स्वद्व्यूनसंख्येभ्योऽनिष्टोत्पत्तिः प्रसज्यते । स्वं गोत्रन्तदपेक्षया द्व्यूनसंख्येभ्यः प्रकृतिभूतेभ्यः प्रातिपदिकेभ्योऽनिष्टप्रत्ययोत्पत्तिरित्यर्थः । अत्र पक्षे उपगोस्तृतीये वाच्ये एकास्मादौपगवादिञनिष्टः प्राप्नोति चतुर्थे द्वाभ्यां, पञ्चमे त्रिभ्य इत्यादीतिभावः । अत्राऽनिष्टोत्पत्तिमात्रं न रिष्टाऽसिद्धिरित्यर्थः । अत्र पक्षे उपगुशब्दादणेष्टसिद्धावपि औपगवादिञ्निवृत्त्यर्थं नियमार्थमिदं सूत्रम् । ननु नियमार्थकस्य सूत्रस्यारम्भेऽपि गोत्रे एकस्यैव प्रत्ययस्य करणान्नियमेनाऽबाधादनन्तराऽपत्यप्रत्ययान्ताद्गोत्रे प्रत्ययो दुर्वारः । नच गोत्रपदेन लक्षणयाऽपत्यसमुदायः सच परमप्रकृतेरेवेति वाच्यम् । अपत्यमित्यनुवृत्त्यैव सिद्धौ गोत्रग्रहणवैयर्थ्यापत्तेरिति चेन्न । गोत्रग्रहणस्य भाष्यकृता प्रत्याख्याततत्वेनोक्तप्रत्ययस्येष्टापत्तेः ।

यद्वा गोत्रे बोध्ये एक एव शब्दः प्रत्ययः प्रकृतिर्नत्वनेकशब्द इत्यर्थः । यदि प्रत्ययान्तात्प्रत्ययः स्यात्तर्हि नैकशब्दः प्रत्ययप्रकृतिः स्यादिति,

यद्वा एकशब्दः प्रथमवाची प्रथमः शब्दो गोत्रे प्रत्ययमुत्पादयतीत्यर्थः । प्रथमत्वञ्च सर्वमूलत्वमित्येतत्सर्वं स्पष्टम्भाष्ये । अपत्यं पितुरेव स्यादिति—तथाच—

आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियान्त्वमी ।
आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे ॥ इत्यमरः ।

मुख्यपक्षमाह—ततः प्राचामपीतिचेति—पित्रपेक्षया प्राचां पितामहप्रपितामहादीनामपीति तदर्थः । 'पङ्क्तिविंशति' इत्यत्र भाष्ये न पतन्त्यनेनेत्यपत्यमिति व्युत्पत्तेः प्रदर्शनाद्बाहुलात्करणे यदा निष्पन्नस्याऽपत्यशब्दस्य क्रियानिमित्तत्त्वन्नतु पुत्रपर्यायत्वम् । यस्य यन्निमित्तमपतनं तस्य तदपत्यमितिफलितम् । पितामहादीनामपतने पौत्रादेरपि हेतुत्वेन तेषामपत्यत्वम्भवति । अतएवेदं तद्धानौ इति प्रथमो प्रत्ययमालाव्या-

वृत्तये, द्वितीये स्वद्व्यनसंख्येभ्योऽनिष्टोत्पत्तिनिवृत्तये इत्यर्थः । सूत्रमेतत्तथोत्तरमिति-स्पष्टमित्यलम् ।

नियमार्थमिदं सूत्रमिति । अयम्भावः—अनन्तराऽपत्ये मुख्यः सम्बन्धेऽप्रवृत्त्या प्रथमपक्षे तत्तत्पितृवाचकादेव प्रत्ययःस्यान्न तु मूलभूतात्, तथा च—औपगवाऽपत्येनोपगोर्मुख्यसम्बन्धाऽसद्भावादिहाऽप्राप्त्या तदर्थं सूत्रस्याऽऽवश्यकत्वेन विध्यर्थत्वन्नियमार्थत्वाऽभावेनौपगवशब्दात्प्रत्ययो दुर्वार इति चेन्न । गोत्रे बोध्ये क्रमतोऽनेकप्रत्ययो दुर्वार एवाऽपत्यप्रत्यय इति सूत्रस्यार्थं औपगवशब्दस्यापत्यप्रत्ययान्तत्वे पुनस्ततोऽपत्यप्रत्ययानुपपत्त्याऽगत्या परम्परासम्बन्धस्वीकारादुपगोरेव प्रत्ययोत्पत्त्यौपगवात्तदनुत्पत्तेरिति ।

इत्यपत्याधिकारः ॥

---

## अथ चातुरर्थिकप्रकरणम् ।

ननु (वामदेवाड्ड्यड्ड्यावि)त्येवमस्तु सूत्रम्, वामदेवशब्दादुक्तसूत्रेणोक्तप्रत्ययविधानेन (यस्येति च)तिलोपेनैव वामदेव्यमिति सिद्धे सूत्रे ड्यड्ड्ययोर्डित्करणमव्यर्थमिति चेन्न । डित्करणाभावे 'ययतोश्चातदर्थे' इत्यत्रत्ययद्वयामुक्तसूत्रविहितयोर्यतोर्ग्रहणापत्त्या ययतोश्चेति सूत्रेण नञःपरस्योत्तरपदस्यान्तोदात्तत्वमित्यर्थकेनोक्तस्वरस्य वामदेव्यशब्दे दुर्वारतया तद्वयावृत्तिपुरस्सरमव्ययपूर्वपदस्वरार्थं डित्करणस्यावश्यकत्वात् । नच सत्यपि डित्वे कुतो नोक्तस्वरविधायकसूत्रप्रवृत्तिरिति वाच्यम् । एतड्डित्करणसामर्थ्याज्ज्ञापिताभ्यां(निरनुबन्धग्रहणे न साऽनुबन्धकस्य) (तदनुबन्धकग्रहणेनाऽतदनुबन्धकस्ये)ति परिभाषाभ्यान्तत्प्रवृत्तेरित्येवाह—

> सिद्धे यस्येति लोपेन किमर्थं ययतौ डितौ ।
> ग्रहणं मा तदर्थे भूद्वामदेव्यस्य नञ्स्वरे ।। इति ।

( पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ) इत्यत्र तव्यग्रहणेन तव्यतोऽग्रहणमिति पूर्वपरिभाषाफलम् । अङा चङोऽग्रहणमिति द्वितीयपरिभाषायाः फलम्बोध्यम् ।

ननु वास्त्रो रथ इतिवत् छात्रो रथ इत्यपि स्यात् छत्रैः परिवृतो रथ इत्यर्थे प्रकृतसूत्रेणाऽण्प्रत्ययविधानादित्याशङ्कां समाधत्ते—समन्ताद्वेष्टितः परिवृत उच्यते । तेनेह न । छत्रैः परिवृतो रथ इति । अयम्भावः—रथाच्छादनाय वस्त्रकम्बलादिभिरेव समन्तात् (सर्वं) वेष्टनसम्भवान्न तु छत्रादिभिरिति न ततोऽण्प्रत्यय इति ॥

ननु पाण्डुकम्बलशब्दान्मत्वर्थीयेन्प्रत्ययविधानात्पाण्डुकम्बलीति सिद्धौ सूत्रमिदं व्यर्थमिति चेन्न । सूत्राभावे पाण्डुकम्बलेन परिवृत इत्यर्थेऽण्प्रत्ययस्याऽपि दुर्वारतया तन्निवृत्त्यर्थं सूत्रस्यावश्यकत्वादित्याह—मत्वर्थीयेनैव सिद्धे वचनमणो निवृत्त्यर्थमिति ।

कौमाराऽपूर्ववचने । ननु निर्देशोऽयमनुपपन्नः, अपूर्ववचने कौमारो निपात्यत इत्यर्थे कौमारोत्तरविभक्तिसकारस्य रुत्वयत्वयलोपेषु कौमार अपूर्ववचने इत्यस्यैव सिद्धिः, सन्धेरप्रसक्तेरत आह—कौमार इत्यविभक्तिको निर्देश इति-तथा च सन्धौ बाधकाभावान्निर्देश उपपन्न इति भावः ॥

नतु सूत्रेऽपूर्ववचन इत्यस्य भावप्रधाननिर्देशत्वादित्याह—अपूर्वत्वे निपातनमिति । स्त्रिया एवापूर्वत्वमिष्यते न पुरुषस्य, पुरुषस्तु अपूर्वभार्यो भवतु मा वेति नाग्रहः ॥

इसुसुक्तान्तात्कः । ननु इसुसुक्तात्क इत्येव सूत्रकरणेऽप्यधिकृताङ्गविशेषणत्वादेव तदन्तविधिना तान्तादित्यर्थलाभः स्यादेवेत्यन्तग्रहणं व्यर्थं सज्ज्ञापयति प्रत्ययोपदेशकाले यस्तान्तस्तस्मात्परस्य ठस्य कादेशो यथा स्यादिति । ज्ञापनफलं तु माथितिक इत्यत्र ठस्येकादेशो यस्येति लोपे च तान्तत्वेऽपि कादेशाऽभावरूपम् । स्पष्टञ्चेदं 'ठस्येक' इति सूत्रे कैयटे । केचित्तु इकःस्थाने कादेशस्य सन्निपातपरिभाषयैव वारणसम्भवादन्तग्रहणं हेयमेवेत्याहुः ॥

ननु इसुसुगिति सूत्रे सामान्यत इसुसोर्ग्रहणे आशिषूघटकस्येसोऽपि ग्रहणात्ततः परस्यापि ठस्य कादेशापत्त्या आशिषिक इति प्रयोगो न सिद्ध्येदत आह—इसुसोः प्रतिपदोक्तयोर्ग्रहणान्नेहेति । (लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमि)ति परिभाषया प्रतिपदोक्तयोरेवेसुसोर्ग्रहणादाशिषूघटकस्येसोऽतथात्वान्नोक्तदोषावकाश इति भावः ।

मतोश्च बह्वजङ्गात्—ननु मतोर्बह्वच इत्येव सूत्रकरणेऽपि वैयधिकरण्यसम्बन्धेन बह्वचो विहितो यो मतुप् तदन्तादणित्यर्थं नैवेष्टसिद्धाविहाङ्गग्रहणं व्यर्थमित्याशङ्कां समाधत्ते-अङ्गग्रहणं बह्वजिति तद्विशेषणं यथा स्यान्मत्वन्तविशेषणं माभूदिति । सम्भवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यमित्यभियुक्तोक्त्या सत्यङ्गग्रहणेन बह्वजित्यङ्गविशेषणमेव नतु मत्वन्तविशेषणम् । असत्यङ्गग्रहणे तु मत्वन्तविशेषणमेव स्यादेवञ्च आहिमतमित्यादावञा दुर्वारत्वं स्यादिति भावः ।

ननु द्वलोपसूत्राल्लोपपदानुवर्तनाल्लोपसिद्धाविह लुग्ग्रहणं व्यर्थमिति शङ्कां निराकरोतिलुग्ग्रहणं सर्वलोपार्थमिति ।

इति चातुरर्थिकप्रकरणम् ।

---

इति मैथिलवंशोद्भवस्य ठक्कुरोपनामकश्रीकनकलालशर्म्मणः कृतौ फक्किकारत्नमञ्जूषायां तद्धितप्रकरणं सम्पूर्णम् ॥

श्रीदुर्गामाधवगणेशाः ।

# फक्किकारत्नमञ्जूषा ।

## उत्तरार्द्धम् ।

भव्यप्रदा निखिलभक्तजनस्य नित्यम्
देवासुर-प्रभृति-सेवितपादपद्मा ॥
संग्रामशत्रुहतिपूरितदेवकृत्या
दुर्गाम्बिकाऽस्तु विपुलं कुशलं विधत्ताम् ॥ १ ॥

## अथ तिङन्ते भ्वादिप्रकरणम् ।

ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मंगलमाचरणीयमितिशिष्टोक्त्या ग्रन्थमध्येऽपि मङ्गलकरणस्यावश्यकत्वाद् ग्रन्थमध्ये कृतस्य मङ्गलस्य शिष्यजनानामानुपङ्गिकमङ्गलार्थमुपनिबद्धः-(१)श्रौत्रार्हन्तीति-श्रोत्रियस्य भाव इत्यर्थे श्रोत्रियशब्दात् ( हायनान्तयुवादिभ्योऽणि)ति सूत्रे (श्रोत्रियस्य यलोपश्चे)ति वार्त्तिकेन अणि यकारस्य लोपे, (यस्येति च) त्यनेनेकारलोपे श्रौत्रमिति सिद्धयति । श्रोत्रियत्वमिति तदर्थः । अर्हतो भाव इत्यर्थे (गुणवचनब्राह्मणादिभ्यः कर्मणिचे)ति सूत्रे 'अर्हतो नुम्चे'त्युक्त्या ष्यञि नुमि च पित्वान्ङीपि (हलस्तद्धितस्ये)ति यलोपे आर्हन्तीति सिद्धयति । योग्येति तदर्थः । श्रौत्रं च आर्हन्ती च श्रौत्रार्हन्ती ताभ्यां वित्तैः श्रौत्रार्हन्तीचणैः । ( तेन वित्त ) इत्यनेन चणपि सिद्धिः । श्रोत्रियत्वयोग्यत्वाभ्यां प्रसिद्धैरित्यर्थः । किञ्च गुण्यः प्रशस्तगुणयुक्तैरित्यर्थः । [रूपादाहतप्रशंसोर्यवि]ति सूत्रेऽन्येभ्योऽपि दृश्यते इत्युक्त्या गुण्या ब्राह्मणा इत्यस्य भाष्यादावुदाहरणत्वेन तत्सिद्धिः । महान्तश्च ते ऋषयः महर्षयस्तैस्तथोक्तैः ।

अहर्दिवमिति—प्रत्यहमित्यर्थः । [अचतुरविचतुर] इत्यादिना निपातनात्सिद्धिः ।

तोष्टूय्यमान इति—स्तौतेर्यङन्ताच्छानचि रूपम् । अगुणोऽपीत्यत्रापिशब्देनाऽऽपाततो(२)विरोधं द्योतयति । वस्तुतस्तु स्तुतिप्रयोजकीभूतानन्तकल्याणगुणानां श्रुति-

---

( १ ) श्रौत्रार्हन्तीचणैर्गुण्यैर्महर्षिभिरहर्दिवम् ।
तोष्टूय्यमानोऽप्यगुणो विभुर्विजयतेतराम् ॥ १ ॥

इति श्लोकस्वरूपम् । यं गुणहीनं सगुणं च विभुं वेदाध्ययनकर्तृत्व-योग्यताविशिष्टाः सत्वादिगुणशालयश्च महर्षयः प्रतिक्षणमतिशयेन स्तुवन्ति स विभुर्व्यापकः परमेश्वरः सर्वोत्कृष्टत्वेन वर्तत इति तदर्थः ।

( २ ) एकस्मिन्नगुणत्वसगुणत्वयोः स्थित्यसम्भवेन स्तुतिविषयस्याऽगुणस्य विभोरपि शब्दबलात्सगुणात्वाऽऽपादनाद्विरोधः ।

स्मृतिसिद्धत्वेऽपि वियदादिवद्व्यावहारिकत्वात्तदभावस्य पारमार्थिकत्वेन न विरोधः । विजयतेतरामिति–वीतिपृथक् पदम् । [तिङश्चे]ति तरप्याम्, ननु विजयते इत्यस्याऽतिङन्तत्वेनाऽप्रातिपदिकत्वेन च तरप् न स्यात्; नच [सह सुपे]त्यत्र सहेति योगविभागेन विशब्दस्य तिङन्तेन समासे प्रातिपदिकत्वस्य सुलभत्वेन तरपोऽपि सौलभ्यमेवेतिवाच्यम् । तिङन्तोत्तरपदसमासस्यापि छन्दस्येव विधानाद्, किञ्च विजयत इत्यस्य प्रातिपदित्वाङ्गीकारे सोरुत्पत्तिः, लिङ्गसर्वनामताऽभ्युपगमे नपुंसकत्वात्सोर्लुक्यपि [ह्रस्वो नपुंसके] इति ह्रस्वापत्तेः । नच जयत इत्यस्य तिङन्तत्वेऽपि तस्य विपदसापेक्षत्वेनाऽसामर्थ्यात्समासाप्राप्त्या कथं तरविति वाच्यम् । उपसर्गाणां (१)द्योतकत्वेनोक्तशङ्कानुदयेन तदुपपत्तेः । नियमेन स्वार्थसाकांक्षेतरार्थवाचकशब्दभिन्नार्थवाचकशब्दस्यापेक्षा हि सामर्थ्याऽभावप्रयोजिका सेह नास्ति उपसर्गाणां द्योतकत्वात् । तरबन्तार्थं प्रति तिङन्तार्थस्य प्राधान्येन (प्रधान)न्यायेन प्रधानस्य सापेक्षत्वेऽपि वृत्तिर्भवत्येवेति भावः । (२)पूर्वार्धे इति—ननु पूर्वार्द्धेऽपि तृतीयाऽध्यायस्य क्विनः [स्पृशोऽनुदके क्विन्] इत्यनेन व्युत्पादनात्तुर्य्यपञ्चमाध्यायवर्त्तिन इत्येतावन्मात्रप्रतिपादनमसङ्गतमिव प्रतिभातीति चेन्न। यत्र ते प्राधान्येन कथिता इति तदभिप्रायेण प्रसङ्गात्तृतीयाध्यायस्थप्रत्ययकथनेनाऽप्यक्षतेः । ननु उणादिप्रत्ययानां तृतीयाध्यायगोचरत्वाऽभावेन तृतीयाध्यायगोचराः प्रत्ययाः कथ्यन्ते इति ग्रन्थकर्तुः प्रतिज्ञा नानन्दोत्पादिनीति चेन्न । [उणादयो बहुलमि]ति सूत्रस्य बाधितत्वेन तेषामपि तृतीयाध्यायगोचरत्वाक्षतेरिति संक्षेपः ॥

वर्त्तमाने लट्—ननु वर्त्तमानत्वस्य शब्दप्रयोगाधिकरणक्षणवृत्तित्वरूपत्वेन क्रियायाश्च पूर्वापरीभूताऽवयवसमुदायरूपत्वेनावयवानाञ्चाशुविनाशित्वात्तादृशसमुदायस्य निरुक्तवर्त्तमानत्वस्य स्थिरसम्बन्धिनोऽनुपपन्नाद्वर्त्तमानक्रियावृत्तेर्धातोरित्यर्थः सर्वथाऽसम्भवीति चेन्न । वर्तमानकालक्रियावृत्तेर्धातोरित्यर्थं तात्पर्यात् । नच प्रारब्धापरिसमाप्तत्वघटितस्यैव कालगतस्यापि वर्त्तमानत्वस्य विवक्षायामपि पूर्वोक्तानुपपत्तेस्तादवस्थ्यमेवेति वाच्यम् । बौद्धपूर्वापरीभूताऽवयवकसमुदायाऽधिकरणस्य जन्यकालस्य सम्भवात् । वर्त्तमाने लडित्यादिसूत्रविहितलकाराणां वाचकत्वद्योतकत्वयोर्बहुविवादाध्यसितत्वम् । तत्र तेषाम्बहुत्वेन तत्र शक्तौ गौरवात्प्रकृतावेव शक्तिकल्पना ज्यायसी, ते च द्योतका एवेति तत्वम् । वर्त्तमानकालत्वञ्च प्रयोगोच्चारणाधिकरणत्वे सति प्रारब्धाऽऽपरिसमाप्तक्रियोपलक्षितत्वम् । ह्यस्तनीम्प्रारब्धाऽऽपरिसमाप्तिक्रियामादायाऽतिव्याप्तिव्यावृत्त्यर्थमुक्तविशेषणम्, भूतभविष्यद्भिन्नत्वं वा तत्त्वम् ॥

---

( १ ) द्योकत्वेनेति । द्योतकत्वं नाम स्वसमभिव्याहृतपदनिष्ठवृत्त्युद्बोधकत्वम् । समन्वयो यथा, अनुभूयते सुखं साक्षात्क्रियते गुरुरित्यादौ स्वम् अनु साक्षादिति च तत्समभिव्याहृतपदं भूकृपदं तन्निष्ठवृत्तेरुद्बोधकत्वं द्योतकत्वमनुसाक्षादित्यनयोरस्तीति तयोस्तत्वम् । एवं प्रकृते विजयते इत्यत्रापि वीत्युपसर्गस्य द्योतकत्वं बोध्यमिति भावः ।

( २ ) पूर्वार्द्धे कथितास्तुर्यपञ्चमाध्यायवर्तिनः ।
प्रत्यया अथ कथ्यन्ते तृतीयाऽध्यायगोचराः ॥

इति श्लोकाकारः । चतुर्थपञ्चमाध्यायस्थप्रत्ययाभिधानोत्तरतृतीयाध्यायस्थप्रत्ययाभिधानं करोमीत्यर्थः ।

लः कर्मणि च भावे—ननु लाघवात् लकाराणां कृतावेव (१)शक्तिरभ्युपेया; न तु कर्तरि, तत्र तदभ्युपगमे गौरवस्य प्रतिभासमानत्वात् प्रथमान्तपदेनैव कर्तुर्लाभाच्च। प्रकृत्यर्थप्रत्ययार्थयोः सहार्थत्वे प्रत्ययार्थस्यैव प्राधान्यादाख्यातार्थे धात्वर्थस्य विशेषणत्वम्। आख्यातार्थे च प्रथमान्तार्थस्य विशेषणत्वम्। अनुकूलत्वमाश्रयत्वञ्च सम्बन्धः। तथा च चैत्रः पचतीत्यादौ विक्लित्यनुकूलव्यापाराऽनुकूलकृतिमांश्चैत्र इति बोधः। रथो गच्छतीत्यादौ रथस्याचेतनत्वेन यत्नशून्यत्वादाख्यातस्य व्यापारे आश्रये वा (२)लक्षणेत्याहुस्तार्किकाः।

तत्तुच्छम्। युष्मदस्मदोर्लकारेण सति सामानाधिकरण्ये एव पुरुषव्यवस्थोपपत्त्या लकाराणां कृतौ शक्त्यभ्युपगमे कृत्याश्रयस्य कर्तृत्वेन लकारेण युष्मदस्मदोरसामानाधिकरण्येन तदनुपपत्तेः। लस्थानिकादेशभूततिबादिभ्यः कृतिमात्रबोधवत्तत्स्थानिकादेशभूतशतृशानजादीनामपि लादेशाऽविशेषेण तेभ्यः कृतिमात्रबोधापत्तेश्च। नचाऽऽश्रयाश्रयिभावेन कर्मणि सम्प्रदाने च कृतेरन्वयात्तेभ्यः कृतिमात्रबोध इष्ट एवेति वाच्यम्। (३)(नामार्थयोरभेदातिरिक्तः सम्बन्धोऽव्युत्पन्नः) इति व्युत्पत्तेर्जागरूकत्वेनाऽऽश्रयाऽऽश्रयिभावेनान्वयाऽनुपपत्तेः। नच (फलमुखगौरवं न दोषोत्पादकमि)ति न्यायसद्भावाच्छत्रादीनां कर्तरि शक्तिस्त्विवादीनां कृतावेव सेति वाच्यम्। लाघवात्स्थानिन एव वाचकत्वं नत्वादेशानां तेषां बहुत्वेन गौरवमिति तव पक्षः। तथा च तिबादीनां शत्रादीनां च स्थानिस्मारकत्वेन लिपिस्थानीयत्वं बोधकत्वं तु लकारस्यैव तस्य च लकारस्य शत्राद्यन्ते कर्तरि शक्तत्वेन तिबादीनां कृतिमात्रं बोधकत्वाऽनुपपत्तेः। नच लकाराणामनेकार्थत्वेन न काचिदनुपपत्तिरिति वाच्यम्। (अन्यायश्चानेकार्थत्वमि)ति न्यायस्य जागरूकत्वात्।
न च (लः कर्मणि)इति सूत्रे कर्तृकर्मपदयोर्भावप्रधानत्वेन कर्तृत्वं कृतिः कर्मत्वं फलं तयोः शक्तौ सूत्रस्वारस्यम्। कर्मप्रत्ययान्ते पच्यते ओदनो देवदत्तेनेत्यादौ देवदत्तनिष्ठकृतिजन्यव्यापारजन्यविक्लित्तिमानोदन इति बोधः। 'कर्तरि कृदि' तिसूत्रे कर्तरीतिपदस्य धर्मिप्रधानतया शत्रादीनां कृत्याश्रये शक्तिरिति वाच्यम्। कर्तरि कृदिति सूत्रस्थकर्तृग्रहणस्यैव 'लः कर्मणी'त्यत्र चकारेणाऽनुवृत्तत्वाद् भावप्रधानेऽस्वारस्यात्। (स्थान्यर्थाभिधानसमर्थस्यैवादेशत्वमि)ति न्यायेन शत्रादीनां स्थान्यर्थेन निराकांक्षत्वेनाऽऽकांक्षितविधानस्यैव ज्या-

(१) शक्तिरिति। ननु कस्तावच्छक्तिपदार्थ इति जिज्ञासायामुच्यते—वैयाकरणनये वाच्यवाचकभावात्मकसम्बन्ध एव शक्तिपदार्थः। उक्तं च नागेशेन मञ्जूषायाम्—तस्मात्पदपदार्थयोः सम्बन्धान्तरमेव शक्तिः वाच्यवाचकभावाऽपरपर्यायेति। सम्बन्धान्तरमित्यस्य वाच्यवाचकभावरूपसम्बन्ध इत्यर्थः। गदाधरमते तु अर्थनिरूपितपदनिष्ठसंकेतलक्षणोभयात्मकवृत्तिरेव शक्तिपदार्थः।

(२) लक्षणेति। तार्किकमते—स्वशक्यसम्बन्धरूपो लक्षणापदार्थः। वैयाकरणनयेऽप्रसिद्धायाः शक्तेरेवाभ्युपगमात् लक्षणा नास्त्येव। तदुक्तं नागेशेन मञ्जूषायाम्—शक्तिर्द्विविधा प्रसिद्धाऽप्रसिद्धा चेति।

(३) नामार्थद्वयस्याऽभेदसम्बन्धेनैवान्वयो भवति; न तु तदतिरिक्तसम्बन्धेन यथा नीलो घट इत्यादौ नीलघटयोः। नीलाऽभिन्नो घट इति बोधः।

यस्त्वमिति न्यायेन कर्तरि कृदित्यनेन शक्तिग्रहाऽभावात् । न च नामार्थयोरभेदान्वयाऽनुरोधेन शतृशानजादीनां कर्तरि शक्तौ न कोऽप्युक्तदोष इति वाच्यम् । पचति कल्पं पचतिरूपं देवदत्त इत्याद्यनुरोधेन तिङ्क्ष्वपि कर्त्तुर्वाच्यत्वस्यैव समुचितत्वात् । किञ्च कृत्तिर्लकारवाच्यत्वे रथो गच्छतीत्यादावाऽऽश्रये लक्षणाऽभ्युपगतौ गौरवापत्तिः । सिद्धान्ते कर्तरि प्रत्यये कर्त्तुरभिहितत्वं कर्मणि प्रत्यये तु तस्यैव तत्त्वम् । इदानीं कृतौ प्रत्यये तस्या एवाऽभिहितत्वेन कर्त्तुरनभिहितत्वादभिहितत्वाऽनभिहितत्वव्यवस्थोच्छेदापत्तिश्च । नच, अनभिहितसंख्याके विभक्तिरिति (अनभिहिते) इत्यर्थकरणेन न दोष इति वाच्यम् । कृत्तद्धितसमासैः संख्याऽभिधानस्याऽप्रसिद्धत्वात् । किञ्च (स्थालीस्थे यत्ने पचिना कथ्यमाने स्थाली पचती)ति (कारके) इत्यधिकारसूत्रस्थभाष्यप्रयोगाद्व्यापारसामान्यस्य यत्नस्याऽपि धातोरेव लाभात् अनन्यलभ्यस्यैव शब्दार्थत्वेन कृतौ शक्तेस्सर्वथाऽसम्भवादित्यलम् ॥

भू सत्तायाम् । धातुसूत्रमिदम् । सत्तायामर्थे भूशब्दः साधुरिति तदर्थः । ननु बहूनां सत्त्वात्तान्विहाय भूधातोरेव प्रथमोपादाने को हेतुरिति चेन्न । (१)(अशोकवाटिका) न्यायेन तस्यादावुपादानात् । वस्तुतस्तु भूशब्दस्य महाव्याहृतिरूपत्वेनाऽनायासमङ्गलार्थमादौ तदुपादानमिति बोध्यम् ॥

अतो दीर्घो यञि । (तुरुस्तुशम्यमः सार्वधातुके) इत्यतोऽनुवृत्तस्य सार्वधातुकस्याऽभावे केशवः, अङ्गनेत्यादौ दीर्घापत्तिः । केशशब्दात् (केशाद्वोऽन्यतरस्यामि)ति वप्रत्ययः । अङ्गशब्दात्पामादित्वान्नः । नच (शृङ्गवृन्दाभ्यामारकन्) (हृदयाच्चालुरन्यतरस्यामि) त्युभयत्राऽकारोच्चारणसामर्थ्यात्तद्धिते दीर्घाऽप्रवृत्तिज्ञापनान्न दोष इति वाच्यम् । उक्तरीत्योक्तकल्पनापेक्षया क्लृप्तसार्वधातुकसम्बन्धस्यैव ज्यायस्त्वमेवेति ज्ञापने तयोर्ज्ञापकत्वमिति तदाशयात् । नच सुपि चेति सूत्रस्य सार्वधातुकसम्बन्धाऽभावेऽधातुप्रत्यये यञि दीर्घस्तर्हि सुप्येवेति नियमार्थत्वेनोक्तस्थलीयापत्त्यभावेन तदनुवृत्तिर्निष्फलैवेति वाच्यम् । सुपि चेत्यस्याऽभावे यज्वभ्यां युवभ्यामित्यादावतो दीर्घो यञीति दीर्घापत्तेर्दुर्वारत्वात्तन्निवृत्त्यर्थन्तस्यावश्यकत्वेन नियमत्वायोगादुक्तस्थले दोषस्य तादवस्थ्यात् । नच ( नलोपः सुपिति) सूत्रेण दीर्घे नलोपाऽसिद्धया न दोष इति वाच्यम् । यञादित्वमात्रस्य निमित्ततावच्छेदकत्वेन तस्य सुप्त्वव्याप्यत्वाऽभावात्सुप्त्वतद्व्याप्यधर्मावच्छिन्ननिमित्तकार्याऽप्राप्त्या नलोपः सुपिति सूत्राऽप्रवृत्तेरिति संक्षेपः ॥

ननु अत आदित्येव सिद्धे दीर्घग्रहणं व्यर्थमिति चेन्न । दीर्घ एव यथास्यादित्येव नियमार्थत्वेन तस्य सार्थक्यात् । अत एव पचामीत्यादौ [अनन्त्यस्यापि प्रश्नाख्यानयोरि]ति प्लुतो नेति । नचाऽनन्त्यस्य पदस्य टेरिति तत्सूत्रार्थे कथन्तत्र तत्प्राप्तिरिति वाच्यम् । दीर्घग्रहणसामर्थ्यादनन्त्यविषय एव तत्सम्बन्धेन वाक्यद्वयोः क्लृप्तसम्बन्धत्यागे बीजाऽभावात् । तेन वाक्यस्थानन्त्यस्य पदस्याचिः प्लुतः स्यादनन्त्यपदस्य च टेरिति तदर्थः । यत्तु आदिति कृतेऽपि तपरकरणसामर्थ्यात्प्लुताऽभावस्य सिद्धत्वेन व्यर्थमेव दीर्घग्रहणमिति के-

(१) अशोकरोपणवाटिकानिर्माणयोर्मध्ये लाघवादशोकनिर्माणमेव प्राक् युक्तमिति तदभिप्रायः ।

चित्तन्न तथा सति करिष्यामीत्यत्रोदात्तस्य स्यशब्दस्याऽऽन्तरतम्यात्प्राप्तस्याऽप्युदात्तत्वस्य बाधापत्तेरित्यलम् ॥

परोक्षे लिट् । परोक्षत्वञ्च साक्षात्कृतमित्येतादृशविषयताशालिज्ञानाविषयत्वम् । यद्विषयताशालिज्ञानानन्तरं साक्षात्कृतमित्याकारिका ज्ञाननिष्ठविषयताशालिनी विलक्षणा प्रतीतिर्भवति तादृशविषयतानिरूपकं यद् ज्ञानं तदविषयत्वमित्यर्थः । तच्च ज्ञानमिन्द्रियत्वावच्छिन्नकरणताकं ज्ञानम् । तच्च सन्निकृष्टविषयकमेवेति सन्निकर्षाप्रयोज्यत्वं लब्धमिति परोक्षत्वं स्फुटमेवेति । ननु (क्रिया नामेयमत्यन्तापरिदृष्टा पूर्वापरीभूता न शक्या पिण्डीभूता निदर्शयितु) मिति भाष्यात्क्रियाया अतीन्द्रियत्वेन न परोक्षे इति व्यावर्त्तकमिति—चेन्न । पिण्डीभूता ( समुदायभूता ) यास्तस्या निदर्शयितुमशक्यत्वेऽप्यवयवशः साक्षात्कृतमिति प्रतीतिविषयत्वसम्भवात् । अन्यथा पश्य मृगो धावतीत्यत्र धावनक्रियाया दर्शनकर्मता न स्यादिति । व्यापाराऽऽविष्टानामपि साधनानामेवेह परोक्षत्वस्य विचक्षणान्नोक्तदोषः । अयं पपाचेत्यनुरोधेन व्यापारानाविष्टानामित्यपि वदन्ति केचित् । स्वक्रियायाः स्वप्रत्यक्षत्वात् (१)व्यातेने किरणावलीमुदयनः । (२)चक्रे सुबन्धुः इत्यादयः प्रयोगा असंगता एव । व्यासङ्गादिना स्वक्रियायाः प्रत्यक्षत्वोपपादनेऽप्यनद्यतनातीतत्वयोरभावेन तदर्थकस्य लिटोऽप्यसम्भवादिति दिक् ॥

नित्यत्वाद्वुक् गुणवृद्धी बाधत इति । गुणे वृद्धौ वा (अचः परस्मिन्नि) ति स्थानिवद्भावाद् भूशब्दत्वेन वुकः प्रवृत्त्या कृताकृतप्रसंगित्वेन नित्यत्वमिति भावः । ननु[शब्दान्तरस्य प्राप्नुवन्विधिरनित्यः ] इति परिभाषया वुग्विधायकस्यानित्यसूचनान्नित्यत्वाद्वुगिति कथनं न सङ्गतिमाप्नोतीति चेन्न । लक्ष्यानुरोधेनाऽत्रोक्तपरिभाषाया अप्रवृत्तेः । नच गुणवृद्ध्योः कृतयोरपि [द्विर्वचनेऽचि] इत्यनेन स्थानिरूपातिदेशाद्वुकः प्रवृत्तौ बाधकाऽभावाऽन्मूलोक्तमसमञ्जसमिति वाच्यम् । प्रक्षालनाद्धि पङ्कस्येति न्यायेन स्थानिरूपातिदेशपक्षानभ्युपगमेन द्वितीयार्थं वुकः प्राग्गुणवृद्ध्योरप्राप्त्या मूलोक्तस्य सामञ्जस्यात् ॥

भवतेरः । प्रयोगे दृष्टानाम्भुवामनुकरणाद्भूशब्दात् (इक्श्तिपौ धातुनिर्देशे) इति श्तिपि रूपसिद्धिः । ननु शपः कर्त्रर्थं विधानेन श्तिपोऽकर्त्रर्थत्वात्तदप्राप्त्या रूपन्नोपपद्येतेति चेन्न । (उपसर्गात्सुनोती)त्यादिनिर्देशात् (लोपः पिबतेरीच्चे)ति निर्देशाच्च श्तिप्प्रत्ययस्य कर्त्रर्थत्वाऽभावेऽपि विकरणप्रवृत्तेःसुलभत्वात् । श्तिपः कर्तृवाचकत्वाऽभावेऽपि भावक-

---

( १ ) वैशेषिकदर्शनस्य किरणावलीव्याख्यायामुदयनाचार्यस्यायं श्लोकः—

अर्थानां प्रविवेचनाय जगतामन्तस्तमः शान्तये
सन्मार्गस्य विलोकनाय गतये लोकस्य यात्रार्थिनः ।
तत्तत्तामसभूतभीतय इमां विद्यावतां प्रीतये
व्यातेने किरणावलीमुदयनः सत्तर्कतेजोमयीम् ॥

( २ ) सुबन्धुकविकृतवासवदत्तानामगद्यकाव्ये कवेरिदं पद्यम्—

सरस्वतीदत्तवरप्रसादश्चक्रे सुबन्धुः सुजनैकबन्धुः ।
प्रत्यक्षरश्लेषमयप्रबन्धविन्यासवैदग्ध्यनिधिर्निबन्धम् ॥

मंणोरपि प्रवृत्तिः । केचित्तु—श्तिपः शकारोच्चारणसामर्थ्यादकर्त्रर्थेऽपि शपि रूपसिद्धिः । नच शकारोच्चारणाऽभावे तिप आर्द्धधातुकत्वेन प्रकृते ब्रवीतिरित्यत्र चेडापत्तेर्दुर्वारत्वात्तद्व्यावृत्त्यर्थं शकारोच्चारणमावश्यकमिति वाच्यम् । शकाराऽभावे तिप आर्द्धधातुकत्वेऽपि (तितुत्रे) ति सूत्रेणेण्निषेधाच्छकारोच्चारणस्यैतदन्यावर्त्तकत्वेन वैयर्थ्यस्य स्पष्टत्वात् एवञ्च शकारोच्चारणस्यैतदन्यार्त्तकत्वेन वैयर्थ्यस्य स्पष्टत्वात् । एवञ्च शकारोच्चारणसामर्थ्यादेवात्र शपः प्रवृत्त्या रूपमिति वदन्ति ॥

अनद्यतने लुट्—अत्रानद्यतनत्वं नाम, अतीताया रात्रेः पश्चार्द्धेनाऽऽगामिन्या रात्रेः पूर्वार्द्धेन सहितो दिवसोऽद्यतनस्तद्भिन्नोऽनद्यतन इति ॥

ननु (पुगन्तलघूपधस्य चे)त्यत्र सार्वधातुकार्द्धधातुकयोरित्यस्याङ्गविशेषणत्वे सार्वधातुकार्द्धधातुकाऽव्यवहितस्याङ्गस्येको गुणो भवतीत्यर्थकरणे भिनत्तीत्यत्रापि गुणापत्तिः । तयोरिको विशेषणत्वे तु भेत्तेत्यत्राऽपि गुणो न स्यात्तकाररूपस्यैकवर्णस्य व्यवधानेन सार्वधातुकाव्यवहितत्वाऽभावदित्याशंक्य समाधत्ते—येन नाऽव्यवधानं तेन व्यवहितेऽपि भवतीति—यद्वर्णकर्तृकव्यवधानशून्यत्वं न सम्भवति तद्वर्णव्यवधानेऽपि भवतीति तदर्थः । तथाच सूत्रसार्थक्यायैकवर्णव्यवधाने प्रवृत्तावप्यनेकवर्णव्यवधानेऽप्रवृत्त्या भेत्तेत्यत्र गुणो जातः, भिनत्तीत्यादौ तदभावश्च । (दीधीवेवीटामि)त्यत्रत्येड्ग्रहणस्यैवात्र ज्ञापकत्वम् । तथाहि अस्मिन्निषेधसूत्रे गुणाऽभावार्थमेवेटो ग्रहणम् । उक्तरीत्या गुणाऽभावोपपादनेन व्यर्थमेवेटो ग्रहणम्, ज्ञापिते तूक्तार्थे सर्वं समञ्जसमिति दिक् ॥

ननु भवतादित्यनुपपन्नम्, तुहिस्थानिकादेशभूतस्य तातङो ङित्त्वेन तस्याऽनेकाल्त्वेऽपि आनङादादिव बाधकस्य (ङिच्चे)त्यस्य सद्भावात्तेनाऽन्त्यस्थाने तातङ्प्रवृत्तेर्बोधनादिति चेन्न । अनन्यफलकङित्त्वे आनङादौ चरितार्थस्योक्तशास्त्रस्य गुणवृद्धिप्रतिषेधसम्प्रसारणादिफलकतातङ्ङित्त्वे मन्द इव प्रवृत्तो(अनेकाल्शि)त्यनेन परेण बाधात् । अनङादौ ङित्त्वस्याऽन्त्यादेशातिरिक्तफलन्नास्ति । नच सर्वादेशे गुणवृद्धिप्रतिषेधसम्प्रसारणाद्यर्थत्वम्, गुणवृद्धिप्रतिषेधसम्प्रसारणाद्यर्थत्वे सति सर्वादेशत्वमित्युभयोः परस्परापेक्षणादन्योन्याश्रय इति वाच्यम् । (एरुरि)त्येतदनन्तरं (तिह्योस्तातङाशिष्यन्यतरस्यामि)ति न्यासे इकारस्याऽनुवृत्त्यैव सिद्धौ ङित्त्वस्य सर्वादेशत्वविधानार्थत्वकल्पनयोक्तदोषाऽयोगादित्याशयेनाह—अनेकाल्त्वात्सर्वादेशः । यद्यपि ङिच्चेत्यादि ॥

प्रवर्तनायां लिङ् इत्येव सुवचम् । चतुर्णां ग्रहणं प्रपञ्चार्थमिति । अत एव

अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि ।
तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया ॥
न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा
विध्यादीनामुपादानं चतुर्णामादितः कृतम्

इति भूषणग्रन्थः सङ्गच्छते । प्रवर्त्तनात्वञ्च, प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वम्, तच्चेष्टसाधनत्वस्यास्तीति तदेवाऽर्थादिष्टसाधनत्वमेव विध्यर्थः ॥

ननु लिङो ङित्त्वात्तत्स्थानिकादेशे च स्थानिवद्भावेन ङित्त्वस्यानयनादचारितार्थ्ये (अवयवेऽचरितार्थो विधिः समुदायस्योपकारक)इति न्यायेन समुदाये तस्वादिष्टसिद्धौ पुनर्या

सुटो ङित्त्वविधानं व्यर्थमित्याशंक्य समाधत्ते—ङित्त्वोक्तेर्ज्ञायते क्वचिदनुबन्धकार्येऽपीत्यादि—अयम्भावः, ञित्त्वविधानसामर्थ्यात् न ल्यपीति ज्ञापकज्ञापितस्य क्वचिदनुबन्धकार्येऽनल्विधाविति निषेधाप्रवृत्तिरूपस्य क्वाचित्कत्वबोधनेन टित्वोगित्वयोरनतिदेशेन वक्ष्यमाणेत्यत्र (टिड्ढाणञि)ति ङीप्सिद्धिः। ननु (ङिच्च पिन्ने)ति भाष्यादुक्तज्ञापनासम्भवात्तत्रत्यदोषस्तदवस्थ एवेत्यरुचेराह—श्नः शानचः शित्वमपीति—वक्ष्यमाणेत्यत्र स्फुटतयोपपादनादलमिहोपपादनेन॥

ननु सामान्यशास्त्रस्य विशेषशास्त्रेण बाध इत्यभियुक्तोक्त्या सुटो विशेषविहितत्वेन (१) येन नाप्राप्तिन्यायेन सुटा यासुड्बाधः स्यादित्यत आह-सुटा यासुड् न बाध्यत इति। विषयभेदादिति-विषयभेदेन बाध्यबाधकभावाऽभावादत एव(असम्भव एवापवादत्वमिति वार्त्तिककृदुक्तिः सङ्गच्छते)। सत्यपि सम्भवे बाधनम्भवति यथादधिदानात्प्राक् तदुत्तरम्वा तक्रदानेन दधिदानबाधः, अत एव तिसृणामित्यत्राचिरादेशेन नुटो बाधः कुतो नेत्याशंक्य न तिसृचतसृिति ज्ञापकेन न नुडिति समाहितम्, तथाच प्रकृते पूर्वप्रदर्शितदोषस्तदवस्थ एवेति वाच्यम्। यासुट् परस्मैपदेष्वित्यत्र विषयसप्तम्या अङ्गीकारात्परस्मैपदविषयतायामेव लिङो यासुड्विधानेन तदानीं सुटोऽप्राप्त्या बाध्यबाधकभावाऽभावात् अत एव लिङोयासुट् तकारथकारयोः सुडित्युक्तं दीक्षितेन। विषयभेदादित्यस्य प्राप्तिविषयभेदात्प्राप्तिक्षणभेदादित्यर्थः। वस्तुतस्तु (यासुड्विषये सीयुटः प्रतिषेधो वक्तव्य) इति वार्त्तिकेन प्रकृते बाध्यबाधकभावाऽभावकल्पनम्। यौगपद्यासम्भवरूपविप्रतिषेधाऽभावान्न परत्वेन सुटा यासुड्बाध इत्याहुः केचित्॥

ननु (लिङः सलोपोऽनन्त्यस्ये) त्यनेन सार्वधातुकलिङ्सम्बन्धिनोऽन्त्यभिन्नसकारस्य लोपविधानात्सुटो लिङ्स्थानिकादेशावयवत्वेन विधीयमानत्वेन तल्लोपेऽपि यासुटः सकारस्याऽतथात्वाल्लोपो न स्यादिति चेन्न। अवयवाऽवयवस्यापि समुदायम्प्रत्यवयवत्वमित्याश्रयणात्सुटोऽपि लिङ्भक्तत्वेन तदीयसकारलोपोपपत्तेः। नच (लक्ष्ये लक्षणं सकृदेव प्रवर्त्तते) इति न्यायस्य जागरूकत्वाद्यासुट्सकारलोपो न स्यादिति वाच्यम्। लक्ष्यभेदेन तदुपपत्तेरित्याशयेनाह-सकारद्वयस्यापि निवृत्तिरिति॥

ननु 'अतो येय' इत्यत्रानुवृत्तसार्वधातुकग्रहणाभावे चिकीर्ष्यादित्यत्रार्द्धधातुकेऽपीयापत्तिः। नच (अतो लोप) इत्यनेनाकारलोपेऽतःपरत्वाऽभावादेवेय् न स्यादिति वाच्यम्। (२)मध्येऽपवादन्यायेन पूर्वविधेरतो लोप इत्यस्य बाधात्तत्रोक्तापत्तेर्दुर्वारत्वादित्याह—सार्वधातुके किम्, चिकीर्ष्यादिति—अयम्भावः, चिकीर्ष्यादित्यत्रेयूविधानेन चरितार्थस्यातो येन इत्यस्य (अतो दीर्घो यञि) इत्यनेन बाधाद्दीर्घस्यैव दुर्वारतया भवेदित्यत्रेय् न स्यादित्यतिव्याप्तिदोषपरिहाराय सार्वधातुकग्रहणमावश्यकमिति भावः॥

ननु णत्वविधायकशास्त्रे संहिताधिकारात्संहिताविवक्षणे णत्वं तदविवक्षणे णत्वाऽ

---

(१) येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति—इति न्यायस्वरूपम्। यत्कर्तृकावश्यप्राप्तौ यस्य विधेरारम्भः स विधिस्तस्य (अवश्यप्राप्तस्य) बाधको भवतीत्यर्थः।

(२) मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरानिति न्यायस्वरूपम्।

भाव इति विकल्परूपसिद्धौ विभाषाग्रहणं व्यर्थमिति चेन्न । असमस्तेष्वप्युपसर्गेषु संहितायाः नित्यत्वज्ञापनेन चरितार्थत्वादित्याह—इहोपसर्गाणामसमस्तत्त्वेऽपि संहिता नित्येति ।।

तदुक्तम्—

संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥

ननु ( इजादेश्च गुरुमतोऽनृच्छः ) इत्येतत्सूत्रविहिताऽऽमूघटकमकारस्य हलन्त्यनेत्संज्ञा स्यादत आह—आमो मकारस्य नेत्वमिति—यद्यत्र मकारस्येत्संज्ञा स्यात्तदा आस्धातोः कास्धातोश्चाऽऽमूविधानं व्यर्थं स्यात्तत्रापीत्संज्ञा दुर्वारत्वादिति तत्सामर्थ्यादित्संज्ञाऽभावकल्पनेन न प्रकृतेऽपि काप्यापत्तिः । नच मित्त्वादन्त्यादचः परत्वसामर्थ्यादसञ्जातविरोधिन्यायेन सवर्णदीर्घस्यैव बाधोऽस्त्विति वाच्यम् , सवर्णदीर्घबाधापेक्षया इत्संज्ञाबाधस्यैव समुचितत्वात् ॥

ननु (कृञ्चानुप्रयुज्यत) इत्यतः कृञोऽनुवृत्त्यैव सिद्धे (आम्प्रत्ययवत्कृञोऽनुप्रयोगस्ये)त्यत्रत्यकृञ्ग्रहणं फलाभावाद्यर्थं सज्ज्ञापयति भवत्यन्यस्याऽप्यनुप्रयोगः तेन ( कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः ) इत्यत्र कृशब्दमादाय कृञ्प्रत्याहाराश्रयणेन कृभ्वस्तीनामनुप्रयोगलाभः । तेषां कृभ्वस्तीनां क्रियासामान्यवाचकत्वेनाऽऽम्प्रकृतीनां क्रियाविशेषवाचित्वेन तदर्थयोरभेदान्वयः । सामान्यविशेषयोर्घटो नीलघट इत्यादौ विधेयांशेऽधिकावगाहिशाब्दबोधस्य नवीनैरभ्युपगमात् । नचोक्तरीत्या कृभ्वस्तिलाभे सम्पदोपि प्रत्याहारान्तर्गतत्वेन लाभात्कुतो न प्रयोग इति वाच्यम् । तस्य तथात्वेऽप्यनन्वितार्थत्वेनाऽप्रयोगात् । तथाच, एधांचक्रे इत्यादित एककर्तृकभूतानद्यतनपरोक्षकालिकवृद्ध्यभिन्नक्रियेति शाब्दबोधः ॥

ननु अङ्गेन प्रत्ययाक्षेपः किमर्थ इत्यभिप्रेत्याशङ्कते—प्रत्यये किमिति—उत्तरयति—वव्रश्चेति-अयम्भावः । प्रत्ययग्रहणाऽभावे (उरदि)त्यस्य परनिमित्तकत्वाऽभावात्स्थानिवत्त्वाऽभावेन ( न सम्प्रसारणे सम्प्रसारणमि )तिनिषेधाऽप्रवृत्त्या सम्प्रसारणापत्तिः, सति प्रत्ययग्रहणे तु नेति । उरदत्वस्य परनिमित्तत्वसिद्ध्यर्थत्वादेव भगवता भाष्यकृताऽऽसप्तमसमाप्तेरङ्गाधिकार उक्तः । आसप्तमसमाप्तेरङ्गाधिकारे भाष्यप्रामाण्यादङ्गसंज्ञायाः प्रत्ययनिमित्तत्वेन तद्द्वारा ( उरदि )त्यस्य परनिमित्तत्वमिति भावः । नचाङ्गसंज्ञाद्वारा निमित्तत्वमित्यस्याङ्गसंज्ञाम्प्रति प्रत्ययस्य निमित्तत्वेनोरदत्वम्प्रति निमित्तत्वमित्यर्थो वाच्यः, सच न युक्तः, प्रत्ययस्य साक्षान्निमित्तत्वानुपपादनादिति वाच्यम् । प्रत्यय इत्यस्यावृत्त्योक्तार्थस्य युक्तत्वादिति ।

एकाच उपदेशेऽनुदात्तात्—ननु एकाजनुदात्तयोस्सत्त्वादुपदेशपदं क्वाऽन्वेतीत्याशङ्कायामाह—उपदेश इत्युभयान्वयीति—मध्ये पाठात् (देहलीदीप) न्यायेन [काकाक्षिगोलक] न्यायेन वोभाभ्यां सम्बध्यत इत्यर्थः । नचानुदात्तपद एव सम्बन्धोऽस्तु एकाचि मास्त्वसाविति वाच्यम् । तथा सति पिपक्षति बिभत्सतीत्यादावपिणिषेधाऽनापत्तेः । नचैकाचि पद एव सम्बन्धोऽस्तु [illegible] इति वाच्यम् । सत्येवं कर्तुं हर्तुं-

मिति तुमन्नन्ते इण्निषेधाऽनापत्तेः। इत्युभयत्रोपदेशपदसम्बन्ध आवश्यक इति भावः॥ एकाचः किरिति—ननु एकाज्ग्रहणाऽभावे जंघनितेत्यादौ यङ्लुगन्ते निषेधस्य दुर्वारत्वेन व्यर्थमेव तदिति वाच्यम्। [स्थालीपुलाक] न्यायेन वक्ष्यमाणपरिभाषाज्ञापनेन तस्य सार्थक्यात्। तदाह—(१)श्तिपाशपानुबन्धेनेत्यादि-नच [ इन्युः किती ] त्यत्रैकाज्ग्रहणस्यानुवृत्त्यर्थत्वेन कथमुक्तार्थे ज्ञापकत्वमिति वाच्यम्। तथा सति लक्ष्यानुसारेणैवोक्तनिषेधज्ञापनादित्याहुरर्वाचीनाः। नव्यास्तु, एकाज्ग्रहणमुत्तरार्थमित्युक्तवता भाष्यकृता [एकाच उपदेश] इत्यत्रैकाज्ग्रहणस्यानवश्यकत्वं बोधितम्। नचेह किञ्चित् त्रपो इतीति भाष्येणोत्तरार्थस्याप्यैकाज्ग्रहणस्येह करणं युक्तमिति वाच्यम्। भाष्यकृतैवाऽत्रैकाज्ग्रहणस्य वैयर्थ्योपपादितत्वात्। नच हन्तिरूपोपदेशे वधादेशस्यैकाच्त्वान्निषेधः स्यादेवेति वाच्यम्। साक्षादुपदेशसम्भवे परम्परोपदेशग्रहणे मानाभावेनादोषात्। नच श्तिपा शपेत्याद्युक्तज्ञापने ज्ञापकभूतैकाज्ग्रहणस्योत्तरार्थतया ज्ञापकत्वाऽभावाज्ज्ञापनासम्भवेन कथं यङ्लुकि तत्कार्याप्रवृत्तिरिति वाच्यम्। यङ्लुकश्छान्दसत्वेन छन्दसि दृष्टस्यैवाऽनुविधानेन सर्वेष्टसिद्धेरिति दिक्॥

ननु अनयोः पूलयोः कटं कुर्वित्यादौ यथा उभयपूलनिर्मितकटपदोत्तराम्विभक्तिगतैकत्वविवक्षणं तथैवाऽत्र इत्यत्रङस्विभक्तिगतैकत्वस्य विवक्षणादेकत्वस्य संख्यात्वेन विशेषणतया लक्ष्यानुरोधेन मत्वर्थलक्षणया एकाच्वतो ग्रहणेन च सिद्धे व्यर्थमेकग्रहणमिति चेन्न। तस्योपदेशत्वावच्छेदेनैकाचो ग्रहणमिति बोधनेन सार्थक्यात्। तेन नावधीदित्यादौ निषेधः स्थान्युपदेशे एकाच्त्वेऽप्यादेशोपदेशेऽनेकाच्त्वात्। नच [अर्द्धं नपुंसकम्] [आकडारादेका संज्ञा] इतिसूत्रद्वयस्थनपुंसकग्रहणैकाज्ग्रहणाभ्यां ज्ञापितस्य[सूत्रे लिङ्गवचनमतन्त्रमि]त्यस्य सत्त्वात्कथमुक्तप्रकारोपपत्तिरिति वाच्यम्। साक्षादुपदेशग्रहणेन चरितार्थत्वसम्भवे परम्परोपदेशाङ्गीकारे बीजाऽभावात्॥

**आदेशश्चेह वैरूप्यसम्पादक एव गृह्यते। शसिदद्योः प्रतिषेधवचनाज्ज्ञापकादिति**—अयम्भावः [अत एकहल्मध्येऽनादेशादेर्लिटि] इत्यत्राऽनादेशघटकाऽऽदेशपदेन विरूपत्वसम्पादकस्य ग्रहणम्। प्रमाणञ्चात्र शसिदद्योः प्रतिषेधवचनमेव, तथाहि, तत्रोपदेशपदेनोक्तरूपाग्रहणे स्वरूपस्याऽप्यादेशस्य ग्रहणापत्त्या यस्याऽङ्गस्य लिण्निमित्त आदेशो न भवतीत्युक्तसूत्रस्याथ शस्धातोर्ददधातोश्चापि लिण्निमित्तस्याऽऽदेशस्य सत्त्वादेवाऽप्राप्त्या निषेधो व्यर्थः सन्नुक्तार्थं ज्ञापयतीति॥

ननु उखधातोर्लिटि द्वित्वे हलादिः शेषे उत्तरखण्डाद्यवयवोकारस्य लघूपधगुणे उवङि (अतो गुणे) इतिपररूपे उवोखेति रूपसिद्धिः, अत्र पररूपात्प्राक् (इजादेश्चे)त्याम् कुतो नेत्याशङ्कां समाधत्ते–सन्निपातपरिभाषया [इजादेरि]त्याम्नेति–द्वयोः सम्बन्धस्सन्निपातस्तल्लक्षणजायमानो विधिः स्वातिरिक्तसम्बन्धविघातकशास्त्रे निमित्तं न भवतीत्यर्थः। तथा च प्रकृतिप्रत्यययोर्यः पूर्वापरीभावः सम्बन्धस्तल्लक्षणजायमानो लघूपधगुणविधिः स्वातिरिक्तलिट्परत्वसम्बन्धविघातके आमि न निमित्तम्, आमि सति लिट्परत्वव्याघातः स्प-

(१) श्तिपा शपाऽनुबन्धेन निर्दिष्टं यद्गणेन च।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि॥

ट एव । इजादेरित्यत्र गुरुमानिति नित्ययोगे मतुपो विधानान्नित्यं यो गुरुमानित्यर्थं एध वृद्धावित्यादावेवाऽऽम् न तु प्रकृते तत्प्रसक्तिरित्यन्ये ॥

ननु ऊखतुरित्यत्र पूर्वं कृते सवर्णदीर्घे तस्य पूर्वान्तवद्भावेनाऽभ्यासत्वेन (ह्रस्व) इत्यनेन कुतो न पुनर्ह्रस्व इत्यत आह—इह सवर्णदीर्घस्याऽभ्यासग्रहणेनेति—अयम्भावः । (वार्णादाङ्गं बलीयः) इत्यनया परिभाषयाऽन्तरङ्गमपि सवर्णदीर्घं बाधित्वा पूर्वं कृते ह्रस्वे ततो दीर्घे (लक्ष्ये लक्षण) न्यायेन न पुनर्ह्रस्वापत्तिः । न च पिष्टपेषणवद्ध्रस्वस्य ह्रस्वविधानस्य वैयर्थ्येन तच्छंकोत्थापनं निर्मूलमेवेति वाच्यम् । पर्जन्यवल्लक्षणप्रवृत्तेः सिद्धान्तसिद्धत्वेन फलाऽभावेऽप्यङ्गाऽवयवाऽभ्यासरूपस्थानिनि विधीयमानह्रस्वप्रवृत्तेरनिवार्यत्वात् । नच स्योन इति भाष्यकृदुक्तोदाहरणादुक्तपरिभाषाऽनित्यत्वादप्रवृत्त्या द्वित्वनिमित्तको यो बहिरङ्गह्रस्वस्तदपेक्षयाऽन्तरङ्गसवर्णदीर्घस्यैव प्रवृत्त्या पुनरुक्तदोषस्तदवस्थ एवेति वाच्यम् । (षत्वतुकोरसिद्ध) इत्येतद्घटकतुग्ग्रहणेनाऽन्तरङ्गपरिभाषाया अप्यनित्यत्वाद्ध्रस्वस्यैव परत्वात्प्रवृत्तेरिति ग्रन्थकर्तुराशयः । नव्यास्तु, अभ्यासविकारे बाध्यबाधकभावाऽभावाद्ध्रस्वदीर्घयोरेकदा प्राप्तौ (लक्ष्ये लक्षण) न्यायान्न पुनर्ह्रस्व इत्याहुः । उक्तपरिभाषया ह्रस्वहलादिशेषयोः समावेशे उक्तन्यायेन न पुनरसाविति केचित् ।

ननु क्रुधृध्व इत्येषां प्रकृत्याश्रयस्य (एकाच उपदेशेऽनुदात्तादि)ति निषेधस्य प्राप्तत्वात्, वृङ्वृञोस्तु उदात्तत्वेन (श्र्युकः किती)तिप्रत्ययाश्रयस्य निषेधस्य प्राप्तत्वाच, ग्रहणं व्यर्थम् । भारद्वाजनियमप्रापितेण्निषेधाय स्तुद्रुवादीनां सार्थक्यमित्याह-क्रादीनां चतुर्णां ग्रहणं नियमार्थमिति—नियमाकारस्तु मूल एव स्फुटत्वादत्र नोक्तः । अव्यवहितोत्तरत्वसम्बन्धानवच्छिन्नधातुत्वावच्छिन्नप्रकारतानिरूपितविशेष्यताप्रयोजकप्रत्ययघटितशास्त्रत्वं प्रकृत्याश्रयत्वम् । याथानिति । नञ्वाशब्दान्यतरप्रापित इत्यर्थः । तेन पिधू इत्यस्य सिषेधिथेत्येकमेव । यत्तु (अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे)ति न्यायेन प्रक्रमाद्वा नञ्प्रापितस्यैव नियमस्तेनोक्तधातोरुभयमिति तन्न । (उपदेशेऽत्वत)इति सूत्रे नित्यानिट इत्यस्याञ्ज्रिर्व्यावर्त्त्य इत्यर्थपरभाष्यासङ्गतिः । यदि च वाप्राप्तानियमो न स्यात्तदा तत्राऽप्यूदित्वप्रयुक्तविकल्पस्य सद्भावात्तदसङ्गतिः । मम तु क्रादिनियमेन नित्य इडिति भावः । नान्येभ्य इति—तेन बभूविवेत्यादेः सिद्धिः । नियमाकारे प्रकृत्याश्रयः प्रत्ययाश्रयः इत्युक्तन्तन्न विचार्यते । अस्तु नाम प्रकृत्याश्रयनिषेधस्य नियमः वृग्रहणस्य ववर्थेत्यत्राप्राप्तनिषेधप्रापकत्वेन प्रत्ययाश्रयस्य नियमासम्भवात् । थलोऽकित्त्वेन न तत्र प्रत्ययाश्रयनिषेधप्राप्तिः । वृञ उदात्तत्वेन नापि प्रकृत्याश्रयनिषेधप्राप्तिः । न चैवमपि वृञो नियमार्थत्वमस्त्विति वाच्यम् । तस्य विशेषरूपेणाऽत्राग्रहणात् । यद्यपि विशेषरूपेण तत्र वृञोऽपि न ग्रहणं तथाप्यप्राप्तनिषेधप्राप्तिफलकत्वेन वृञ एव ग्रहणम् । एवञ्च (श्र्युकः किति) इति निषेधो दुर्वार एवेति चेदुच्यते, (बभूथाततन्थे) ति सूत्रे छन्दसि ववर्थेति निपातनेन भाषायां वृञस्थल इटः स्वीकर्तव्यत्वाद्वृग्रहणस्य थलविषयत्वाऽयोगेन वमादीनां च कित्त्वेन नियमस्य सुस्थत्वात् ॥

ननु संज्ञाशास्त्रस्य कार्यकालपक्षे न पृथग्वाक्यार्थबोधः किन्तु विधिवाक्येन सहैवेति सिद्धान्तः । तथा च (सम्बुद्धिसुनि) इति संज्ञाशास्त्रमेकवचने ह्रस्वेति वाक्यसमुपस्थितम् ।

ततश्च, अङ्गाभिन्नैकाच्कर्मकं यद्द्विरुच्चारणं तत्र पूर्वोऽभ्याससंज्ञः स चाऽभ्यासः चङ्परकणिपरकलघुपरकः सन्वद्भवतीत्यर्थ इति माधवमतम्। तदाह—(१)संज्ञायाः कार्यकालत्वादिति—अजजागरदित्यत्र सन्वद्भाववारणाय वार्तिककृता (जागर्तेः प्रतिषेधो वक्तव्यः) इति वार्तिकमारब्धम्, भाष्यकृता तु तत्प्रत्याख्यातम्। माधवमते सन्वद्भावस्य तत्राऽप्राप्त्या तदुभयमपि विरुद्धमित्याह। ऊर्णा दीर्घ इति—तेन और्णुनवदित्यस्य सिद्धिः। नात्र सन्वद्भावोपयोगो णौ कृतादेशस्य स्थानिवद्भावेन निषेधेन वा नुशब्दद्वित्वे सत्यभ्यासेऽवर्णाऽभावात्। अर्थापयताविति—अर्थमाचष्ट इत्यर्थे णिच्यापुगागमे ततः च्लेश्चङि दीर्घे (सन्वत्)इतीत्वे च, आर्तीथपदिति सिद्धम्। चकास्तौ तूभयमिदमिति—चङ्परे णौ यल्लघु इति व्याख्याने न स्यात्। चङ्परे णौ यदङ्गमितिव्याख्याने तु स्यात्, तेन अचचकासत् अचीचकासदिति रूपद्वयं सिद्धम्। ननु येनोभयार्थेनोक्तरूपद्वयसिद्धिस्तदर्थद्वयं कथं लभ्यत इत्याह—णेर्विशेष्यं सन्निहितमिति—अत्र किम्प्रमाणमित्याकांक्षायामाह—इति व्याख्याविकल्पस्य कैयटेनैव वर्णनादिति—चङ्पर इत्यावर्त्त्य अग्लोपविशेषणत्वेन योजितस्य फलमाह-णेरग्लोपेऽपि सम्बन्ध इति—श्रिद्रुस्रुपरतोऽग्लोपित्वासम्भवेनात्रापि चङ्पर इत्येतावदेव णाविति लभ्यत इत्यवसेयम्। अगितामपि सिद्धये इति—पचिकमिशकिप्रभृतीनामित्यर्थः। इत्संज्ञकानां लोपो न णिचं प्रतीक्षत इत्याशयः॥

ननु अयधातोरात्मनेपदित्वात्ततश्शानचो विधानस्यैव युक्तत्वाच्छतृप्रत्ययासम्भवेन (२)(उदयति विततोर्ध्वरश्मिरज्जावि)ति माघश्लोके उदयतीति प्रयोगोऽनुपपन्न इत्यत आह-इटकिटकटीत्यत्रेति। कटीत्यत्र इधातोः प्रश्लेपादयतिरूपस्य सम्भवेनोक्तकाव्यप्रयोग उपपन्नः। पक्षान्तरेणोपपत्तिप्रकारमाह—यद्वा[अनुदात्तेत्त्वलक्षणमात्मनेपदमनि-

---

(१) संज्ञाया कार्यकालत्वादङ्गं यत्र द्विरुच्यते।
तत्रैव दीर्घः सन्वच्च नानेकाक्ष्विति माधवः॥ १॥
चकास्त्यर्थापयत्यूर्णोत्यादौ नाङ्गं द्विरुच्यते।
किन्त्वस्यावयवः कश्चित्तस्मादेकाक्ष्विदं द्वयम्॥ २॥
वस्तुतोऽङ्गस्यावयवो योऽभ्यास इति वर्णनात्।
ऊर्णौ दीर्घोऽर्थापयतौ द्वयं स्यादिति मन्महे॥ ३॥
चकास्तौ तूभयमिदं न स्यात्स्याच्च व्यवस्थया।
णेर्विशेष्यं सन्निहितं लघुनीत्यङ्गमेव वा॥ ४॥
इति व्याख्याविकल्पस्य कैयटेनैव वर्णनात्।
णेरग्लोपेऽपि सम्बन्धस्त्वगितामपि सिद्धये॥ ५॥
इति व्याख्यातकारिकासंग्रहः।

( २ ) उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम्।
वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम्॥
इति श्लोकाकारः।

त्यमि]ति अत्र ज्ञापकं चक्षिङो ङित्करणम् । तथा हि, चक्षिङो ङित्करणाऽभावेऽनुदात्तत्वादेवात्मनेपदसिद्धौ व्यर्थन्तदुक्तार्थं ज्ञापकम् । अस्य भाष्येऽदृष्टत्वात्पूर्वप्रकारेणैवोपपाद्यः। तदस्वीकर्तॄणान्न एव स इति भावः ॥

ननु प्यायधातोर्लिटि (लिटि धातोरनभ्यासस्य)(लिड्यङोश्चे)ति सूत्राभ्यां युगपद्द्वित्वपीभावयोः प्राप्तौ परत्वाद्द्वित्वं बाधित्वाप्यायः पीभावे (सकृद्गतौ यद्बाधितं तद्बाधितमेव) इति न्यायेन पुनर्द्वित्वं न स्यादित्यत आह–पुनः प्रसङ्गविज्ञानात्पीशब्दस्य द्वित्वमिति–घटादिगणे येऽन्यविकरणा अनूद्यन्ते तेषां तत्तत्प्रयुक्ता एव विकरणाः । ये तु भ्वादिस्था एवानूद्यन्ते स्वतन्त्रा वा पठ्यन्ते तेषां शबेव । तेषु च येऽन्यत्राऽधीता इह पठ्यन्ते तेषामर्थनियमः । येत्विहैव पठ्यन्ते तेषामुपसर्गादिनाऽर्थान्तरपरत्वेपि मित्त्वमस्त्येवेति धातुवृत्त्यादिषु स्थितं तदेतद्ध्वनयन्नुदाहरति–विघटयतीति । ननु घटधातोर्मित्त्वे (कमलभवनोद्घाटनं) (१)प्रविघाटयितेत्यादयःप्रयोगा नोपपद्यन्त इतिचेन्न । चौरादिकस्यामितो घट सघात इति धातोरुक्तरूपाऽभ्युपगमेनोपपत्तेः। नच भ्वादिस्थस्यैवोक्तधातोरत्रार्थान्तरे मित्त्वार्थमनुवादाद्दोषस्तदवस्थ एवेति वाच्यम् । अहेतौ स्वार्थे णिचि ज्ञपादिपञ्चातिरिक्ताश्चुरादयो मितो नेत्यर्थक (नाऽन्ये मितोऽहेताबि)ति निषेधात् । अनुवादसामर्थ्येन मित्त्वबाधकल्पनापेक्षया स्वतन्त्रकल्पनस्यैव न्याय्यत्वात् । नच चुरादिपठितस्यैव घटधातोः पित्त्वार्थमिहानुवाद इति वाच्यम् । तथासति तत्रैव घटिपिति पठितुं युक्तत्वात् । ण्यासश्रन्थेति युचा एव प्राप्त्या पित्वे फले विशेषाऽभावाच्चेति भावः ॥

हलादिः शेषापवाद इति—यथास्थानिकहलादिः शेषापवाद इत्यर्थः। नचाऽभ्यासविकारे बाध्यबाधकभावाऽभावादिदमसंगतमेवञ्च वस्यैव सम्प्रसारणापत्तिरिति वाच्यम्। लिट्यभ्यासस्योभयेषामित्यत्रोभयेषांग्रहणसामर्थ्यात्सामान्यत एवाऽभ्यासलोपाभ्याससम्प्रसारणविषये तन्न्यायाऽप्रवृत्तिज्ञापनेनेहादोषात् । सम्प्रसारणं तदाश्रयञ्च कार्यं बलवदिति तूक्तसूत्रस्थोभयग्रहणवैयर्थ्यापत्त्या तत्सूत्रभाष्य एव प्रत्याख्यातमिति तदुपन्यासः केषाञ्चिदयुक्त एवेति दिक् ॥

केचिद्दृघटादौ [अत्स्मृद्वृत्वर] इति सूत्रे दीर्घस्थाने ह्रस्वं पठन्ति तन्नेति माधव इति । सूत्रे दीर्घान्तपाठस्यैव सर्वसम्मतत्वाद्दृघटादावपि दीर्घान्त एव सर्वैः पठ्यते । यद्ययं ह्रस्वान्तः स्यात्तदा दृहृ इति धातुद्वयेन दद्रतुरिति रूपद्वयसिद्धौ (शॄदॄप्रां ह्रस्वो वे) ति वैकल्पिकह्रस्वविधायके दॄग्रहणस्याऽऽनर्थक्यं स्यात् । न च विदारणेऽर्थे रूपद्वयसिद्ध्यर्थं तत्र दॄग्रहणस्यावश्यकत्वेन कथं वैयर्थ्यमिति वाच्यम् । धातूनामनेकार्थत्वेनसमीहितरूपोपपत्तेरिति तदाशयः ॥

श्रा पाके, श्रै इति कृतात्वस्य श्रा इत्यादादिकस्य च सामान्येनानुकरणम् ।

---

( १ ) किरातार्जुनीयकाव्ये २ सर्गे भारवेरयं श्लोकः—

अभियोग इमान्महीभुजो भवता तस्य कृतावधेः ।
प्रविघाटयिता समुत्पतन् हरिदश्वः कमलाकरानिव ॥

[(१) लुग्विकरणालुग्विकरणयो रलुग्विकरणस्य] (२) लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति परिभाषाभ्यामिति—(स्वरतिसूति) इत्यत्र सूङिति पठितेऽपि रूपद्वयोपपत्तौ सूतिसूयत्योः पृथग्ग्रहणं व्यर्थं सत्पूर्वपरिभाषां ज्ञापयति। द्वितीया तु न्यायसिद्धा। यद्यप्युक्तपरिभाषाद्वयस्य परस्परविरोधादिहाप्रवृत्तावपीष्टसिद्धिस्तथापीहोभयोरविशेषात्प्रवृत्तिरपि युक्तैवेति भावः॥

ननु निशामनशब्दस्य शम आलोचन इत्यस्मान्निष्पन्नत्वेन विचारार्थकत्वाद्दर्शनार्थकत्वं न स्यादित्यत आह—निशामनं चाक्षुषज्ञानमिति माधव इति-(अन्यमते ज्ञापनञ्च तदर्थः। ननूक्तशब्दस्यैतदर्थकत्वाभ्युपगन्तॄणाम्मते (श्लाघन्हुङ् स्था) इत्यत्र ज्ञीप्स्यमानो बोधयितुमभिप्रेत इति वृत्तिग्रन्थे सङ्गतेऽपि मारणादिकञ्च तस्यार्थः। एवञ्च माधवमतेऽप्युक्तग्रन्थस्य सङ्गतिः। ननु ज्ञाधातोर्ज्ञपधातोश्च णौ मित्वाद्ध्रस्वेन भाव्यमित्याशंकते-कथं विज्ञापना भर्तृष्विति—समाधत्ते—माधवमते चाक्षुषज्ञाने मित्वाऽभावादिति। एवञ्च ज्ञाधातोर्बोधनेऽर्थे ज्ञापयति, ज्ञपेस्तु ज्ञपयतीति माधवमते रूपद्वयं बोध्यम्॥

ननु अनुपसर्गस्यैव ज्वलादेर्वैकल्पिकमित्वं सोपसर्गस्य तु नित्यमेव एवञ्च प्रज्वालयतीत्यनुपपन्नमित्याह—कथं तर्हि प्रज्वालयति उन्नामयतीति। उत्तरयति—घञन्तात्तत्करोतीति णाविति।

ननु (नोदात्तोपदेश) इति प्रतिषेधात्क्रमेर्घञि क्रम इत्येवं नतु क्राम इति तथा च संक्रामयतीत्यनुपपन्नमित्याह-कथं संक्रामयतीति—समाधानमाह-'मितां ह्रस्व' इतिसूत्रे-वाचित्तविराग इत्यतो वेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणादितिवृत्तिकृदिति। एवञ्च क्वचित् णौ मितां ह्रस्व इत्यस्य न प्रवृत्तिरिति भावः। एतेन

इति जित्वा दिशो जिष्णुर्न्यवर्तत रथोद्धतम्।
रजोविश्रामयन् राज्ञां धुर्यान् विश्रमयेति सः॥

इति व्याख्यातम्। घञन्तात्क्रमशब्दात्प्रज्ञाद्यणि क्रामशब्दं स्वीकृत्य ततस्तत्करोतीति णावुक्तप्रयोगसिद्धिरिति केचित्।

ननु (न कम्यमिचमामि) त्यनेन दर्शनार्थं शाम्यतेर्मित्त्वाभावविधानेन दर्शनातिरिक्तार्थं मित्त्वाद्वक्ष्यमाणप्रयोगानुपपत्तिरित्याह—कथं तर्हि (३) निशामय तदुत्पत्तिमिति—चौरादिकस्य शम आलोचने इत्यस्योक्तरूपम्। नचैवं रीत्योक्तप्रयोगनिष्पत्तावपि

---

(१) स्वरतिसूतीतिसूत्रे सूङिति वक्तव्ये सूतिसूयत्योः पृथङ्निर्देशो हि परिभाषायां कैयटमते ज्ञापकः। अस्याः कार्यं साहचर्यपरिभाषया सम्पाद्य भाष्ये नेयं पठिता।

(२) लक्षणानुसन्धानपूर्वकं विलम्बोपस्थितिकं लाक्षणिकम्। तत्तद्विभक्तिविशेषाद्यनुवादेन विहितः शीघ्रोपस्थितिकः प्रतिपदोक्तस्तयोर्मध्ये प्रतिपदोक्तस्यैव ग्रहणम्। विलम्बोपस्थितिकत्वशीघ्रोपस्थितिकत्वयोरेव परिभाषायां वीजत्वम्। भुवश्च महाव्याहृतेरित्यत्र महाव्याहृतिग्रहणादनित्या चेयम्।

(३) सावर्णिः सूर्यतनयो यो मनुः कथ्यतेऽष्टमः।
निशामय तदुत्पत्तिं विस्तराद्गदतो मम॥
अयं दुर्गासप्तशत्याः प्रथमश्लोकः।

नार्थसङ्गतिरिति वाच्यम् । (१)शाम्यतिवद्धातूनामनेकार्थत्वात्तत्सङ्गतेरिति भावः ॥

ननु पै धातोर्लुङि अपासीदितीष्टरूपं न स्यात् ( घुमास्थे ) त्येतद्विहितेत्वापवादस्य 'एर्लिङी'त्येत्वस्य 'गातिस्थे'ति सिज्लुकश्च प्राप्तेरिति चेन्न । (लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमि)ति परिभाषयाऽऽत्त्वनिष्पन्नस्य वा इत्यस्य लाक्षणिकत्वात्ततः प्रतिपदोक्तस्य तस्य तत्तत्सूत्रे ग्रहणबोधनेनाऽनुपपत्तेरभावादित्याह—**घुमास्थेतीत्वं तदपवाद एर्लिङीत्येत्वमिति** ।

**आदादिकोऽयमिति हरदत्तः फले तु न भेद इति** । ननु गाधातोर्लेटि तत्स्थाने आतामि शपि गा आतामिति स्थितौ ( वार्णादाङ्गं बलीयः) इति परिभाषया वर्णनिमित्तककार्यादङ्गनिमित्तककार्यस्य बलवत्त्वबोधनेन 'आतो ङितः' इत्यस्य दीर्घात्प्रागेव प्रवृत्तौ फलभेदस्य स्पष्टत्वात्तन्मूलोक्तमयुक्तमिति वाच्यम् । स्योन इति भाष्योदाहरणादुक्तपरिभाषानित्यत्वेन फलभेदाभावेन मूलोक्तस्य युक्तत्वात् । नचोक्तधातोश्शानचि मुकि फलभेद इति वाच्यम् । वार्णशास्त्रीयस्थानितासमानाधिकरणस्थानिताकत्वरूपसमानकार्यित्व एवोक्तपरिभाषाप्रवृत्त्यभ्युपगमेनादोषादिति भावः ॥

ननु (नेर्गदे)ति सूत्रे मारूपस्य ग्रहणात्तस्मिन्नुत्तरपदे उपसर्गस्थनिमित्तात्परस्य नस्य णत्वविधानादिह शिद्विषये आत्वाप्राप्त्या मारूपत्वाऽभावेनाऽशिद्विषये आत्वेऽपि तस्य लाक्षणिकत्वादग्रहणेन च गामादाग्रहणेष्वविशेषेऽपि मीनातिमिनोतीत्यादिना कृतात्वयोरपि ग्रहणापत्त्या तदनङ्गीकारेण च सर्वथा णत्वस्य दुर्लभत्वात्प्रणिमयते इति न स्यादत आह—**अत्र घुप्रकृतिमाङिति पठित्वा ङितो माप्रकृतेरपि ग्रहणस्येष्टत्वादिति** । घुश्च प्रकृतिश्च माङ्चेति द्वन्द्वे कस्य प्रकृतिरित्याकांक्षोदये सामीप्यात्पूर्वोत्तरयोरेवेति ( दाधाघ्वि)ति सूत्रभाष्ये सिद्धान्तितत्वेन प्रणिदयत इत्यत्रैव तत्रापि णत्वं सुलभमिति दिक् ॥

**षत्वपक्षे णत्वमिति** । नन्विदमनुपपन्नं षत्वस्य पदद्वयापेक्षत्वाद्बहिरङ्गत्वेनासिद्धत्वादिति चेन्न । धातूपसर्गयोः कार्यमन्तरङ्गमित्यभियुक्तोक्त्या षत्वस्यान्तरङ्गत्वबोधनेन प्राक् प्रवृत्तेः । (पूर्वं धातूपसर्गेण युज्यते पश्चात्साधनेने)ति भाष्यमपि तत्र मानम् । पूर्वं धातोः साधनेन योगः पश्चादुपसर्गेणेति **मतान्तरे तु नैव णत्वमित्यलम्** ॥

ननु व्येञो लिटि णलि (न व्यो लिटी)त्यात्वनिषेधे द्वित्वे परत्वाद्धलादिः शेष इत्यनेनाऽभ्यासाऽवयवयकारस्य लोपे सम्प्रसारणाऽप्राप्त्या विव्यायेति रूपन्न स्यादत आह—**परमपि हलादिः शेषं बाधित्वा यस्य सम्प्रसारणमिति**—अत्र प्रमाणं ( लिट्यभ्यासस्योभयेषामि)त्यत्रोभयग्रहणम् । वच्यादीनां ग्रह्यादीनाञ्च ग्रहणार्थमेव सूत्रे तद्ग्रहणमनुवृत्त्यैव सिद्धे व्यर्थं तद्ग्रहणं ज्ञापयति परमपीति भावः ।

इति भ्वादयः ॥

---

( १ ) यथा शाम्यतेर्निशामयतीत्यादौ दर्शने प्रयोगस्तथा चौरादिकशमधातोरपि श्रवणे वृत्तिर्भविष्यतीत्यर्थः ॥

# अथ तिङन्तेऽदादिप्रकरणम् ।

ऋतेरीयङ्—'वञ्चिलुञ्च्यृतश्चे'ति निर्देशात् 'कमेर्णिङ्' इति निर्देशाच्च इका निर्दिष्टत्वात्तोऽयं धातुर्ह्रस्वकारान्तः । यत्तु ईयङोदीर्घोच्चारणात्तान्तोऽयं धातुः, इदन्तत्वे हि सवर्णदीर्घेणैव सिद्धेरियङमेव कुर्यादिति, तन्न, 'एनेरेकाच'इति याणापत्तौ सवर्णदीर्घस्य दुर्लभत्वात् । न च ऋतेर्यङ्विधौ (अकृत्सार्वे)ति दीर्घोपपत्तेरीयङ् विधानं तान्तत्वे लिङ्गं स्यादेवेति वाच्यम् । यङ्विधौ 'सन्यङोरि'ति द्वित्वापत्तेरिति भावः ॥

ननु जक्षस् अतुसिति स्थितौ 'गमहने'त्युपधालोपे तस्य 'अचः परस्मिन्नि'ति स्थानिवत्त्वेन व्यवधानात् खर्परत्वाऽभावाच्चर्त्वाऽप्राप्त्या जक्षतुरिति न सिद्ध्येदत आह—गमहनेत्युपधालोपस्तस्य चर्विधिं प्रतीति—'न पदान्त' सूत्रेण चर्त्वम्प्रतिस्थानित्वनिषेधात्सर्वमुपपन्नमिति भावः ॥

ननु हन्तेर्लोटि मध्यमपुरुषैकवचने हौ तस्मिन् 'हन्तेर्जः' इत्यनेन हनो जादेशे 'अतोहेः' इति हेर्लुग् दुर्वार इति शंकां सामाधत्ते—अभीयतया जस्यासिद्धत्वाद्धेर्न लुगिति । यत्तु सन्निपातपरिभाषयाऽपि हेर्लुको व्यावृत्तिः सम्भवतीति तन्न । 'अतोहेः' इत्यारम्भसामर्थ्यादुक्तपरिभाषाऽप्रवृत्तेरिति ॥

वधादेशोऽदन्त इति—तेनाऽऽदेशोपदेशकालेऽनेकाच्त्वेन अवधीदित्यत्र 'एकाच' इतिण्निषेधस्याऽप्रवृत्तावपि 'अतो हलादेः' इत्यनेनेडादौ सिचि प्राप्ताया वृद्धेरल्लोपस्य स्थानिवत्त्वेन व्यवधानाद्व्याप्रवृत्तिरिति भावः ॥

अयं दर्शनेऽपीति—'विश्वारूपा अभिचष्टे शचीभिः' इत्यत्र दर्शनार्थत्वेन व्याख्यातत्वादिति भावः । नुम् तु न अन्तेदित इति व्याख्यानादिति—'इदितो नुम् धातोरि'ति नुम्विधौ 'गोः पदान्ते' इत्यतोऽन्त इत्यास्यानुवृत्याऽन्त्यावयवेकारेत्संज्ञकधातोरेव नुमिति भावः । एवञ्च नुमागमसंकोचच्छेदाय चक्षिङ इकारस्थाने अकार एव वक्तुमुचित इति ॥

ननु अनुदात्तत्वेनैव तङः सिद्धौ ङकारोच्चारणं व्यर्थमित्यत आह—ङकारस्त्विति । इदं माधवाऽनुरोधेन । एतस्य मूलोक्तपरिभाषायां ज्ञापकत्वेन भाष्येऽनुपन्यासात्स्फायन्नित्यादिप्रयोगा असाधव एवेति परे ।

अत्र भाष्ये ख्शादिरयमादेश इति—अयम्भावः 'चक्षिङ ख्याञ्' इत्यनेन न चक्षिङः ख्याआदेशः किन्तु ख्शाञादेश एव, तेन पुंख्यानमित्यत्र न 'पुमः खय्यम्परे' इति रुत्वमित्यादि सन्धावेवोक्तम् । असिद्धकाण्डे (शस्य योवेति स्थितमि)ति तेन णत्वप्रकरणान्तरमिति शेषः । अत एव शकारेण व्यवायान्न 'कृत्य च' इत्यनेन पर्याख्यानमित्यत्र णत्वम् । नापि सुप्रख्येन निर्वृत्तं सौप्रख्यं तत्र भवः सौप्रख्यीय इत्यत्र यत्वासिद्धत्वेन 'धन्वयोपधादि'ति वुञ् किन्तु छप्रत्यय एवेत्यलम् ॥

ननु 'ईशीड्जनां सेध्वयोरि'त्येकयोगकरणेनैव प्रयोजनसिद्धे पृथग्योगकरणं व्यर्थमित्यत आह—योगविभागो वैचित्र्यार्थं इति । ध्वे इत्यस्य पूर्वयोगेऽपकर्षः । से इत्यस्योत्तरत्राऽनुवृत्तिरित्येवं विचित्रबोध इत्यर्थः । नच ईशेध्वे इडभावाय योगविभागस्यावश्य-

कतया वैचित्र्यार्थकथनमयुक्तमिति वाच्यम् । भाष्यविरोधात् । इङ्जनोध्वं चेति भाष्यसम्मतपाठः ॥

ननु शासेराङ्पूर्वकत्वस्य नित्यत्वेन प्रशास्महे इत्यस्यानुपपत्त्या

इदं कविभ्यः पूर्वेभ्यो नमो वाकं प्रशास्महे ।
विन्देम देवतां वाचममृतामात्मनः कलाम् ॥

इति कविप्रयोगस्य का गतिरित्यत आह—आङ्पूर्वत्वं प्रायिकमिति । अत एवोक्तकविप्रयोगसङ्गतिः । नच प्रशास्महे इत्यत्रेच्छारूपार्थप्रतीत्यभावान्नास्य धातो रूपमिति वाच्यम् । धातूनामनेकार्थत्वात् । वचनं वाकः, वचेर्घञ् । नमोवाकं नमस्कारमिति यावत् । प्रशास्महे कुर्महे इति यावत् ॥

ननु लिङ्स्थानिकादेशस्य तिपः पित्त्वात्तस्य च(यडागम) परिभाषया याऽसुट्विशिष्टे सत्त्वात्तस्मिन् 'उतो वृद्धिर्लुकी'त्यनेन वृद्धिर्दुर्वारेत्यत आह—इह उतो वृद्धिर्न । भाष्ये पिच्च ङिन्न ङिच्च पिन्नेति व्याख्यानादिति—सार्वधातुकमपिदित्यस्यावृत्त्याऽस्य लाभः । ननु पूर्ववाक्येन ङित्त्वमपि दुर्लभमत आह—विशेषविहितेन ङित्त्वेन पित्त्वस्य बाधादिति ॥

ननु ऊर्णोतेर्लिटि णुशब्दस्य द्वित्वे उत्तरखण्डे णकारश्रवणं दुर्वारमत आह--नुशब्दस्य द्वित्वमिति—उपदेशे न एव न तु णः' स तु 'रषाभ्यामि'त्यनेन भवति, तस्य द्वित्वदृष्ट्याऽसिद्धत्वान्नुशब्दस्यैव द्वित्वम्' यद्बुद्ध्या शास्त्रप्रवृत्तिस्तद्दीयद्वितीयप्रयोगस्यैव साधुत्वान्व्याख्यानान्नोत्तरखण्डे णकारश्रवणं पूर्वोच्चारेण व्यवधानाच्च न शास्त्रेण णत्वप्रसक्तिरिति भावः । ननु (पूर्वत्रासिद्धीयमद्वित्वे) इति परिभाषया णत्वस्यासिद्धत्वाऽभावबोधनान्णकारस्यैव द्वित्वेनोत्तरखण्डे तच्छ्रवणं दुर्वारमेवेत्यत आह-(१) पूर्वत्रासिद्धीयमद्वित्वे इति त्वनित्यमिति—पूर्वत्रासिद्धमित्यधिकारे भवमित्यर्थः । गहादेराकृतिगणत्वाच्छः । यत्पूर्वत्राऽसिद्धीयं शास्त्रं तन्नाद्वित्वे इत्यस्योपस्थितिस्तस्य च पुर्वत्रेत्यनेनान्वयाद्द्वित्वभिन्ने पूर्वत्र कर्त्तव्ये इदमसिद्धमित्यर्थः । द्वित्वं त्वन्यत्रासिद्धमभवत्येव । अत्र द्वित्वशब्देनाविशेषात्षाष्ठाष्टमिकयोर्ग्रहणम् । परिभाषाऽनित्यत्वे प्रमाणमाह--उभौ साभ्यासस्येति—अन्यथा अनधातोः 'अनिते' रित्यनेन कृतणत्वस्य द्वित्वे प्राणिणत् प्राणिणिषतीत्यादिसिद्धौ व्यर्थं सदुक्तसूत्रं परिभाषाऽनित्यत्वे ज्ञापकमिति भावः ॥

ननु 'एतेर्लिङि' इत्यनेनोपसर्गात्परस्येणोऽणो ह्रस्वविधानादभोयादित्यत्रापि ह्रस्वो दुर्वार इत्याशंक्य समाधत्ते--उभयत आश्रयणे नान्तादिवदिति—यथा द्वयोरेकः प्रेष्यस्ताभ्यां युगपद्भिन्नदेशकाय प्रेरितोऽविरोधार्थी न कस्यापि करोति कार्यन्तद्वत् पूर्वपरशब्दाभ्यामन्तादिशब्दाभ्याञ्च विरोधस्य स्फुटत्वाद्विरुद्धातिदेशस्य युगपदसम्भव इति भावः । नैतद्विषये स्थानिवद्भावप्रवृत्तिः, आनुमानिकस्थान्यादेशभावे विशिष्टस्य स्थानित्वेऽपि प्रत्येकं तयोः स्थानित्वे मानाभावात् वर्णयोरेव श्रौतस्थान्यादेशभावविधानाच्चेति बोध्यम् । नच भान्तस्य (एकदेशविकृत) न्यायेनोपसर्गत्वात्परादिवद्भावेनेकारस्ये-

(१) द्वित्वभिन्ने पूर्वत्र कर्त्तव्ये परशास्त्रमसिद्धमित्यर्थः । अत्र ज्ञापकं तु पूर्वत्रासिद्धमित्यधिकारभवं शास्त्रमेवेति । अनित्यत्वे ज्ञापकवर्णनं च नाके एव स्पष्टमिति बोध्यम् ।

ण्त्वाद्ध्रस्वो दुर्वार एवेति वाच्यम् । परिच्छिन्नपरिमाणार्थवाचकद्ध्यादिद्रोणादिशब्दानां न्यूनाधिकयोरप्रवृत्तिवत्सर्वाद्युपादानेन क्रियमाणसंज्ञायाः शास्त्रव्यापारं विना न्यूनाधिकयोरप्रवृत्तिवच्च परिच्छिन्नपरिमाणे तदप्रवृत्या दीर्घविशिष्टे भान्ते च लौकिकन्यायेनोपसर्गत्वाऽभावादुपसर्गसंज्ञायाः परिच्छिन्नपरिमाणप्रादिगतत्वादिति भावः । अन्येतु लक्ष्यानुसारात्क्वचिदुक्तन्यायानाश्रयणाददोषः इत्याहुः ॥

ननु ब्रूतेर्लोटि सिपि 'ब्रुवः पञ्चनामि' त्याहादेशे आह सिप इति स्थिताबाहः स्थानिवत्त्वेन ब्रूत्वात्ततः परस्य सिपः 'ब्रुव इडि'-ति इट् दुर्वार इत्यत आह--आत्थेत्यत्र झलीति थत्वविधानान्न भवतीति । 'आहस्थः' इत्यनेन सिप्रूपे झलि हस्य थविधानसामर्थ्यादिण् नेति कल्प्यते । अन्यथा सतीडागमे झलादित्वाभावात्तदप्राप्त्या आत्थेति रूपं न स्यादिति भावः ॥

ननु ब्रूतेर्लोटि तत्स्थाने मिपि तस्मिन्ब्रुवो गुणे मिप आनि तस्मिन्नवादेशे स्थानिवद्भावेन मिपः पित्त्वस्याऽऽनौ सुलभत्वादुक्तसूत्रेणेड्दुर्वार इत्यत आह-ङिच्च पिन्नेत्यपित्वादिणनेति । (ङच्च पिन्न पिच्च ङिन्ने)ति भाष्याद्विशेषविहितेनादिष्टङित्त्वेन पित्त्वस्य बाधात्पित्त्वाभावादेव नासाविति भावः ॥

ननु 'द्विर्वचनेऽचि' इत्यनेन द्वित्वनिषेधादिङ एव द्वित्वे उत्तरखण्डस्य गाऽऽदेशे अधीगे इति स्यान्नत्वधिजग इत्यत आह—लावस्थायामिति । एवञ्च गादेशस्य लिटो निमित्तत्वेन द्वित्वनिमित्ताज्निमित्तत्वाऽभावाद् द्विर्वचनेऽचीत्यस्याऽप्राप्त्या नोक्ताऽऽपत्तिरिति भावः । विवक्षिते वेति—लिटोविवक्षायामेवादेश इत्यर्थः । भाष्यकृन्मतमेतत्, एतन्मते त्वनैमित्तिकत्वेन सुतरामेव नोक्तसूत्रप्रवृत्तिरिति ॥

ननु पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेनेत्यभियुक्तोक्त्या अन्तरंगत्वाद्गुणादेः प्रागेव सवर्णदीर्घे यणि अध्ययै इति न स्यादत आह—गुणायादेशयोः कृतयोरुपसर्गस्य यणिति । अयम्भावः, 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेत्यस्य सुट्कात्पूर्व' इत्यत्र भाष्ये सिद्धान्तितत्वात्पूर्वं गुणादिरेव । ननु एतत्सिद्धान्तपक्षे भाष्यकृता स्वेनैव तत्रैवाऽरुचिः प्रदर्शितेत्यरुचेराह—'णेरध्ययने वृत्तमि'ति निर्द्देशाद्वेति । एतन्निर्देशान्न दीर्घाऽभावः कल्प्यते किन्तु भाष्यकृदुक्त एव । अपूर्वार्थकल्पनापेक्षया भाष्यसम्मतपक्षकल्पनस्यैव ज्यायस्त्वात् । नच [वार्णादांगं बलीयः] इति परिभाषयैव दीर्घव्यावृत्तिरिति वाच्यम् । समानाश्रय एवोक्तपरिभाषाऽप्रवृत्तेरिति दिक् ॥

अडागमे सत्यनेकाच्त्वाद्यणिति—कृताकृतप्रसंगित्वमात्रेणाऽटो नित्यत्वादियङ् बाधित्वाऽऽट् । अत एवाऽपरितोषात् असिद्धत्वादियङ एवौचित्यमित्यभिप्रायेण वा केचिदित्युक्तम् । लावस्थायामेवाडिति पक्षे तु यणेवेत्यलम् ॥

ननु 'तनादिकृञ्भ्य उः' इत्यस्य स्थाने 'तनादेरुः' इत्येव सूत्रकरणात्कृञोऽप्युप्रत्ययः स्यादेव सूत्रे कृञ्ग्रहणं व्यर्थमित्यत आह—तनादित्वादेव सिद्धे इति । तनादिसाहचर्येण तद्गणस्यैव कृञोऽत्र ग्रहणं क्रियासामान्यवाचित्वेनान्वययोग्यत्वात्तस्यैवात्रानुप्रयोगः । एवञ्च कृञ्ग्रहणं व्यर्थं सद्गणकार्यस्यानित्यत्वे ज्ञापकम् । तथा च विश्वसेदित्यत्र न शपो लुगिति । भाष्यकृता तु कृञ्ग्रहणस्य प्रत्याख्यातत्वाज्ज्ञापितेऽपि तस्य चारितार्थ्याऽभावाच्चात्रार्थे तात्पर्यं न युक्तम् । उक्तप्रयोगस्त्वार्षत्वादेव साधुरेवेत्यलम् ॥

ख्याधातुः सार्वधातुकमात्रविषय इति—अत्र प्रमाणमाह-(सस्थानत्वं नमः ख्यात्रे) इति वार्तिकम् । नमः ख्यात्रे इत्यत्र सस्थानत्वं वक्तव्यम् । अन्यथा 'शर्परे वि-सर्जनीय' इत्यनेन विसर्गः स्यादिति तदभिप्रायः । आर्द्धधातुकेऽप्यस्य प्रयोगे कृदन्ते-ऽस्मिन्परे 'शर्परे विसर्जनीय' इत्यस्याऽप्रवृत्त्या 'कुप्वोरि'ति जिह्वामूलीयो दुर्वार एव स्यात् । कुप्वोरित्यस्य 'विसर्जनीयस्य स' इत्यस्यापवादत्वमजानतो वार्तिककृत उक्ति-रिति न वाच्यम् । ख्याञादेशस्य खशादित्वप्रयोजनगणनावसरे एव तदुक्तेरिति । सं-ख्यातीति प्रयोगस्तु नास्त्येव । संख्येति प्रयोगस्तु न्यासकृन्मते ख्याञा देशस्येति बोध्यमिति ॥

चर्करीतं चेति—चर्करीतमिति यङ्लुकः संज्ञा, तेन सामर्थ्यात्तदन्तग्रहणम् । अ-दादाविति । तेन यङ्लुगन्ताच्छब्देत्र नतु तत्तद्गणप्रयुक्तः श्यनादिः । शपो लुक् च, परस्मै-पदिन उपक्रम्य पाठादस्य परस्मैपदित्वमेवेति ।

इत्यदादिप्रकरणम् ॥

---

## अथ तिङन्ते जुहोत्यादिप्रकरणम् ।

ननु आलोपस्य स्थानिवत्त्वाज्झषन्तत्वाऽभावेन धत्त इत्यादावपि भष् भावो न स्या-दत आह—वचनसामर्थ्यादालोपस्य न स्थानिवत्त्वमिति ।। अन्यथोपायसद्भावाद्व-चनसामर्थ्यकल्पनं न युक्तमित्याह—वस्तुतस्तु पूर्वत्रासिद्धे न स्थानिवदिति । एवञ्च वामनादीनां वचनसामर्थ्याश्रयणं व्यर्थमेवेति भावः ॥

ननु 'विज इडि' ति सूत्रे सामान्यतो विजधातोरुपादानादर्थनिर्देशाभावाच्चैतद्गणप-ठितस्यापि धातोस्तत्र ग्रहणात्ततः परस्येटो ङित्त्वविधानाल्लुडादौ गुणनिषेधः स्यादत आ-ह—ओविजीत्यस्यैव तत्र ग्रहणादिति । व्याख्यानात्तौदादिकस्य रौधादिकस्यैव च ग्रहणान्नेह काप्यनुपपत्तिरिति भावः ॥

पेय इति—ऋधातोर्लङि द्वित्वेऽभ्यासस्येत्वे इयङि उत्तरखण्डे गुणे रपरत्वे हल्ङ्या-दिलोपे विसर्गे आटि वृद्धौ रूपम् । लावस्थायामडिति पक्षेऽपि 'बहुलं छन्दस्यमाङि' सूत्रे बहुलग्रहणात्तदुत्तरमत्राऽऽट् 'बहुलं छन्दसी'त्येव सिद्धे 'अर्तिपिपर्त्योश्चे' त्य-त्रार्त्तिग्रहणज्ञापकेन लोके प्रयोगेऽपि छान्दसप्रकरणे पाठात्क्वचिदेव लोके साधुत्व-मिति बोध्यम् ।

इति जुहोत्यादिप्रकरणम् ॥

---

## अथ तिङन्ते दिवादिप्रकरणम् ।

ननु सूधातोर्लिटि तत्स्थाने थासि तस्य से द्वित्वे उवङि सुषुव् से इति स्थि-तौ 'स्वरति सूति' इत्यनेन प्राप्तस्य वैकल्पिकेडागमस्य पुरस्तात्प्रतिषेधारम्भ-सामर्थ्यात् 'श्र्युकः किती' ति निषेधेन क्रादिनियमादिटि सुषुविषे इत्यादि सिद्ध-मिति भावः ॥

ज्ञाजनोर्जा—ज इति ह्रस्वोच्चारणेऽपि 'अतो दीर्घो यञि' ति दीर्घे जानातीत्यादिसिद्धौ जाग्रहणस्य (अङ्गवृत्तौ पुनर्वृत्तावविधिः) इत्येतज्ज्ञापकत्वम्, तेन पाधातोः पिबादेशे कृते न गुणः। पिबादेशस्यादन्तत्वाश्रयणेन गुणवारणन्तु समाधानान्तरमिति भावः॥

ननु 'शल इगुपधादनिटः क्सः' इत्यनेन क्सस्य सिद्धत्वे तत्सूत्रविहितक्सस्य किं फलमित्यत आह—पुषाद्यङपवाद इति॥

ननु श्लिष इत्येतद्विहितक्सस्य पुषादिसूत्रविहिताङपवादत्ववच्चिणपवादत्वमपि स्यादत आह—पुषाद्यङपवादो न तु चिणः पुरस्तादपवादन्यायादिति। (१)(पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तराणि) ति तत्स्वरूपम्। तथा च पुरस्तादपवादस्य क्सस्य अनन्तरस्याङ एवापवादत्वं न तूत्तरस्य चिण इति भावः॥

ननु 'आलिङ्गने' इत्यस्य (अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे) ति न्यायेन श्लिष इत्येतद्विहितक्सस्य नियमत्वमेव स्यादत आह—योगविभागसामर्थ्याच्छल इगुपधादित्यस्याप्ययं नियम इति। यदि श्लिष इति प्राप्तक्सस्यैव नियमः स्यात्तदा योगविभागस्य वैयर्थ्यमेव स्यादिति भावः॥

इति दिवादिप्रकरणम्॥

## अथ तिङन्ते स्वादिप्रकरणम्।

बभूथाततन्थेति—ननु क्रादिनियमादेव सिद्धे ववर्थग्रहणं निगमे एवेति नियमार्थन्तदाह—तेन भाषायां थलीडिति।

श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वेति व्याकरणान्तरमिहाप्याश्रीयत इति। 'सदेः परस्य लिटी' ति सूत्रस्थः (परिषस्वजे) इति भाष्यप्रयोगः, 'अत एक हलि' ति सूत्रस्थो (देभतुरि)ति भाष्यप्रयोगश्चेह मानम्। (दम्भेश्चे)ति 'अत एके' ति सूत्रस्थं वार्त्तिकम्॥

इदं कित्त्वं पिदपिद्विषयकमिति सुधाकरादय इति—अत्रारुचिबीजन्तु श्रन्थिग्रन्थीत्येव लिट्पदस्य कित्पदस्य च कर्त्तव्यतापत्त्या गौरवरूपम्। मम तु व्याकरणान्तरेऽपि असंयोगादिति कित्प्रकरण एवैतदिति तयोरकर्त्तव्यत्वं स्पष्टमेव। अत एव भाष्ये प्रथमोपस्थितणलं विहाय देभतुरित्युदाहृतं दम्भेश्चेत्येत्वविधायके इत्यलम्॥

इति स्वादिप्रकरणम्।

---

(१) प्रथमोपस्थितापवादशास्त्राणि पश्चादुपस्थितविधिशास्त्राणि बाधन्ते इति परिभाषार्थः। पूर्वोपस्थितानन्तरबाधेन चारितार्थ्यसम्भवे पश्चादुपस्थितबाधे मानाभाव एवात्र बीजम्।

# अथ तिङन्ते तुदादिप्रकरणम् ।

ननु रमित्यस्य मित्त्वादन्त्यादचः परत्वेन विधानात् (अस्जो रोपधयोरमन्यतरस्यामि)तिसूत्रे रोपधयोरिति षष्ठीनिर्देशो व्यर्थ इत्यत आह—**स्थानषष्ठीनिर्द्देशाद्रोपधयोर्निवृत्तिरिति** । अयम्भावः, स्थाने हि प्रसङ्गः । तेन रोपधयोः प्रसंगे रम् प्रयुज्यत इत्यर्थः । प्रयुज्यमानो रम् मित्त्वादन्त्यादचः पर एव । देशान्तरे यस्य विधानं नास्ति तस्य स्थानिदेश एव विधानं युक्तम् । स्थानषष्ठीनिर्द्देशसामर्थ्यात्तु देशान्तरे प्रयुज्यमानस्यापि रमो रोपधोर्निवर्त्तकत्वम् । तस्मात् श्नमः प्रत्ययागमत्वे इव रमादेशागमत्वे द्वेऽपीष्टे इति ॥

ननु आशीर्लिङि सम्प्रसारणं बाधित्वा परत्वाद्रमि(सकृद्गति) न्यायेन सम्प्रसारणाऽभावे (१)(पुनः प्रसङ्गविज्ञानात्सिद्धमि)ति न्यायेन सम्प्रसारणेऽपि आद्गुणे भर्ज्यादित्यापत्तिरित्यत आह [ **क्ङितिरमागमं बाधित्वा सम्प्रसारणं पूर्वविप्रतिषेधेनेति** । सम्प्रसारणरमोर्भृज्जति भ्रष्टेत्यादावकाशादिति भावः । कृताकृतप्रसङ्गित्वमात्रेण सम्प्रसारणस्य नित्यत्वमपि सुवचम् । नच ऋकारान्तर्गतरेफमादाय रमोऽपि नित्यत्वमिति वाच्यम् । वर्णग्रहणे वर्णैकदेशाग्रहणस्य भाष्ये स्पष्टत्वादिति दिक् ॥

ननु यस्य नुकि तस्य चुत्वेन चकारे लिटि द्वित्वेऽभ्यासकार्ये 'ऋच्छती' ति गुणे त्रिहल्त्वान्नुट् न स्यादत आह—**द्विहल्ग्रहणस्याऽनेकहल्उपलक्षणत्वान्नुडिति** ॥ न द्विहल्ग्रहणस्यानेकहल्उपलक्षणत्वे प्रमाणाभावात्कथन्तत्र नुडिति वाच्यम् । अदुपधस्य चेद्श्नोतेरेवेति नियमाद् द्विहल्ग्रहणस्य प्रत्याख्यानं कुर्वतो भाष्यकारस्यैव तत्र प्रमाणत्वेन तदुपपत्तेः । न च (२) (वार्णादाङ्गं बलीयः) इति परिभाषया गुणे तुकोऽप्राप्त्या त्रिहल्त्वाऽभावादुक्ताऽनुपपत्त्यभावेन द्विहल्ग्रहणस्यानेकहल्उपलक्षणत्वाऽभ्युपगमो व्यर्थ एवेति वाच्यम् । 'च्छ्वोः शूडनुनासिके च'त्यत्र सतुङ्निर्देशेनोक्तपरिभाषायास्तुग्विषयेऽनाश्रयणादिति दिक् ॥

**म्रियतेर्लुङ्लिङोश्च** । ङित्त्वं स्वार्थमिति । 'तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमि'त्यनेन 'माहि मृते'त्यत्र ङितः परस्य लादेशसार्वधातुकस्यानुदात्तत्वे कृते धातोरुदात्तत्वम् । सत्यङित्त्वे तु प्रत्ययस्योदात्तत्वे धातोरनुदात्तत्वं स्यात् । न च सिज्लोपस्यासिद्धत्वाल्लसार्वधातुकस्य ङितः परत्वस्य दुरुपपादत्वात्कथं तस्यानुदात्तत्वमिति वाच्यम् । ङित्वसामर्थ्येन सिज्लोपस्यासिद्धत्वाऽभावज्ञापनात् । अमृतेत्यत्राऽडागमस्यैवोदात्तत्वेन नान्यत्किञ्चित्प्रयोजनं मृङो ङित्त्वस्येति तत्राऽड्वारणाय माङः प्रयोगे 'तिङ्ङतिङः' इति तिङन्तनिघातेऽपि ङित्त्वं व्यर्थमेवेति हिशब्दप्रयोगः, तत्प्रयोगे तु 'हि च' त्यनेन तिङन्तनिघातनिषेधादिष्टस्वरसिद्धिरित्यलम् ॥

---

(१) तुल्यबलपुरुषद्वयस्यैको भृत्यः पर्यायेण कार्यसम्पादको भवति न युगपन्नानादिक्षु च कार्ये प्रेषितः, तथा लक्ष्यप्रयोजनस्यापि शास्त्रद्वयस्य कुत्रचिल्लक्ष्ये युगपत्प्रवृत्त्यसम्भवेनाऽप्रतिपत्तौ सत्यां परविध्यर्थमिदं विप्रतिषेधसूत्रम् । कृते च तस्मिन् पूर्वशास्त्रप्राप्तौ सत्यां तदपि भवत्येवेति मूलोक्तन्यायसिद्धिः । (२) वर्णोद्देश्यककार्यादङ्गोद्देश्यककार्यं बलवदित्यर्थः ।

ननु तृपेर्लुङि (स्पृशमृशे) ति सिज् विकल्पः कुतो नेत्यत आह—स्पृशमृशेतिसिज्विकल्पः पौषादिकस्यैव अङपवादत्वादिति । (उत्सर्गसमानदेशा अपवादाः) इति न्यायादिति भावः । किञ्चोक्तवार्त्तिके पौपादिकतौदादिकयोर्ग्रहणे पक्षे सिजभावे च्लेरेव श्नमोपपत्तौ 'च्लिः क्वापि न श्रूयत' इति भाष्यविरोधो दुर्वारः स्यादित्यलम् ॥

ननु (१)(पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः) इति परिभाषया परत्वादियङः प्राग्लघूपधगुणः स्यादत आह—अन्तरंगत्वादियङिति । (२)(नाजानन्तर्ये बहिष्ट्वक्लृप्तिरि) ति निषेधादन्तरङ्गपरिभाषाऽप्रवृत्त्या दोषस्य तादवस्थ्यमेवेति वाच्यम् । गुणेयङोः समकालप्राप्तिकत्वेनोक्तनिषेधपरिभाषाऽप्रवृत्तेरिति भावः ॥

इति तुदादिप्रकरणम् ।

## अथ तिङन्ते रुधादिप्रकरणम् ।

जश्त्वं धुत्त्वमित्यादि । अत्र प्रक्रियाप्रदर्शनमात्र एव तात्पर्य्यम्, नतु क्रमदर्शने । शिण्ढीति सानुस्वार एव पाठः, अनुस्वारस्याऽऽदिष्टादचः पूर्वत्वेन स्थानिवत्त्वाप्रवृत्तावपि (दीर्घादाचार्याणामि) त्युत्तरं (अनुस्वारस्य ययि) (वा पदान्तस्य) (तोर्लि) (उदःस्था) (झयो हो) (शश्छोटी)ति पट्सूत्रीपाठोत्तरं (झलां जश्झशि) (अभ्यासे चर्च) (खरि च) (वाऽवसाने) (अणोऽप्रगृह्यस्ये)ति पञ्चसूत्रीपाठ इति भाष्यसम्मताष्टाध्यायीपाठपक्षे परसवर्णदृष्ट्या (झरो झरी) त्यस्य (झलां जशि) त्यस्य चाऽसिद्धत्वेन यय्परत्वाऽभावात्परसवर्णाऽप्राप्तेरिति ।

इति रुधादिप्रकरणम् ।

## अथ तिङन्ते तनादिप्रकरणम् ।

(३) संज्ञापूर्वको विधिरनित्य इति न भवतीत्यात्रेयादय इति । अत्रारुचिबीजन्तु तनित्यत्वे भाष्यानुक्तत्वमेव ॥

ननु कात्पूर्वग्रहणं कालावधारणार्थं तदा सुट् भवति यदा कृतः कात्पूर्वो भवतीति तेनान्तरङ्गमपि द्वित्वादिकं बाधित्वा पूर्वं सुडिति 'अडभ्यासव्यवायेऽपी'ति न कार्य्यमिति तत्प्रत्याख्यातं कात्पूर्व इत्यपि प्रत्याख्यातम्भाष्यकारेणेत्यत आह—पूर्वं धातुरिति । उपसर्गेणेत्यस्य तदर्थेनेत्यर्थः । अत एवाऽनुभूयत इत्यत्र कर्मणि लकारसिद्धिः एवञ्चा-

(१) बलवत्त्वप्रयोजकपरिभाषाप्रकरणस्थेयं परिभाषा । अर्थस्तु पूर्वशास्त्रात्परं शास्त्रं बलवत् विप्रतिषेधसूत्रबलात् । परशास्त्रान्नित्यं शास्त्रं बलवत् । नित्यशास्त्रादन्तरङ्गशास्त्रं बलवत् । अन्तरङ्गशास्त्रादपवादशास्त्रं बलवत् इति । पूर्वात्परं बलवत् स्वोत्तरत्वादित्याद्यनुमानप्रकारो बोध्यः ।

(२) अज्निष्ठान्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्त्तव्ये यदन्तरङ्गप्राप्तिस्तत्र च कर्त्तव्ये न बहिरङ्गत्वप्रयुक्तासिद्धिरित्यर्थः । अत्र षत्वतुकोरिति सूत्रस्थं तुग्रहणं ज्ञापकम् ।

(३) विधेयताप्रयोजकसंज्ञाशब्दघटितं शास्त्रमनित्यमित्यर्थः । इयं परिभाषा भाष्ये नोक्ता भाष्यकृतेति ध्येयम् ।

न्तरङ्गार्थंकोपसर्गनिमित्ताड्द्वित्वाद्यपेक्षया सुडन्तरङ्ग इति तदाशयः। लावस्थायामडिति-पक्षे तु सम्परिभ्यां परत्वयोग्यस्य करोतेः सुडिति तदर्थात्सर्वथा पूर्वं सुडित्यदोषः॥

ननु 'समवाये चे'त्यनेन सम्पूर्वकस्य करोतेर्भूषणसंघातयोरर्थयोरेव सुटो विधानाद्धन्या-र्थे तदविधानेन 'संस्कृतं भक्षा' इति सूत्रमसङ्गतिमाप्नुयादित्यत आह—सम्पूर्वस्य क्व-चिद्भूषणेऽपि सुडिति। अत्रार्थेऽवतरणदलोक्तसूत्रस्यैव ज्ञापकत्वमित्यवसेयम्॥

इति तनादिप्रकरणम्।

# अथ तिङन्ते क्र्यादिप्रकरणम्।

अवष्टभ्नोति। ननु [वेः स्कभ्नातेर्नित्यमि]ति सूत्रे श्नाप्रत्ययनिर्देशेन श्नाप्रत्यय-सद्भाव एव षत्वस्य न्याय्यत्वेन श्नुप्रत्ययपक्षे षत्वं कथमिति चेन्न। धातुनिर्देशे श्तिप्प्रत्यये कृते विकरणस्यावश्यकत्वेन शपवादश्नुश्नाप्रत्ययप्रवृत्तेरवश्यंस्वीकार्यत्वात्तत्राऽन्य-तरोच्चारणस्य साधुत्वार्थत्वेनेतरनिवृत्त्यर्थत्वानभ्युपगमादिति भावः॥

दीर्घनिर्देशसामर्थ्यान्न ह्रस्व इति। ननु ज्ञाजत्तोर्जं इत्येव सूत्रकरणे (अतोदी-र्घो यञि) ति दीर्घसिद्धौ दीर्घग्रहणस्य (१)(अङ्गवृत्तौ पुनर्वृत्तावविधिरि)ति परिभाषाज्ञाप-कत्वस्याऽऽकरे स्थितत्वाद्दीर्घनिर्देशस्योपक्षयेन कथं ह्रस्वाभावे ज्ञापकत्वमिति चेन्न। सत्येव ह्रस्वाभावे दीर्घनिर्देशस्योक्तपरिभाषाज्ञापकत्वात्। सति ह्रस्वे तु पुनरंगकार्यस्य प्रवृत्त-त्वान्न ज्ञापकत्वम्। एवञ्च न ह्रस्वाभावज्ञापने किमपि बाधकमिति भावः॥

इति क्र्यादिप्रकरणम्।

# अथ तिङन्ते चुरादिप्रकरणम्।

तेषामिह ग्रहणं प्रपञ्चार्थमिति। (२)(अनिर्दिष्टार्थाः स्वार्थे भवन्ती) ति परि-भाषया स्वार्थे विधानार्थत्वात्प्रपञ्चार्थत्वकथनं तेषामयुक्तमिति वाच्यम्। सत्यशब्दस्य कृञर्थं णिच्यापुगित्यर्थक (सत्यस्य कृञ्यापुगि) ति भाष्यविरोधात्। न च सत्यापग्रहण-स्याऽऽपुङ्निपातनार्थमावश्यकत्वमिति वाच्यम्। अर्थवेदार्थभाष्यके वार्तिक एवोक्तशब्द-ग्रहणेनापुग्सिद्धेरिति भावः॥

ननु चितेरिदित्करणं व्यर्थमित्यत आह-चिन्तेति पठितव्ये इदित्करणं णिचः पाक्षिकत्वे लिङ्गमिति। अयम्भावः व्यर्थमिदित्करणं चुरादेर्णिज्चेति ज्ञापयति। णिचो नित्यत्वे तु तेन व्यवहितत्वान्नलोपाप्राप्त्या व्यर्थमेवेदित्करणं स्यात्। न च णिजन्तात्क्वि-पि नलोपाभावार्थमिदित्करणस्य चारितार्थ्यम्। न च णिलोपस्य स्थानिवद्भावेन व्यवधा-नादेव नलोपवारणमिति वाच्यम्। [क्वौ विधौ न स्थानिवदि]ति स्थानिवत्त्वनिषेधेन दोषस्य तादवस्थ्यादिति वाच्यम्। 'असिद्धवदत्राऽभादि'ति णिलोपस्यासिद्धत्वेन क्वौ वि-

(१) अङ्गवृत्तेऽङ्गाधिकारकार्ये जाते पुनरन्यस्याऽगंकार्यस्य विधानं न भवतीत्यर्थः। ज्यादादीयस इत्याद्विधानेन ज्ञापिता चेयम्। द्वयोरिति निर्देशादनित्या च।

(२) येषां प्रत्ययानामार्थो न निर्दिष्टास्तेषां स्वार्थे विधानं भवतीत्यर्थः। प्रत्यय इति महासंज्ञाबलादर्थाकांक्षायामन्यानुपस्थितिरेवास्या बीजम्, स्पष्टाचेयं सुपिस्थ इत्यादिसूत्रेषु भाष्ये।

धावित्यस्य क्विशब्दमुच्चार्य विहितविधिविषयत्वेनादोषात्। न च क्वौ लुप्तं न स्थानिवदिति स्थानिवद्भावनिषेधात्क्विबन्ते दोषाऽभावार्थमिदित्करणस्यावश्यकत्वे ज्ञापकत्वायोग इति वाच्यम्। तस्यासार्वत्रिकत्वादिति प्राञ्चः। तन्त्रिमन्त्र्यादाविदित्त्वस्य व्यभिचरितत्वात्क्वौ लुप्तमित्याश्रयणे ज्ञापकत्वौचित्याच्चिन्त्येति पाठेऽर्धमात्रागौरवाच्च न णिच्शास्त्रबाधे मानमिति न भाष्यकृता णिचो वैकल्पिकत्वमुक्तन्नापि कैयटकृतेत्यपि बोध्यमिति प्राहुर्नागेशाः।

एतच्च ज्ञापकं सामान्यापेक्षमिति। सर्वेऽपि चुरादयो धातवो विकल्पेन णिचं लभन्त इत्यर्थकमिदित्करणं ज्ञापकमित्यर्थः। न च ज्ञापकस्य सामान्यापेक्षत्वे 'आधृषाद्वे' त्यस्य वैयर्थ्यं सर्वचुरादीनां वैकल्पिकणिज्ज्ञापनेनैतसूत्रविहितवैकल्पिकणिचोऽकिञ्चित्करत्वादिति वाच्यम्। ज्ञापकसिद्धस्याऽसार्वत्रिकत्वेन सार्थक्यात्। एवञ्चास्मिन्पक्षे आधृषीयाणामेवैच्छिको विकल्पः, ज्ञापकस्य सामान्यापेक्षत्वादेव वृत्तिकृदुदाहृतस्य जागाणेत्यादेः संगतिः। अन्यथोक्तप्रयोगानुपपत्तिः। अन्येषां तु शिष्टप्रयोगानुपपत्तिः। अन्येषां शिष्टप्रयोगाद्व्यवस्थित इति एतत्पक्षस्य [भाष्यविरुद्धत्वं] दर्शयति, तथा हि ज्ञापकस्य सामान्यापेक्षत्वे 'घुषिरविशब्दने' इति सूत्रस्थभाष्यं विरुणद्धि, तत्र हि, विशब्दनार्थस्योक्तधातोश्चुरादित्वेन नित्यणिजन्तत्वाद्भूवादेश्चाऽ विशब्दनार्थ एव वृत्तेः सूत्रेऽविशब्दन इति व्यर्थमित्याशंक्य, एतदेव ज्ञापयति घुषेर्विशब्दने विभाषा णिच् तेन जुघुषिरिति सिद्धमित्युक्तम्, अत एव चुरादावित्त्वमति सार्थकम्॥

विशेषापेक्षमिति। असंयोगोपधेकारान्तचुरादेर्णिचो विकल्प इत्येवं रूपमित्यर्थः। ज्ञापकस्य विशेषापेक्षत्वादेव, 'आधृषाद्वे' त्यस्य चरितार्थ्यम्। न च पूर्वपक्षस्य शैथिल्ये वृत्तिकृदुक्तग्रन्थस्य कथं सङ्गतिरिति वाच्यम्। भ्वादेराकृतिगणत्वेन तत्रत्यधातोरुक्तरूपोपपत्तेः॥

यत्तु इदित्करणाद्यन्त्रतीति माधवेनोक्तं तच्चिन्त्यमिति। नस्योपधत्वाऽभावेन नलोपाऽप्रसक्त्या ज्ञापितेऽपि चारितार्थ्याऽभावादिति भावः॥

ननु ह्रस्वोच्चारणेऽपि परतीत्यादिरूपसिद्धावुक्तरूपसिद्ध्यर्थं कथं दीर्घोच्चारणं णिचो वैकल्पिकत्वं ज्ञापयतीत्याह—दीर्घोच्चारणं णिचः पाक्षिकत्वे लिंगमिति।

इररारामपवाद इति। ऋकारोपधे (उपधायाश्चे)चि सूत्रेणाऽचीकृतदित्यादाविर प्राप्तः। अमीमृजदित्यत्र 'मृजेर्वृद्धिरि' त्यनेनाऽऽर् प्राप्तः। इतरेषामृदुपधानां अपीपृथदित्यत्राऽर् प्राप्त इति विवेकः। ननु इह उरित्यनूद्यमानः सवर्णान् गृह्णाति। ऋदिति विधीयमानो न तान् गृह्णाति। तथाच, अचीक्लृपदित्यत्र 'उर्ऋत्' इत्यनेन सति ऋवर्णे अचीक्लृपदित्यापत्तिरिति चेन्न। लत्वस्यासिद्धत्वेन प्राक् उर्ऋत् इत्यस्य प्रवृत्त्या पश्चात् 'कृपो रोलः' इत्यनेन ऋकारैकदेशस्य लादेशविधानेनेष्टसिद्धेरित्यलम्॥

ननु अत उपधाया इत्यनेन कथयतीत्यत्र वृद्धिर्दुर्वारेत्यत आह—अल्लोपस्य स्थानिवत्त्वान्न वृद्धिरिति। अचः परस्मिन्निति सूत्रेणेत्यर्थः। नच स्थानिनि सति यत्कार्यं तस्यैव स्थानिवदित्यनेनातिदेशो नत्वादेशप्रयुक्तवारणम्। अन्यथा नायकः पावक इत्यादेर्न सिद्धिस्तथा चोक्तदोषस्तदवस्थ एवेति वाच्यम्। अचः परस्मिन्नित्यत्र

स्थानिवदित्यनुवृत्त्या शब्दाधिकारपक्षाश्रयणात्स्थानिनि सति यन्न भवति तदादेशेऽपि न, स्थानिनि सति यद्भवति तदादेशेऽपीति भावातिदेशस्य सिद्धान्तितत्वेन स्थानि सत्यभवन्त्या वृद्धेरादेशेऽप्यभावात् । उक्तद्विविधातिदेशे न पदान्तसूत्रस्थयलोपादिग्रहणस्यैव प्रामाण्यमित्यलम् ॥

ननु ऊन धातोर्णिचि तदन्ताल्लुङि तत्स्थाने तिपि पकारेकारयोरित्वे लोपे च मध्ये च्लौ तत्स्थाने चङि आडागमे आ ऊन इ अदितिस्थितौ णिचो द्वित्वनिमित्तत्वाऽभावेन ('द्विर्वचनेऽची') त्यस्याऽप्राप्त्या द्वित्वात्परत्वादन्तरङ्गत्वाच्च कृतेऽल्लोपे निशब्दस्य द्वित्वे औननदितीष्टरूपाऽनापत्तिरित्यत आह–ओःपुयणजीति । विभावयिपति, अबीभवदित्यादावन्तरङ्गत्वाद्वृद्धावावादेशे (सन्यत) इत्येव सिद्धं पूङ्यौतेश्च सनि (स्मिपूङ्रञ्ज्वशां सनि) सनीवन्तर्द्धभ्रस्जदम्भे)त्यादिनेटि द्वित्वनिमित्तसत्त्वात् (द्विर्वचनेऽची)ति सूत्रप्रवृत्त्या पूर्वं गुणाभावादभ्यासे उकारसद्भावेऽपि पिपविपते यियविपतीत्यत्रेत्त्वार्थं पययोरित्येव वाच्यम् । नच पिपविपत इत्यादौ गुणाऽवादेशयोः (अचः परस्मिन्नि)ति स्थानिवद्भावेनाऽवर्णपरयकारादिपरत्वाऽभावादित्वं न स्यादिति वाच्यम् । पययोरित्येतत्सूत्रारम्भसामर्थ्येन स्थानिवद्भावाप्रवृत्तेः; एवञ्च व्यर्थीभूतं वर्गादिग्रहणं णिचो द्वित्वनिमित्तत्वाऽभावे तन्निमित्तकाऽजादेशस्य द्वित्वे कर्त्तव्ये निषेधं ज्ञापयति, ज्ञापनफलं तु नुतावयिपति, अनूतवत्, ऊर्णनावयिपति, और्णुनवत्, पुस्फारयिपति, अपुस्फुरदिति । न च (ओःपुयणजी)ति सूत्रे णिचीत्याऽसत्त्वात्कथं णिच्यजादेशो नेत्यर्थलाभ इति वाच्यम् । द्वित्वनिमित्तेऽचि नाऽजादेशः स्थानिवदित्यर्थक'द्विर्वचनेऽचीत्यस्य (येन नाव्यवधानमि)ति न्यायेन एकवर्णव्यवधाने प्रवृत्त्या तल्लाभात् तेनाऽपूर्वनिषेधाज्ञापनात् । अत एव दिववनीयिपतीत्यादौ नाऽतिप्रसक्तिः । तथा च द्वित्वनिमित्तेऽजादौ प्रत्यये एकप्रत्ययातिरिक्ताव्यवहिते परे तदन्यतरनिमित्तकादेशो नेति 'द्विर्वचनेऽची'त्यस्यार्थः फलित इति भावः । ननु उक्तरीत्योक्तज्ञापनेनाऽचिकीर्त्तदित्यत्र पूर्वं 'उपधायाश्चे'तीत्वमपि न स्यादत आह—यत्र द्विरुक्ताविति । ज्ञापकसाजात्याद्यत्र द्वित्वेभ्यासोत्तरखण्डस्याद्योऽच् प्रक्रियायां परिनिष्ठितरूपे वाऽवर्णो लभ्यते तत्रैवोक्तनिषेधादुक्तस्थले प्रक्रियायां परिनिष्ठितरूपे वाऽभ्यासोत्तरखण्डस्याऽऽद्यचोऽवर्णरूपत्वाऽभावान्नापत्तिरित्यलम् ॥

अदन्तत्वसामर्थ्याण्णिज्विकल्प इति । कथादिषु उपाधावृद्धिदीर्घसन्वद्भावविरहात्सारभामप्रभृतीनामुपधाह्रस्वस्य गृहमृगप्रभृतीनामुपधागुणस्य च व्यावर्त्तनाददन्तत्वस्य सार्थक्यम् । गर्वयतेस्त्वदन्तत्वं प्रागुक्तलाभावाद्व्यर्थं सत् णिचः पाक्षिकत्वं ज्ञापयति । नचादन्तत्वसार्थक्याय वाऽल्लोप इति प्राचोक्तमेव स्वीकर्त्तव्यमिति वाच्यम्। चिन्तयतेरिदित्वस्य सामान्यापेक्षज्ञापकत्वे उक्तस्याऽदन्तत्वफलस्य स्वष्टत्वेऽपि विशेपापेक्षज्ञापकत्वे तत्र तत्राऽऽकारोकाररूपानुबन्धानां ज्ञापकत्ववददन्तत्वस्य ज्ञापकत्वाक्षतेः । क्लृप्तेनैव णिज्विकल्पेनैव कृतार्थत्वेनापूर्वलोपबाधकल्पनस्यायुक्तत्वात् । सत्येवं मतद्वयेऽप्येकमेव रूपमिति भावः ॥

परत्वाद्वृद्धौ सत्यां टिलोप इति । शब्दान्तरप्राप्त्या लोपोऽनित्यः । वृद्धिरपि तथा । उभयोरनित्ययोः परत्वाद्वृद्धिः । कृतायां तस्यामौकारस्याऽऽवादेशात्प्रा-

गेव परत्वाणींदाद्धस्य बलीयस्त्वाच्च औलोप इति । एवञ्चाऽनग्लोपित्वाद्दीर्घसन्वद्भावौ स्तः। न च टिलोपस्य स्थानिवद्भावेन व्यवधानाचङ्परणिपरलघुपरकाऽभावेन कथं दीर्घसन्वद्भावाविति वाच्यम् । तथाऽप्यङ्गस्य णिच्परत्वाऽनपायात् । चङ्परे णौ यल्लध्विति पक्षेऽपि अभ्यासस्याऽऽदिष्टादचः पूर्वत्वेन स्थानिवत्त्वमेव नास्तीति न कोऽपि दोषः, अत एव 'मुण्डमिश्र'ेति सूत्रे हलिकल्योरदन्तत्वनिपातनं सङ्गच्छते । पूर्वं लोपे तु इकारलोप्यग्लोपित्वसत्त्वेन तद्वैयर्थ्यं स्यात् । एतन्निपातनमेवाऽत्र ज्ञापकम् । आयादेशात्प्रागेवाऽन्तरङ्गत्वाल्लोपेऽनग्लोपित्वान्नवत्येव सन्वद्भाव इति ।

वृद्धेर्लोपो बलीयानिति। अत एव 'नाग्लोपी'तिसूत्रेऽगिति प्रत्याहारग्रहणस्य साफल्यम् । (मुण्डमिश्र)ेति सूत्रे हलकलेत्यकारान्तस्यैव पाठात्, एतद्भाष्यप्रामाण्यादिदुदुपधेभ्यो णिजन्तेभ्यो लुङोऽनभिधानाच्च न दोष इति दिक् ॥

इति चुरादिप्रकरणम् ।

## अथ तिङन्ते ण्यन्तप्रक्रिया ।

अचीचकासदिति । चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपर इति व्याख्यातॄणां प्राचां मत एतत् । मतान्तरे त्विति । भाष्यसम्मतपक्षे तु चङ्परे णौ यल्लध्वित्यर्थं सन्वद्भावाप्राप्त्या अचकासदिति रूपम् ।

ननु अचुचुर इ अदिति स्थितौ णिनिमित्तणिलोपस्य स्थानिवत्त्वाच्चङ्परणिपराया उपधाया अभावात्तत्परलघोरभावाच्च ह्रस्वदीर्घौ न स्यातामित्याशयेनाशङ्कते—नाग्लोपित्वाद्द्वयोरप्यसम्भव इति । समाधत्ते—ण्याकृतिनिर्देशादिति । 'ते प्राग्धातोरि'त्यादौ गत्याकृतिनिर्देशवदिति भावः । एतेन गतिग्रहणे एव जातिग्रहणं नान्यत्रेति केषाञ्चिन्मतमपास्तम् । एवञ्च णित्वजात्याश्रयानेकणिचो ग्रहणेन णिचङ्परत्वाद्ध्रस्वदीर्घयोरस्ति सम्भव इति वृत्तिकृन्मतम् । शेखरकृतस्तु—जातेः पौर्वापर्याभावेन दोषस्तदवस्थ एव, जात्या न पौर्वापर्यव्यवहारः सम्भवतीत्याशङ्कायां [आर्द्धधातुक इति विषयसप्तमी]तिभाष्येण व्यक्तिद्वारकपौर्वापर्यस्याऽप्यनङ्गीकारात् । किञ्च णावित्यस्याऽग्लोपविशेषत्वाण्णित्वजातिनिमित्तकाग्लोप इत्यर्थेन एकणिनिमित्तकापरणिलोपस्यापि णित्वजातिनिमित्तकत्वेनाऽग्लोपित्वस्य दुर्वारतया दोषस्य तादवस्थ्यम्, तथा च अबीभवन्निति भाष्येण [णेर्णिच्युपसंख्यानमि]ति 'चङी'ति सूत्रस्थवार्त्तिकेन चोक्तप्रयोगसाधुत्वमित्याहुः॥

ननु अन्तरङ्गत्वात्पूर्वं कृतयोर्वृद्ध्यायोः पश्चात्सम्प्रसारणेऽपि अशूशवदिति न स्यादत आह—सम्प्रसारणं तदाश्रयञ्च कार्यं बलवदिति । वच्यादीनां ग्रह्यादीनामनुवृत्त्यैवेष्टसिद्धौ 'लिट्यभ्यासस्ये' त्यत्रोभयेषां ग्रहणसामर्थ्यादेतस्या लाभः । अन्यथा वव्रश्चेत्यत्र कृते हलादिशेषे वस्य सम्प्रसारणापत्तिरिति । नच णिच्यजादेशो न स्याद्द्वित्वे कर्तव्य इत्यर्थक 'द्विर्वचनेऽची' ति सूत्रप्रवृत्त्या वृद्ध्यादेरप्राप्त्या न दोष इति वाच्यम् । अशूशवदितिभाष्यप्रयोगेणोक्तज्ञापनस्यानित्यत्वात् । नच सूत्रसामर्थ्यादेवोक्तज्ञापनस्यानित्यत्वमिति वाच्यम् । तस्य द्वित्वे कृतेऽपि चरितार्थत्वादिति भावः ॥

ननु एधतेर्लुङि णिचि उपधासंज्ञायाः प्राक् धिशब्दस्य द्वित्वे तत एकारस्योपधात्वाभावा-

दृग्ध्रस्वाऽप्राप्त्या मा भवानिदिधदिति प्रयोगो न स्यादत आह–बहिरंगोऽप्युपधाह्रस्वो-द्वित्वात्प्रागेवेति । एवञ्च द्वित्वात्प्राग्ह्रस्वे सत्युक्तप्रयोगसिद्धिः । अत्र प्रमाणमाह– ओणेॠदित्करणाल्लिङ्गादिति । ह्रस्वात्पूर्वं द्वित्वे तु णिशब्दस्य द्वित्वे सत्युपधाह्रस्वा-ऽप्राप्त्या तन्निषेधार्थं कृतस्य ॠकारस्य वैयर्थ्यं स्यात् उक्तज्ञापनेनोक्तार्थज्ञापने तु द्वित्वा-त्प्रागुपधाह्रस्वाप्राप्तौतद्व्यावृत्त्यर्थमृदित्करणस्यावश्यकत्वादुक्तार्थं ज्ञापकत्वं सुस्थमिति भावः॥

अयमुब्जधातुरुपदेशावस्थायां दकारोपधः उद्ज इति । ततो भुजन्युब्जावित्य-त्रोब्ज इति निपातनेन दकारस्य बकारः तस्य चान्तरङ्गत्वेपि न द्वित्वात्प्राग् प्रवृत्तिस्तथा सति ब्जिशब्दस्य द्वित्वे औब्जिजदितीष्टप्रयोगानापत्तिः । अर्थादुत्तरखण्डे बकारश्रवणा-पत्तिः स्यात् किन्तु दकारोच्चारणसामर्थ्यात् 'नन्द्राः संयोगादयः' इतिनिषेधेन जिशब्दस्य द्वित्वे कृत एव, तथा च न कोऽपि दोष इत्यभिप्रेत्याह—उपदेशे दकारोपध इत्यादि दकारोच्चारणसामर्थ्यादित्यन्तमिति ।

ननु कृतात्वस्यापि स्थानिवत्त्वेन लीत्वान्नुक् स्यादत आह—लीङ् इति इकारप्र-श्लेषादात्वपक्षे नुक् नेति ।

ननु हेतुभय इत्युक्तेर्भयस्मयावित्यनुपपन्नमित्यत आह—भयग्रहणं धात्वर्थोपल-क्षणमिति ।

ननु हेतोः स्मयस्य गम्यमानत्वे सत्येवाऽऽत्वात्मनेपदयोर्विधानात्तत्रात्वाङ्गीकारे आत्मनेपदत्यागे च वक्ष्यमाणरघुकाव्यप्रयोगानुपपत्तिरित्याशङ्कते–कथन्तर्हि (१)विस्मा-पयन्विस्मितमात्मवृत्ताविति । समाधत्ते—अत्र मनुष्यवाचेति । अत्र मनुष्यवा-चेति करणादेव स्मयस्य गम्यमानत्वाद्धेतोरगम्यमानत्वेन न दोषः । हेतोस्तद्गम्यमानत्वे तु सत्यात्मनेपदे शानजापत्तिर्दुर्वारैव । मुख्यसमाधानमाह—सत्यमिति । समाधानान्त-रमाह—मनुष्यवाक् प्रयोज्यकर्त्रीति । यद्यपि प्रथमणिजर्थंप्रति मनुष्यवागेव प्रयो-जिका तथापि द्वितीयणिजर्थाऽभिप्रायेणेदमुक्तम् । अत एवाऽऽत्वमप्रवृत्तम् । प्रयोज्यस्य कर्त्री प्रयोज्यकर्त्रीति व्याख्यायां प्रथमणिजर्थाभिप्रायेणैव सुयोज्यमित्याहुः केचित् । ण्यन्ताण्णाविति । राजा विस्मयते तं मनुष्यवाग्विस्मापयते तया सिंहो विस्मापय-न्निति । एवञ्च प्रथमणिच् मनुष्यवाचो हेतुत्वादात्वपुकोरुपपत्तिरिति भावः ॥

ईर्ष्यतेस्तृतीयस्येति वक्तव्यम्–तृतीयस्येत्यस्य तृतीयव्यञ्जनस्येत्यर्थः । अत्र व्याख्याने फलं दर्शयति–ऐर्ष्यियदिति । ऐर्षिष्यदित्यस्यासाधुत्वापत्तिरत आह–द्वितीय-व्याख्यायामिति । ईर्ष्यतिप्रकृतिकप्रत्ययान्तधातोरित्यर्थे बीजाऽभावेन ण्यन्ते सन्नन्ते च प्रवृत्तिः । तृतीयस्येति । तृतीयव्यञ्जनसहितस्यैकाच इत्यर्थः ॥

ननु अर्थधातोरागर्वीयत्वेनात्मनेपदित्वात्प्रार्थयन्तीति प्रयोगानुपपत्तिरित्यत आह— निवृत्तप्रेषणाद्धातोरिति । उक्तञ्च निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यत इति । तेन

---

(१) श्लोकोऽयं २ सर्गे रघुवंशकाव्ये—

तमार्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम् ।
विस्माययन्विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं निजगाद सिंहः ॥

प्रार्थनां कुर्वन्तीति विवक्षितेऽर्थे प्रयोगे इति भावः। यत्तु परस्मैपदसिद्ध्यर्थं प्रार्थनं प्रार्थस्तं कुर्वन्ति प्रार्थयन्तीति तन्न, धातुसंज्ञाप्रयोजकप्रत्यये चिकीर्षिते उपसर्गाणां पृथक्करणस्य वक्ष्यमाणत्वाद् 'अर्थवेदयोरि'त्यापुको दुर्वारत्वात् ॥

इति ण्यन्तप्रक्रिया ।

# अथ तिङन्त सन्नन्तप्रक्रिया।

ननु प्रत्ययवाच्येच्छाया नियतकर्माकांक्षत्वात्प्रत्यासत्त्या प्रकृत्यर्थकर्मिकायामेवेच्छायां सनो विधानात्कर्मणो लाभे पुनस्सूत्रे तदुपादानं व्यर्थमित्याशङ्कते—कर्मणः किमिति। उत्तरयति—गमनेनेच्छतीति करणान्माभूदिति। अयम्भावः, कर्मण इत्यस्याऽभावे प्रत्यासत्तेः सैर्वैर्बोध्यत्वादिच्छाकर्मकादेवेत्यर्थे निश्चिते समानकर्तृकाद्धातोरित्यनेन यस्य यस्य समानकर्तृत्वं तस्य सर्वस्योपस्थितौ करणभूतार्थवाचकादपि धातोः यत्किञ्चित्कर्मिकायामिच्छायामपि प्रत्ययापत्तिः तत्सत्त्वे तु न तथेति। समानकर्तृकात्किमिति। प्रत्ययापत्तिमाश्रित्य प्रश्नः। पूर्ववदेवोत्तरम् ॥

ननु परत्वात्कत्वषत्वयोः कृतयोर्भष्भावो न स्यादत आह—सनः षत्वस्यासिद्धत्वाद्भषभाव इति। केचित्तु जागृह स इति स्थितौ सस्येणः परत्वात्प्राप्तषत्वस्यासिद्धत्वेन ढत्वे भष्भाव इति वदन्ति। षत्वे च कृते पश्चाद्भष्भावे कर्त्तव्ये सकारपरत्वाभावेन भष्भावो नेति पूर्वपक्षे प्रक्रान्तेऽस्य ग्रन्थस्य प्रवृत्तिरित्यन्ये ॥

ननु ग्रहः सनि [अत्रेटो दीर्घो नेट्] इत्यनेनेटो दीर्घाभावबोधनाद्दीर्घघटितप्रयोगोऽनुपपन्न इत्याशंकते—कथमुद्दिधीर्षुरिति। समाधत्ते औणादिक गोर्धृ डुच्न्ने।रिति। एवञ्च 'अज्झनगमां सनो' ति वक्ष्यमाणसूत्रेण दीर्घ प्रयोगोपपत्तिरिति भावः ॥

ननु दिदीषत इत्यत्र 'मिनाति मिनोति' इत्यनेनात्वं कुतो नेत्याशंकां समाधत्ते—एज्विषयत्वाऽभावादिति। उक्तसूत्रेणैज्विषय एवात्वविधानान्न तु तदभाव इति प्रकृतेऽतथात्वान्नात्वमिति अत्र प्रमाणमाह—अत एवेति। एज्विषयाऽभावेऽप्यात्वे 'स निमिमे' ति सूत्रे माग्रहणेन (१)[गामादाग्रहणेष्वविशेषः] इति परिभाषया मीधातोरपि ग्रहणसिद्धौ पृथक् तदुपादानं व्यर्थं स्यादितीदमेवैज्विषय एवात्वमित्यत्र बीजमित्यलम् ॥

ननु 'हलन्ताच्चे' त्यनेन इक् समीपस्थहलऽव्यवहितोत्तरस्य झलादिसनः किद्वद्भावविधानेन तितृक्षतीत्यत्र स न स्यात् सनो ऋकाररूपेक्समीपस्थनकाररूपहलः परत्वाभावान्मध्ये हकारेण व्यवधानादित्याशंक्य समाधत्ते—हल्ग्रहणं जातिपरमिति। एवञ्च हल्त्वजात्याक्रान्तैकानेकहल् परस्य झलादिसनः किदित्यर्थे न दोष इति भावः ॥

ननु इषेः सनि द्वित्वगुणयोः प्राप्तौ नित्यत्वाद्द्वित्वेऽभ्यासस्यानर्थक्यादिटो गुणस्य चानापत्तौ एषिषिषतीतीष्टरूपन्न स्यादत आह—इह नित्यमपि द्वित्वं गुणेन वा-

(१) दाधाघ्वदाविति सूत्रेऽदाप्घटकदाप्पदेन दैपो ग्रहणाय दैप् शोधन इत्यत्रेत्संज्ञकः पकारः कृत; स च दापदेन प्रतिपदोक्तदारूपस्यैव ग्रहणात् निरनुबन्धपरिभाषया निरनुबन्धकस्यैव च ग्रहणाच्च व्यर्थः सन्नुक्तपरिभाषाज्ञापकः।

ध्यत इति । अत्र प्रमाणमाह—उपधाकार्यं हि द्वित्वात्प्रबलमित्यादि । ओणेऋदित्करणस्य सामान्यापेक्षज्ञापकत्वेनोपधाकार्य्यमात्रस्य ह्रस्वगुणादेर्द्वित्वात्प्राबल्यबोधनेन द्वित्वात्प्राग् गुणे रूपमिष्टं सिद्ध्यतीति भावः । वस्तुतस्तु—'णौ चङीति' सूत्रभाष्ये यदयमोणिमृदितं करोति तज्ज्ञापयति द्विर्वचनं ह्रस्वाद्बलीय' इत्युक्तत्वादस्य सामान्यापेक्षज्ञापकत्वं चिन्त्यम् । तस्माच्छब्दान्तरप्राप्त्या द्वित्वस्याऽनित्यत्वेन द्वयोरनित्ययोः परत्वादिड् वाच्यस्ततोऽपि प्राग् गुणेनेष्टसिद्धिरित्यलम् ॥

ननु ऊर्णोतेः सनि इडागमे द्वित्वात्प्राक् गुणेऽवादेशे च कृते पश्चान्न शब्दस्य द्वित्वेऽभ्यासे उकारश्रवणाऽनापत्तिरिति चेन्न । 'द्विर्वचनेऽची' ति सूत्रेण स्थानिरूपस्यातिदेशेन नोशब्दे नवशब्दे वा नुशब्दबुद्ध्या कार्यप्रवृत्त्या आदेशस्य गुणस्य निषेधेन वाऽभ्यासे उकारश्रवणोपपत्तेः । नच द्वित्वम्प्रति सूत्रे षष्ठ्यन्ततयोपात्तत्वात्सनः कार्यित्वेन निमित्तत्वाऽभावाद्द्विर्वचनेऽचीत्यस्याऽप्राप्त्या दोषस्तदवस्थएवेति वाच्यम् । (१) [कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते] इति परिभाषया कार्यानुभवकर्तृत्वविशिष्टस्य कार्यिणो निमित्तत्वेनानाश्रयणादतादृशस्य कार्यिणो निमित्तत्वाक्षततया नुशब्दस्यैव द्वित्वेन सनोऽद्वित्वात्तस्येटो निमित्तत्वेनोक्तसूत्रप्रवृत्तेरदोषादिति भावः ।

ननु (लक्षणप्रतिपदोक्त) परिभाषया मिनोतेर्मीरूपस्य लाक्षणिकत्वेन मीग्रहणेन ग्रहणं न स्यादिति चेन्न । यत्र लक्षणाभिनिर्वृत्तत्वेन शब्दरूपापेक्षा, तत्रैवोक्तपरिभाषोपस्थित्या प्रयोगाश्रयणे तदनुपस्थित्याऽदोषादित्याह—कृतदीर्घस्य मिनोतेर्मीरूपाऽविशेषादिसिति । अत्र मीरूपमात्रस्य प्रयोगाश्रयणात्परिभाषाऽप्रवृत्तिः । 'विभाषा दिक्समासे' इत्यत्र तु लक्षणाऽभिनिर्वृत्तस्य समासशब्दस्याश्रयणादुक्तपरिभाषाप्रवृत्त्या 'दिङ्नामान्यन्तराले' इति प्रतिपदोक्तसमासस्यैवाश्रयणम् । उक्तपरिभाषाया अनित्यत्वात्क्वचिदुपस्थितिः क्वचिदनुपस्थितिरिति निष्कृष्टोऽर्थ इति दिक् ॥

ननु ऋधातोः सनि इटि इसः सनोऽवयवस्य कार्यभागित्वेन कार्यिणो निमित्तत्वाभावेन द्विर्वचनेऽचीति निषेधाऽप्रवृत्त्या गुणेऽर् इसिति स्थितौ रिसशब्दस्य द्वित्वे हलादिः शेषे अरिरिषतीति सिद्धिरिति भावः ॥

ननु उच्छेः सनि तुकि चुत्वे, द्विर्वचने न पूर्वत्रासिद्धं प्रवर्तते इत्यर्थक (पूर्वत्राऽसिद्धीयमद्विर्वचने) इति परिभाषया द्वित्वदृष्ट्या चुत्वस्यासिद्धत्वाऽभावेन चकारछकारसहितस्यटो द्वित्वे उचिच्छिषतीति सिद्ध्यति । नच [निमित्ताऽपाये नैमित्तकस्याऽप्यपायः] इति परिभाषया चकाररूपस्य तुकोऽपायाच्चकारस्याऽभ्यासे श्रवणापत्तिरिति वाच्यम् । तस्या अनित्यत्वेनाऽप्रवृत्त्याऽदोषात् । एतदनित्यत्वे ज्ञापकमाह—च्छ्वोःशूडिति सूत्रे सतुग्ग्रहणाज्ज्ञापकादिति । तथा हि तुग्विशिष्टस्य छकारस्य शादेशेऽपि उक्तपरिभाषया तुङ्निमित्तस्य छस्याऽपाये नैमित्तिकस्य तुकोऽपायात्तच्छ्रवणापत्त्या सतुग्ग्रहणं व्यर्थं सज्ज्ञापयति उक्तपरिभाषाऽनित्येति । एवञ्चेह तदप्रवृत्त्या नोक्तदोषः । समाधानान्तरमाह—प्रकृतिप्रत्ययापत्तिवचनाद्वेति । पुष्ययोगं जानाति पुष्येण योजयतीत्येतत्साधके

(१) कार्यानुभवकर्तृत्वविशिष्टः कार्यी निमित्तं न भवतीति परिभाषार्थः । स्थण्डिलाच्छयितरीति सूत्रे शयितरीति निर्देशोऽत्र ज्ञापकः ।

'पुष्ययोगे ज्ञी' ति सूत्रे भाष्यकृत् कृतायाः प्रकृतिप्रत्ययानुवृत्तेर्ज्ञापकम् , तत्र हि चजोरिति घिति परे कुत्वं अन्यथा क्ल्लुकि निमित्ताऽपाय इति परिभाषयैव कुत्वव्यावृत्तौ व्यर्थैव तदनुवृत्तिः । किञ्च [ आख्यानात्कृतस्तदाचष्टे ] इति वार्त्तिकविहितप्रकृतिप्रत्ययापत्तिवचनं तदनित्यत्वे ज्ञापकम् । वस्तुवस्तु एतैरुक्तपरिभाषाऽभाव एव ज्ञाप्यत इति दिक् ।

स्थादिष्वभ्यासेनेति नियमान्नेहेति—ननु नियमादेव निषेधे 'सुनोतेः स्यसनोः, अस्येह निर्विषयापत्तिरिति चेन्न अभिसुसूपतेरप्रत्ययेऽभिसुसूरित्यत्र षत्वनिषेधाय तदावश्यकत्वादिति भावः ॥

इति सन्नन्तप्रक्रिया ।

---

# अथ तिङन्ते यङन्तप्रक्रिया ।

ननु क्रियासमभिहार इत्युक्त्यैव धातोर्लाभात्सूत्रे पुनस्तदुपादानं व्यर्थमित्याशंकते—धातोः किमिति । उत्तरयति—ध्रुवोवचिरित्यादीति । वावच्यते चाख्यायते इत्यादिसिद्धिः प्रयोजनम् । घिगित्यव्ययस्यापि क्रियावाचित्वादेकाच्त्वाच्च ततः प्राप्तयङ्व्यावृत्त्यर्थकमपि धातुग्रहणमित्यलम् ॥

यस्येति संघातग्रहणमिति । तेन नाव्ययीदहर्यीदित्यादौ यलोपापत्तिः । संघातग्रहणसामर्थ्याच्चु ( अर्थवद्ग्रहणे नाऽनर्थकस्ये)ति परिभाषोपस्थितौ न पुत्रकाम्यादौ यलोपातिप्रसक्तिः । वर्णग्रहणे तु तदनुपस्थित्या यलोपोऽत्र स्यादेवेति भावः ॥

दीर्घोऽकितः । अत्राऽग्रहणे यंयम्यते रंरम्यत इत्यादौ दीर्घापत्तिः । ननु सूत्रे दीर्घपदश्रवणादुपस्थितताऽच्पदेन 'अत्र लोपोऽभ्यासस्ये' त्यस्मादनुवर्त्तमानाऽभ्यासस्य विशेष्यत्वेन अजन्ताभ्यासस्य दीर्घ इत्यर्थे नोक्तस्थले दीर्घप्राप्तिरिति व्यर्थं तत् । नचाऽभ्यासावयवस्याचो दीर्घ इति वैयधिकरण्यान्वयाङ्गीकारे तस्य सार्थक्यमिति वाच्यम् । सामानाधिकरण्यान्वयसम्भवे वैयधिकरण्यान्वयस्यायुक्तत्वेन (येन नाप्राप्ति) न्यायेन नुको दीर्घापवादत्वाऽभ्युपगमेन च दोषाभावेनाकिद्ग्रहणवैयर्थ्यस्य तादवस्थ्यादिति चेन्न । डोढौक्यत इत्यत्राऽभ्यासह्रस्वबाधेनोक्तसूत्रप्राप्तदीर्घव्यावृत्तये ( अभ्यासविकारेषु उत्सर्गविधीन् बाधका न बाधन्ते) इत्येतद्ज्ञापनायाऽकिद्ग्रहणस्यावश्यकत्वात् । एवञ्चोक्तज्ञापकसमर्थनाय वैयधिकरण्यपक्षाश्रयणेन यंयम्यत इत्यादौ दीर्घात्पूर्वं सत्यपि नुकि दीर्घवारणायावश्यकमिद्ग्रहणमिति भावः ॥

ननु अर्तर्यङि 'नन्द्राः संयोगादयः' इत्यनेन निषेधाद्रेफस्य द्वित्वाभावेन वक्ष्यमाणभाष्योदाहरणमसङ्गतं स्यादत आह—यकारपररेफस्य न द्वित्वनिषेधः । आरार्यत इति भाष्योदाहरणादिति । द्वित्वम्प्रति यङः कार्यित्वान्न निमित्तत्वयोग इत्यपास्तमेतेन । भाष्योदाहरणस्य सामन्यापेक्षज्ञापकत्वादार्यमारुयदार्र्यदिति सिद्धिः ॥

ननु विग्रहेण यङन्तप्रतिपाद्यविशेषाऽसंप्रत्ययेन नित्यग्रहणमनर्थकमिति भाष्येण च नित्यग्रहणं न वाक्यनिवर्त्तकं किन्तु कौटिल्यपदान्वयव्यावधारणार्थन्तदित्यह—कौटिल्य एवेति । इति वृत्तिकृता, धातोरकाद्य इति सूत्रस्य ... गत्यर्थेभ्यः क्रि-

यासमभिहारे यङ्भवत्येवेत्यवसेयम् । नच 'नित्यं कौटिल्ये गतावि' त्यत्र नित्यग्रहणं व्यर्थं (१)(तक्रकौण्डिन्य) न्यायेन तक्रदानेन दधिदानबाधवत्सूत्रे कौटिल्यपदोपादानेन क्रियासमभिहारे प्रत्ययाविधानान्नित्यपदासद्भावेऽप्यवधारणार्थलाभेनेष्टसिद्धेरिति वाच्यम् । तस्योक्तन्यायानित्यत्वज्ञापनेन सार्थक्यात् । अत एव 'मतिबुद्धिपूजार्थेभ्यश्चे' त्येतत्सूत्रविहितवर्तमानार्थक्तेन पूजार्थकधातुभ्यो भूते क्तस्याबाधात् 'क्तस्य च वर्तमाने' इति षष्ठ्यप्राप्त्या (पूजितो यः सुराऽसुरैरि)त्यत्र तृतीयायाः साधुत्वमिति भावः ।

अकित इत्युक्तेर्न दीर्घ इति—ननु अजन्ताऽभ्यासस्य दीर्घ इत्यर्थेन नुगुगादौ कृतेऽजन्तत्वाऽभावान्नीकि विशेषाभावाद्रीकि रीग्विधानेनैव सिद्धे रिग्विधिसामर्थ्यादेव तदभावसिद्धे किमकित इत्यनेनेति चेन्न । अभ्यासविकारविधौ वैयधिकरण्यान्वयज्ञापनार्थत्वात् । अत एव छयतेः सनि द्वित्वेऽन्तरङ्गत्वात्तुकि चिच्छासतीत्यादावभ्यासह्रस्वत्येत्वसिद्धिः । नचैवमपि अपवादत्वान्नीगादिभिर्दीर्घबाधे व्यर्थमेव तदिति वाच्यम् । अभ्यासविकारे बाधका न इत्यर्थस्यापि ज्ञापनात् ।

इति यङन्तप्रक्रिया ।

## अथ तिङन्ते यङ्लुगन्तप्रक्रिया ।

यङोऽचि च । अत्र सूत्रे अचीति प्रत्ययस्य ग्रहणं नतु प्रत्याहारस्य यङा साहचर्यात् । चकारेण बहुलमित्यनुकर्षस्तदाह—अच् प्रत्यये बहुलं लुगिति—चकारस्य फलान्तरमप्याह—चकारात्तं विनाऽपीति ।

अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवतीति—'सन्यङोः' इति षष्ठी न तु सप्तमी । सप्तमीस्वीकारे यङो लुका लुप्तत्वेन प्रत्ययलक्षणाऽप्रवृत्त्या यङन्तत्वाऽभावेन द्वित्वानापत्तिरिति भावः । नच 'न लुमताङ्गस्ये' त्यनेनाऽङ्गाधिकारविहितकार्यस्यैव निषेधेन प्रकृते तादृशकार्याऽभावाद्द्वित्वे बाधकाऽभावेन सप्तमीपक्षेऽपि न कोऽपि दोष इति वाच्यम् । उक्तनिषेधसूत्रेऽङ्गाधिकारस्याग्रहणेन प्रत्यये परतः पूर्वस्य विधीयमानं यदांगमनांगं कार्यं तस्य सर्वस्यापि निषेधात् । अत एव राजपुरुष इत्यदौ नलोपसिद्धिः । आङ्गकार्यस्यैव तेन निषेधे तु 'यचिभमि'त्यस्यानाङ्गत्वेन निषेधाऽभावाद्भत्वेन पदत्वबाधान्न लोपो न स्यादिति भावः ॥

धातुत्वाल्लडाद्य इति—क्विबन्तेष्विव प्रत्ययोत्पत्तेः प्राक् प्रवृत्ताया धातुसंज्ञाया (एकदेशविकृत)न्यायेनाऽवस्थितत्वाव कार्यकालपक्षेऽपि भूवादिसूत्रप्रवृत्तेश्च । अथवा, चर्करीतमित्यस्याऽदादौ पाठाद्भ्वादित्वाद्भूवादिसूत्रेण धातुसंज्ञेति भावः ॥

ङित्वस्य प्रत्ययाऽप्रत्ययसाधारणत्वेनेति—ऋतेरीयङित्यादिषु प्रत्ययेषु चित्रङादिष्वप्रत्ययेषु च ङित्वस्य दर्शनेन प्रत्ययस्याऽसाधारणरूपाश्रयणे प्रवर्त्तमानस्य प्रत्ययलक्षणस्यात्राऽप्रवृत्त्या न यङो ङित्वप्रयुक्तकार्यस्याऽऽत्मनेपदरूपस्य शङ्कालेशोऽपीति भावः । प्रत्ययस्याऽसाधारणरूपाश्रयण एव प्रत्ययलक्षणप्रवृत्तेरेव सुदृषत्प्रासाद इत्यत्राऽसिति

---

(१) सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेति तदाकारः ।

प्रत्ययाऽप्रत्यययोः सत्त्वादसाधारणरूपानाश्रयणेन प्रत्ययलक्षणाऽप्रवृत्त्याऽसन्तत्वाऽभावान्न दीर्घ इति दिक् ॥

ननु येषामनुदात्तेतां प्रत्ययलक्षणमन्तरैव ङित्त्वं तेभ्यस्त्वात्मनेपदं दुर्वारमित्यत आह—**अनुदात्तङित इत्यनुबन्धनिर्देशादिति**—श्तिपाशपाऽनुबन्धेनेति निषेधपरिगणनेऽनुबन्धपदसद्भावेन तत्प्रयुक्तकार्यस्य यङ्लुक्यभावबोधनात् 'अनुदात्तङित' इत्यत्राङित इत्यस्य ङकारेत्संज्ञकाद्धातोरित्यर्थे ङकारस्याऽनुबन्धत्वस्य स्पष्टत्वान्न तन्निर्दिष्टात्मनेपदप्रसक्तिरिति भावः ॥

**अतएवेत्यादि शपोलुगित्यन्तमिति**—उक्तनिषेधपरिगणनेन गणनिर्दिष्टकार्यस्यान्यत्राप्रवृत्तिबोधनाच्छयन्नादेरप्राप्त्या तदनिर्दिष्टस्य शप एव प्रवृत्त्या तस्य (चर्करीतमि)त्यस्य विशिष्याऽदादौ पाठाल्लुगिति बोध्यम् ।

ननु यङ्लुगन्तभूधातोर्लटि तिपि प्रत्ययलक्षणेन यङन्तत्वाद्द्वित्वेऽभ्यासस्य जश्त्वे तस्य च गुणे 'यङो वे'ति इटि, तदभावे बाभू इति बोभूति इति स्थितौ 'सार्वधातुकार्द्धधातुकयोरि'ति प्राप्तगुणस्य 'भूसुवोस्तिङी'ति निषेधे बोभवीति, बोभोतीतीति चेष्टप्रयोगो न स्यादत आह—**बोभूतु तेतिक्ते इति छन्दसि निपातनादिति** ।

उक्तसूत्रेणैव गुणनिषेधसिद्धौ निपातनस्य यङ्लुगन्तभूधातोश्छन्दस्येव तत्रापि लोट्येव गुणाऽभावो नाऽन्यत्रेति नियमार्थत्वेन लटि गुणे न बाधकमिति । अत एव बोभूत्विति नियमार्थमत्रैव यङ्लुगन्तस्य गुणाऽभावो नान्यत्र बोभवीतीत्युक्तम्भाष्ये । अत एवेति । पूर्वोक्तनियमादेवेत्यर्थः । ननु समुदायस्य बोभू इत्यस्य भुवोऽतिरिक्तत्वेन तत्त्वाऽभावाद्भूसुवोस्तिङीति गुणनिषेधाऽप्राप्त्या निपातनस्य गुणनिषेधायावश्यकत्वेन नियमार्थत्वं न सम्भवतीत्याशंकते—**नच यङ्लुक्यप्राप्त एव गुणाभावो निपात्यतामिति** । समाधत्ते—**प्रकृतिग्रहणेन यङ्लुगन्तस्यापि ग्रहणादिति** । एवञ्च भूग्रहणेन बोभू इत्यस्य ग्रहणाद्गुणनिषेधसिद्ध्या निपातनं नियमार्थमेवेति । प्रमाणमाह-**द्विःप्रयोगो द्विर्वचनं पाष्ठमिति सिद्धान्तादिति** । षष्ठाध्यायस्थसूत्रविहितद्विर्वचनस्य द्विः प्रयोगरूपत्वेन तत्त्वाक्षततया निषेधादिसिद्धिः । शेखरकृतस्तु, उत्तरखण्डस्य भूत्वाक्षततया भूसुवोरित्यस्य भूशब्दान्ताङ्गस्य न गुण इत्यर्थेन निषेधप्राप्त्या नियमसिद्धिः । द्विःप्रयोगत्वेऽपि विशिष्टानुपूर्वीभेदात्प्रकृतिग्रहणेन तद्ग्रहणोपपादनं न सम्भवति । अत एव 'द्यते दिगी'ति सूत्रे भाष्ये अस्तेर्भ्वादेशे यदि स्थाने द्विर्वचनं द्वित्वे कृते सर्वादेशो भूभावः प्राप्नोति । अथ द्विः प्रयोगो द्विर्वचनं तदा परस्य भूभावे कृते पूर्वस्य श्रवणं प्राप्नोतीत्युक्तमित्याहुः ॥

ननु 'आत' इत्यनेन सिज्लुकि सति आदन्तादेव झेर्जुसो विधानादिह जुस् न स्यादत आह—**अभ्यस्ताश्रयो जुसिति** । 'सिजभ्यस्तविदिभ्यश्चे'त्यनेन सिचः परत्वमाश्रित्य प्राप्तजुस एव नियमो नत्वभ्यस्ताश्रयस्य तस्येति न कोऽपि दोषः । नच परत्वात् अदभ्यस्तादि' त्यनेन कृतेऽदादेशे जुसोऽप्राप्त्या दोषस्य तादवस्थ्यमेवेति वाच्यम् । अभ्यस्ताश्रयजुसोऽदादेशाऽपवादत्वेन दोषोद्धारादिति भावः ॥

ननु 'सिजभ्यस्तविदिभ्यश्चे'त्यनेन [illegible] जुसि कृते जुसि चेति गुणो दुर्वार

इत्यत आह—नित्यत्वाद्वुगिति—(परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः) इति परिभाषया परत्वाऽपेक्षया नित्यत्वस्य बलवत्त्वबोधनाज्जुसि चेति गुणस्य परत्वात्तदपेक्षया कृताकृतप्रसङ्गित्वेन वुको नित्यत्वाद्गुणं बाधित्वा वुगेवेति भावः॥

ननु (एकाच उपदेशेऽनुदात्तादि)त्यत्रैकाच्ग्रहणस्य श्तिपाशपानुबन्धेति निषेधवचनज्ञापकत्वेनैकाज्ग्रहणघटितशास्त्रस्य यङ्लुक्यप्रवृत्तिसूचनादिहोक्तसूत्राऽप्रवृत्तिरित्याह—एकाज्ग्रहणेनोक्तत्वान्नेण्निषेध इति॥

ननु गमेर्यङ्लुगन्ताल्लोटि मध्यमपुरुषैकवचने सेर्ह्यपिच्चेति हौ तस्य 'अतो हेरि'ति लुक् स्यादत आह—अनुनासिकलोपस्याऽऽभीयत्वेनाऽसिद्धत्वान्न हेर्लुगिति। समानाश्रयाभीये कर्त्तव्ये समानाश्रयमाभीयमसिद्धमित्यर्थकस्य 'असिद्धवदत्राभादि'त्यस्य 'अनुदात्तोपदेशे'त्यत्रोपस्थितया, अनुदात्तोपदेशानां यमिरमिगम्यादीनां, तनोत्यादीनां, वनतेश्चानुनासिकस्य लोपः स्याज्झलादौ किङ्तिपरे सचाऽसिद्धो भवतीत्यर्थे समानाश्रयस्य हेर्लुकोऽत्र कर्तव्यत्वे समानाश्रयस्यानुनासिकलोपस्यासिद्धत्वेन हेरतःपरत्वाऽभावान्न लुगिति भावः॥

ननु यङ्लुगन्ताद्गमेर्लुङि 'च्लि लुङि' इत्येत्सूत्रविहितस्य च्लेः स्थाने 'श्तिपा शपे' ति निषेधपरिगणनेऽनुबन्धपदसद्भावात्तन्निर्दिष्टकार्यस्येह प्रकरणेऽभावप्रतिपादनात् 'पुषादिद्युताद्य्लृदितः परस्मैपदेष्वि' तिसूत्रेण नाऽङित्याह—अनुबन्धनिर्देशान्नच्लेरङिति।

ननु हन्तेर्यङ्लुकि 'हो हन्तेर्ञ्णिन्नेष्वि'त्यतो हन्तेरित्यनुवर्त्य 'अभ्यासाच्चे'त्येतत्सूत्रविहितकुत्वस्याऽत्र प्रवृत्तिर्न स्याद्धन्तेरित्यत्र श्तिपो निर्दिष्टत्वादुक्तनिषेधादित्यत आह—श्तिपाशपेति निषेधस्त्वनित्य इति। अनित्यत्वे प्रमाणमाह—'गुणो यङ्लुकोः' इति सामान्यापेक्षज्ञापकादिति—अयम्भावः' सन्यङो' रिति द्वित्वविधायकेनैकाचोद्वित्वविधानात्तत्र च श्तिपाशपेति निषेधेन यङ्लुकि कुत्रापि द्वित्वाऽभावात् 'गुणोयङ्लुकोः' इत्यनेनाऽभ्यासस्य विधीयमानो यो गुणस्तस्य द्विर्वचनं विनाऽनुपपत्त्या व्यर्थीभूतं क्वचिदप्रवृत्तिं ज्ञापयति। विशेषाऽपेक्षज्ञापकत्वे तु एकाज्निबन्धनस्यैवाऽनित्यत्वं स्यादित्यलम्॥

ननु हन्तेर्यङ्लुकि लोटि मध्यमपुरुषैकवचने हौ जङ्घहीत्यत्र 'हन्तेर्जः' इति जादेशः कुतो नेत्याशङ्कां समाधत्ते—श्तिपा निर्देशाज्जादेशो नेति। उक्तजादेशविधायकसूत्रे हन्तेरित्यत्र श्तिपो निर्दिष्टत्वेन तन्निर्दिष्टकार्यस्य च श्तिपा शपेति निषेधेन यङ्लुक्यप्रवृत्तिबोधनेन जादेशाऽभाव इति भावः॥

ननु हन्तेर्यङ्लुकि आशीर्लिङि लुङि च कृतद्विर्वचनस्य हन्तेर्वधादेशे पुनर्द्वित्वं कुतो नेत्याशङ्कां समाधत्ते—वधादेशस्य द्वित्वं तु न भवतीति—अयम्भावः, सन्यङोरिति द्वित्वविधायके 'लिटि धातोरनभ्यासस्ये' त्यतोऽभ्यासस्ये' त्यतोऽनभ्यासपदानुवृत्तौ सन्नन्तस्य यङन्तस्य चानभ्यासभिन्नप्रथमैकाचो द्वित्वमित्यर्थे वध्यात् अवधीदित्यत्र वधादेशस्य स्थानिवद्भावेनाऽभ्यासत्वान्न द्वित्वप्राप्तिः। नाऽभ्यासो यस्मिन् यस्य।वेति बहुव्रीहावभ्यासपदस्य धातोः समानाधिकरणविशेषणत्वम्। अस्तेरिति सूत्रस्थभाष्येणोत्तरखण्डस्यैव वधादेशे जङ्घन्यादित्येवरूपमिति बोध्यम्॥

ननु आङ्पूर्वकाद्धन्तेर्यङ्लुकि 'आङो यमहनः' इत्यात्मनेपदं न स्याद्यङ्लुगन्तस्योक्तधातोरशुद्धधातुभिन्नत्वेन तद्ग्रहणेनाऽग्रहणात्सूत्रे च शुद्धधातोरेवोपादानादिति चेन्न । (१)(प्रकृतिग्रहणेन यङ्लुगन्तस्याऽपि ग्रहणात्) द्विः प्रयोगो द्विर्वचनं पाष्ठमिति सिद्धान्तितत्वादाह—आङ्पूर्वकात्तु 'आङो यमहन' इत्यात्मनेपदमिति ॥

ननु चरतेर्यङ्लुकि 'चरफलोश्चे'त्यभ्यासस्य नुकि उत्परस्यातः' इत्युत्वस्य गुणः कुतो नेत्यत आह—तपरत्वान्न गुण इति--ननु तपरकरणसामर्थ्याद्गुणव्यावृत्तिरिव दीर्घव्यावृत्तिरपि स्यादत आह—हलि चेति दीर्घस्तु स्यादेवेति—तत्र युक्तिमाह—तस्यासिद्धत्वेनेति—उत्वविधायकदृष्ट्या गुणस्य सिद्धत्वात्तस्य च तपरत्वव्यावर्त्यत्वेन व्यावृत्तिः । दीर्घस्य तु उत्वदृष्ट्याऽसिद्धत्वेन तपरव्यावर्त्यत्वाऽभावेन नानेन तद्व्यावृत्तिरिति भावः ॥

ननु यौतेर्यङ्लुकि लटि 'उतोवृद्धिरि'ति वृद्धिः स्यादत आह—उतोवृद्धिरित्यत्र नाभ्यस्तस्येत्यतोऽनुवृत्तेरिति—अयम्भावः तत्र नाभ्यस्तस्येत्यस्यानुवृत्तावभ्यस्तभिन्नोकारस्य वृद्धिरित्यर्थे प्रकृतेऽभ्यस्तत्वान्नोक्तापत्तिरिति दिक् ॥

ननु स्वपेर्यङ्लुकि 'स्वपिस्यमिव्येञां यङि' इत्यनेन सम्प्रसारणं कुतो नेत्यत आह—लुका लुप्ते प्रत्ययलक्षणाऽभावादिति—उक्तसूत्रेण यङि सम्प्रसारणं विधीयते यङश्च 'यङोऽचि चे' त्यनेन लुक् तस्य च लुक्शब्देन कृताऽदर्शनात् 'न लुमताङ्गस्ये'ति निषेधेन प्रत्ययलक्षणाऽप्रवृत्त्या यङोऽभावान्न सम्प्रसारणम् , मूले उत्वं नेति फलितार्थकथनमुक्तसूत्रविधीयमानसम्प्रसारणन्नेति तदर्थः, । नच लुकः प्रागेव यङः सत्त्वेन तस्मिन्नुक्तापत्तिर्दुर्वारेति वाच्यम् । सर्वविधिभ्योलुग्विधेर्बलीयस्त्वेन (२) (अकृतव्यूह) परिभाषया च लुकः पूर्वं तदप्रवृत्तेरिति भावः ॥

ननु अर्तेर्यङ्लुकि लटि प्रथमपुरुषस्य बहुवचने झौ आरतीतिरूपं सिद्ध्यति तन्न स्यात् रर ऋ इति स्थितौ रुको रेफस्य 'रोरी'ति लोपे यणि कृते प्राप्तस्य 'ढ्रलोप' इति दीर्घस्य यणः स्थानिवद्भावेन निमित्ताऽभावेनाऽप्रवृत्तेरिति चेन्न । 'अभ्यासस्याऽसवर्णे' इत्यत्राऽसवर्णग्रहणेनाऽभ्यासकार्ये ऽभ्यासानवयवधात्ववयवादेशस्य तत्प्रतिबन्धकस्थानिवद्भावो नेत्यर्थज्ञापनाद्दीर्घविधौ स्थानिवत्त्वनिषेधाच्चोक्तानुपपत्त्यभावादिति ॥

ननु यङ्लुगन्ताद्ग्रहेर्लुकि 'ग्रहोऽलिटी' तिसूत्रेण कुतो नेटो दीर्घ इति चेन्न । तत्रैकाच्ग्रहणसत्त्वादेकाज्निबन्धनकार्यस्यात्र प्रकरणेऽभावबोधनादित्याह—ग्रहो लिटीति दीर्घस्तु न, तत्रैकाच इत्यनुवृत्तेरिति । माधवमते युक्तमेतदित्याह—माधवस्तु, दीर्घमाहेति । इत्थं हि तदाशयः, ग्रहोऽलिटी ति सूत्रस्थ(यङ्लोपे चोक्तमि)ति वार्त्तिकतदीयभाष्यादिपर्यालोचनात् जरीगृहितेत्यादौ यङन्ताद्ग्रहेस्तृचस्तासेर्वा इटो दीर्घाभावे

(१) प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणमिति परिभाषास्वरूपम् । पाष्ठद्वित्वस्य द्विःप्रयोगत्वसिद्धान्तेन प्रयोगद्वयरूपे समुदाये प्रकृतिरूपत्वबोधनान्न्यायसिद्धमिदम् ।

(२) अकृतव्यूहाः पाणिनीया इति परिभाषास्वरूपम् । पाणिनीयशास्त्राध्येतारो निमित्तस्य विनाशोन्मुखत्वे दृष्टे तत्प्रयुक्तकार्यकारिणो न भवन्तीत्यर्थः । समर्थानां प्रथमाद्वेतिसूत्रस्थं समर्थग्रहणमत्र ज्ञापकम् ।

युक्तिद्वयम् । पूर्वस्मादपि विधौ स्थानिवद्भावः ग्रहेर्विहितस्येटो दीर्घं इति च, तत्र भाष्यवार्तिककृद्रीत्या प्रथमः पक्षः ताभ्यां पूर्वत्रासिद्धे न स्थानिवदिति स्वीकृत्य दीर्घग्रहणं प्रत्याख्यातम् । तन्मते त्रैपादिकदीर्घातिरिक्तदीर्घे कर्त्तव्ये स्थानिवद्भावः सुवचः । द्वितीयपक्षस्तु सूत्ररीत्या, एतन्मते सामान्यतो दीर्घविधौ स्थानिवद्भावनिषेधादसौ वक्तुमशक्यः। तथाच यङ्लुकि दीर्घप्रवृत्तौ न बाधकम् । यङ्लुकोऽनैमित्तिकत्वेन अज्झलादेशत्वेन च न स्थानिवद्भावः । द्विःप्रयोगो द्विर्वचनं पाष्ठमिति सिद्धान्ताद्ग्रहेर्यङ्लुगन्ताद्विहितस्य ग्रहेर्विहितत्वापायो नेति ।

तद्भाष्यविरुद्धमिति । तथा हिं 'एकाचो द्वे प्रथमस्ये' ति सूत्रे ग्रहेरङ्गादिति भाष्यमुपादाय कैयट आह वृचो हि जरीगृहित्यङ्गन्न तु ग्रहिः विशेषणसामर्थ्याद्धि यथाश्रुतविशेषणमिति । न च यङन्तप्रक्रमे एतत्समाधानस्य कैयटेनोक्तत्वात्कथं यङ्लुगन्ते तेन निर्वाह इति वाच्यम् । युक्तिसाम्याद्यङ्लुगन्तेऽप्युक्तसमाधानेन दीर्घाभावस्य लक्षितत्वात्। अत्र पक्षे यङ्लुकि दीर्घाऽप्रसक्त्या पूर्वस्मादपि विधौ स्थानिवद्भाव इति, ग्रहेर्विहितेटोदीर्घ इत्यस्य च समाधानस्योपायस्योपायान्तरादूषकत्वादिति न्यायेन यङन्तांशे उपायान्तरपरत्वेन नेयत्वम् । न च यथाश्रुतरूपपक्षे गृहीतमित्याद्यसिद्धिरिति वाच्यम् । अङ्गसंज्ञाप्रवृत्तिकाले यथाश्रुतरूपस्यैव सद्भावेन तत्सिद्धेः । ग्राहितमित्यादौ तु नैवम् , 'निष्ठायां सेटि' इति णिलोपे एकाच्त्वानपायादिति भावः ॥

भाष्ये ध्वनितमिति । तथाहि, अत्र क्ङितीत्यस्यानुवृत्तिर्नैवेतिपूर्वपक्षे सञ्जाते बहूल्दोपानुद्भाव्य परिहृत्य चोक्तमेतावानेव विशेषः । अनुवर्त्तमाने क्ङिद्ग्रहणे छः षत्वम्वक्तव्यम् , अननुवर्त्तमाने तस्मिन् छः शत्वे कृते शान्तत्वादेव षत्वसिद्धौ 'व्रश्चादि' सूत्रे छग्रहणं न कर्तव्यम्भवतीति भावः । एवं वदन् भाष्यकार ऊठ्भाविभ्यो यङ्लुङ्नास्तीत्युक्तवान् । अन्यथा दिवेर्यङ्लुकि देदेति, देवेपि इत्यादौ ऊठो भावाभावाभ्यां महान् विशेषः स्यात् । ततश्च क्ङितोऽननुवृत्तावूठः प्रवृत्त्या देद्योति, देद्योपीत्यादिविशेषरूपलाभादेतावानेवेत्येवकारो विरुध्येतेत्यलम् ॥

इति यङ्लुगन्तप्रक्रिया ।

# अथ तिङन्ते नामधातुप्रक्रिया ।

ननु गामिच्छतीति विग्रहे गव्यतीत्यादौ अन्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदत्वात् 'लोपः शाकल्यस्ये' ति वकारलोपः कुतो नेत्याशंकां समाधत्ते—न पदान्तत्वादिति । 'नः क्ये' इतिवक्ष्यमाणसूत्रेण क्यचि क्यङि च नान्तस्यैव पदत्वादिहाऽतथात्वान्न दोष इति भावः ॥

ननु गव्याञ्चकार गव्यितेत्यादौ 'यस्य हल' इति यलोपो दुर्वार इत्यत आह—सन्निपातपरिभाषया क्यचो यस्य लोपो नेति । यकारे परे यान्तादेशविधानाद्वकारो न यलोपनिमित्तम्भवतीति भावः ॥

ननु (सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः) इति वार्तिकेन प्रातिपदिकात्क्विपो वि-

धानेन मालाशब्दस्य प्रत्ययान्तत्वेन प्रातिपदिकभिन्नत्वात्क्विप् न स्यादत आह (१) लिङ्गविशिष्टपरिभाषयेति। प्रातिपदिकस्य मालेत्यस्य ग्रहणे लिंगबोधकटाप्प्रत्ययविशिष्टस्य मालाशब्दस्याऽपि ग्रहणबोधनात्तदुपपत्तिः। समाधानान्तरमाह—एकादेशस्य पूर्वान्तवत्त्वाद्वेति। 'अन्तादिवच्चे' त्यनेन दीर्घरूपैकादेशस्याऽकाररूपपूर्वस्थानिघटितमालशब्दवृत्तिप्रातिपदिकत्वस्यैकादेशविशिष्टमालाशब्देऽतिदेशात्प्रातिपदिकत्वात्तदुपपत्तिरिति भावः॥

ननु भूरिवाचरतीतिविग्रहे क्विबन्तादुक्तधातोर्लुङादौ 'गातिस्थे'त्यादिसूत्राणां प्रासिद्धैवारित्यत आह—अभिव्यक्तत्वेन धातुपाठस्थस्यैव तत्र ग्रहणादिति।

उक्तञ्च—

अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः।
शास्त्रार्थस्तेषु कर्त्तव्य उक्तेषु न तदुक्तिषु॥ इति।

पथीनतीति। पन्था इवाचरतीति विग्रहेऽन्तरंगत्वाद्दीर्घे गुणाऽभावाद्रूपमिदम्। माधवानुसारेणैतत्। परे तु हलन्तेभ्य आचारक्विपोऽभावादयुक्तमेतत्। किञ्च इन्हन्नित्यनेन शावेव दीर्घो नान्यत्रेति नियमात्प्रकृते दीर्घाऽप्राप्त्या गुणे सति पथेनतीत्येव रूपम्। नच तत्र सूत्रे शावित्युपादानाज्ज्ञापकस्य सजातीयापेक्षत्वे सुबानन्तर्य एव नियमफलनिषेधप्रवृत्तिरिति वाच्यम्। तथा सति वृत्रघ्नः स्त्री वृत्रघ्नीत्याद्यसिद्ध्यापत्तेः। अत्र हन् शब्दस्य क्विबन्तत्वात्तत्राऽऽनुनासिकस्येतिदीर्घेऽस्मात्पुंयोगात्स्त्रियां वृत्त्या नान्तलक्षणङीपि कृतेऽल्लोपो न स्यादित्याहुः। येषामिन्नादीनां शावुपधादीर्घः परमदण्डिन्नित्यादौ तेषां दण्डिन्वृत्रहन्नादीनामेव, इन्हन्निति नियमो नतु पथ्यादीनामेतेषां तु शौ परे सुपन्थानीत्यादावुपधादीर्घप्रवृत्तावपि 'इतोऽत्सर्वनामस्थाने' इत्यत्वे कृते 'इन्हन्नि'ति नियमाप्रवृत्तेः। अन्यथा पन्थानावित्याद्यसिद्धिः। एवञ्च पूर्वोक्तरूपमेव साध्विति केचित्॥

देवतीति माधव इति। अत्र 'दिव उत्' इत्येनेन दोत्वं भवति तेन पदान्तविषय एवोत्वविधानादिह पदान्तत्वाऽभावादिति भावः। अत्र ऊठि द्यवतीत्युचितमिति। लघूपधगुणं बाधित्वाऽन्तरङ्गत्वादूठि यण्। नच (असिद्धं बहिरंगमन्तरङ्गे) अनया परिभाषयाऽन्तरङ्गस्य यणः कर्त्तव्यत्वे बहिरङ्गस्योठोऽसिद्धत्वबोधनादच्परत्वाऽभावाद्यण् न स्यादिति वाच्यम्। अचोऽन्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्त्तव्ये न बहिरङ्गत्वप्रयुक्तासिद्धिरित्यर्थक (नाजानान्तर्ये बहिष्ट्वप्रक्लृप्तिरि)ति परिभाषयोक्तपरिभाषाया निषेधेनाप्रवृत्तेः। न च (वार्णादाङ्गं बलीयः) इत्यनया परिभाषया वार्णकार्य्यादाङ्गकार्यस्य बलीयस्त्वबोधनेन यणं बाधित्वा लघूपधगुणे उक्तप्रयोगासिद्धिरिति वाच्यम्। समानाश्रय एव तत्प्रवृत्तेः सिद्धान्तितत्वेनेह व्याश्रयत्वात्तदप्रवृत्तेः। व्याश्रयेऽप्युक्तपरिभाषाप्रवृत्त्यभ्युपगमे तु अनित्यत्वेन तद्प्रवृत्तिकल्पनम्। अत एव सिवेरौणादिके न प्रत्यये स्योनः सिद्ध्यतीति भावः॥

---

(१) प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्। इति परिभाषास्वरूपम्। सामान्यरूपेण विशेषरूपेण वा प्रातिपदिकशब्दग्रहणे सति लिङ्गबोधकप्रत्ययविशिष्टस्य, अपि शब्दात्केवलस्यापि ग्रहणं बोध्यम्।

यत्तु स्वामी स्वांचकारेति तदनाकरमेवेति । अनेकाच्त्वाभावादिति तदाशयः । अन्ये तु भाष्यकृता प्रत्ययग्रहणमपनीयेत्यनुक्तत्वात्प्रत्यायान्तत्वेन स्वामासेत्यादि रूपं साध्वेवेति वदन्ति ।

युद्धे योऽयं ग्रामशब्द इति—अयम्भावः, युद्धे योऽयं ग्रामशब्दः स च समुपसर्गविशिष्ट एवास्ति न केवलग्रामशब्दस्ततो ग्रामशब्दपाठेनैव संग्रामशब्दलाभे पुनः समुपसर्गविशिष्टपाठो व्यर्थीभूतो ज्ञापयति धातुसंज्ञाप्रयोजकीभूतप्रत्ययस्य चिकीर्षितत्वे उपसर्गसमानाकारकपूर्वपदस्य पृथक्करणं भवतीति । ज्ञापने तूपसर्गसमानाकारेत्यंशानुपादाने संग्रामघटकसंशब्दस्य क्रियायोगाऽभावादुपसर्गत्वाऽभावेन ज्ञापकोपपत्तिर्न स्यात् । प्रयोगभेदेनोपसर्गस्यापि तत्समानाकारत्वं बोध्यम् । तत्र च चिकीर्षितपदोपादानात्पृथक्करणेन समासाऽभावकल्पनेऽपि तद्विषये क्यङादिप्रत्ययविधायकसूत्रे सुबन्तादित्यंशे यस्माद्विहितस्तदादीत्यंशाऽप्रवृत्त्या न दोषः । पृथक्क्रियत इत्यनेन जातसमासाऽभावकल्पनम् । अत एव, सुमनाय्येत्यादौ पुनः क्त्वान्तेन समासे ल्यच्सिद्धिः । उक्तञ्च तद् 'भृशादिभ्वि त्यत्र भाष्ये संग्रामयतेरेव सोपसर्गान्नान्यस्मात्सोपसर्गादिति । ज्ञापनफलञ्च स्वमनायतेत्यादौ मनःशब्दात्प्रागडिति बोध्यम् ।

ज्ञापकस्य सजातीयविषयत्वात्साजात्यं दर्शयति—तेनेत्यादिना । यत्र सकलस्योपसर्गरूपस्य श्रवणं नत्वादेशेनाऽपहरणं तत्रैव पृथक्करणं भवति नत्वन्यत्रेति । अत एव, आ ऊढः स इवाचर्य्य ओढायित्वेत्यत्र उन्मनाय्य अवगल्भ्येति वन्न ल्यबापत्तिः । ज्ञापकस्य विशेषविषयत्वे पष्ठाध्यायीसूत्रस्थवार्त्तिकस्य तद्भाष्यस्य च प्रामाण्यम् । एतच्च तथाहीत्यादिना मूले एव स्पष्टत्वान्नात्र लिखितम् । क्यजन्तादुस्राशब्दाल्लङि अंगस्यादि कृते 'उस्यपदान्तादि' त्यनेन प्राप्तपररूपस्य प्रतिषेधार्थमुक्तवार्त्तिकम् । न च औस्रीयदित्यत्रोसोऽनर्थकत्वान्न तत्प्राप्तिरिति वाच्यम् । छिन्द्युभिन्द्युरित्यादावप्युसोऽनर्थकत्वेन दोषापत्तेः । नच सर्वत्रोसोऽनर्थकत्वे क्व सूत्रप्राप्तिरिति वाच्यम् । अयुः, अबुरित्यादौ तत्प्रवृत्तेः सुघटत्वात् । एवञ्चाऽयमेव (उस्योमाङ्क्ष्वि)ति प्रतिषेधोऽत्रार्थवद्ग्रहणपरिभाषाप्रवृत्तिज्ञापकः ।

औङ्कारीयदिति—अत्र 'ओमाङोश्च' इत्यनेन प्राप्तपररूपस्य प्रतिषेधः । आडागमस्याऽऽङिपरे उदाहरणं प्रदर्शयति—औढीयदिति । आदेशेन (एकादेशरूपेण) अपहृतस्थलेऽपि पृथक्कृतावाङः परत्राटो विधानादाडागमस्याऽऽङि पररूपाप्राप्त्या निषेधो व्यर्थः स्यात् । एवञ्चाऽयमेव निषेधो ज्ञापकस्य विशेषविषयत्वे प्रमाणमिति बोध्यम् । ज्ञापकस्य विशेषविषयत्वे न केवलपाष्ठवार्त्तिकतदीयभाष्ययोरेव प्रमाण्यमपि तु चशब्दं प्रयुञ्जानस्य सूत्रकारस्याऽप्यनुकूलस्य प्रामाण्यमित्याह—चशब्देनेति । एवञ्च विनिगमकाऽभावेन तस्य बाध्यसामान्यचिन्तया सर्वबाधकत्वम् ; अन्यथा ( पुरस्तादपवाद ) न्यायेन ओमाङोश्चेत्यस्यैव बाधो नतु उस्यपदान्तादित्यस्येत्यवसेयम् ॥

अत्राच्वेरित्यनुवृत्त्येति । अत एव लोहितभिन्नानां लोहितादिगणे पठ्यमानानां भृशादिपाठे नित्यात्मनेपदमेव प्रयोजनमुक्तम्भाष्ये न तु अभूततद्भावविषयतालाभोऽपीति तात्पर्यम् ।

इष्ठवदित्यतिदेशात्पुम्वद्भावादय इति—आदिशब्देन रभावटिलोपादयः । एतदयतीति । न च परत्वादत्रातिदिश्यमानकार्याणामुपदेशस्यैव देशत्वाङ्गीकाराट्टिलोपः स्यादिति वाच्यम् । पुंवद्भावातिदेशसामर्थ्यात् अन्तरङ्गत्वाद् 'भस्याढे तद्धिते' इत्यस्य प्रत्ययोत्पत्तेः प्रागेव प्रवृत्त्या 'टेरि' त्यस्याऽप्रवृत्तेः । न च पुंवत्त्वस्यासिद्धत्वेन टिलोपस्याऽत्र दुर्लभत्वमिति वाच्यम् । एतयति श्येतयतीति भाष्योदाहरणेनाऽऽभीयासिद्धत्वस्यानित्यत्वाट्टिलोपस्य दुर्वारत्वादिति भावः ॥

ननु अतिदेशशास्त्रे पुंवद्भावग्रहणं व्यर्थं टिलोपेनैव तयतीत्यादिसिद्धेरिति चेन्न । दारयतीत्यस्य सिद्ध्यर्थं पुंवद्भावग्रहणस्य सार्थक्यात्तदाह—दरदमाचष्टे दारदयतीति । दरदोऽपत्यं दारदः, 'द्व्यञ्मगध' इत्यण् तस्य स्त्रियाम् 'आतश्चे' ति लुकि सिद्धिः । अत्र पुंवद्भावस्याऽभावे सति टिलोपे दरदयतीत्यापत्तिः ॥

ननु अजढदित्यत्र टिलोपे सति णिज्विशिष्टस्य द्वित्वे पश्चादभ्यासेऽकारो दुर्लभ इत्यत आह—ओः पुयणजीतिसूत्रे वर्णप्रत्याहारजग्रहो लिङ्गमिति । त्वां मां वाऽऽचष्टे इति विग्रहे त्वापयति, मापयतीति रूपम् । वस्तुतस्तु त्वादयति मादयतीत्येव युक्तम्, तदेवोपपादयति, । अन्तरङ्गत्वादित्यादिना । न च (वार्णादाङ्गं बलीयः) इत्येतद्बलाट्टिलोपस्यैव प्रवृत्तौ त्वापयतीत्येव स्यादिति वाच्यम् । समानाश्रये तत्प्रवृत्त्यभ्युपगमेनेह व्याश्रये तद्प्रवृत्तेः । न च भाष्ये प्रकृतिभावस्य प्रत्याख्यातेन दोषस्तदवस्थ एवेति वाच्यम् । प्रेष्ठाद्युदाहरणविशेषे भाष्यस्याऽन्यथासिद्धिपरत्वेनादोषात् । अयम्भावः, 'प्रकृत्यैकाजि'ति सूत्रस्य वृत्तिकारेण प्रेयान् प्रेष्ठ इत्याद्युदाहरणदानात्तत्र प्रकृतिभावं विनाऽपि प्रत्यययाद्यादेशविधायकसूत्रस्य 'असिद्धवदत्राभादि' त्यनेनासिद्धत्वात्प्रस्यादावकारोच्चारणसामर्थ्यात्तल्लोपाभावस्य भाष्ये साधनात् । स्रग्विन् स्रजिष्ठ इत्यादावपि लोपापवादविन्मतो लुकः प्रवृत्त्या न टिलोपः । नच प्रकृत्यैकाजिति सूत्रस्यैतावता प्रत्याख्यानमेवाङ्गीकरणीयमिति वाच्यम् । त्वापयतीत्याद्यर्थन्तदावश्यकत्वादिति ॥

टेरित्यस्यैवेति—एवकारेण 'नस्तद्धिते' इत्यस्य व्यावृत्तिः । वस्तुतः प्रकृत्यकाजि'ति सूत्रेऽनेकाजित्येव सिद्धे प्रकृतिग्रहणेन (येन नाप्राप्ति) न्यायप्रवृत्तिबोधनात् प्रकृतिभावस्य टेरित्येतन्मात्रबोधकत्वमयुक्तम् । तथाच नस्तद्धित इत्यस्यापि प्रकृतिभावस्यान्याय्यत्वेन श्वानयतीत्येव रूपम् । सम्प्रसारणविधायकस्य श्रूयमाणान्नन्त एव प्रवृत्त्या टिलोपेऽपि सम्प्रसारणं दुर्लभमेवेत्यलम् ॥

शुनयतीति—ननु सम्प्रसारणे कृते पूर्वरूपत्वं बाधित्वा (वार्णादाङ्गमि) तिन्यायेन टिलोपे दुर्लभमिदं रूपमिति चेन्न । शुशुवतुरित्यादौ सम्प्रसारणे कृतेऽनेन न्यायेन 'एरनेकाजि' तियणि रूपाऽसिद्धया पूर्वरूपविषयेऽनित्येन तन्यायाप्रवृत्तेरिति भावः ॥

अन्ये तु शुनयतीति रूपमाहुरिति—इदमत्रारुचिबीजं ब्रह्मवच्छब्दादिष्ठनि मतोर्लुकि टेरित्यस्याप्रवृत्त्या नस्तद्धित इत्यस्य प्रवृत्तिदर्शनादिष्ठनि तस्यादृष्टत्वादित्यसङ्गतम् । किञ्च ब्रह्मिष्ठ इत्यादावित्यप्यसङ्गतम् । तथाहि, केवलाद्गुणवचनत्वेन इष्ठनि एव दुर्लभः । मत्वन्तादिष्ठनि मतोर्लुकि तेन टेरित्यस्य प्रवृत्तिमात्रबोधनेन लुगुत्तरं तद्प्रवृत्त्यापरत्वादित्यप्यसङ्गतम् । किञ्च टेरित्यपेक्षया नस्तद्धित इत्यस्यैव परत्वमिति ॥

**अङ्गवृत्तपरिभाषया सम्प्रसारणन्नेत्येक इति**—अयम्भावः, टिलोपेनासो लोपे सम्प्रसारणाऽप्राप्त्योक्तपरिभाषोपन्यासो व्यर्थः ॥

**विदावयतीत्यन्य इति**—अत्र पूर्ववदेवाऽरुचिबीजम् । एवञ्च विद्वयतीत्येक रूपमिति बोध्यम् ।

**उदीचयतीति**—उदञ्चमाचष्ट इति विग्रहे उद उपसर्गत्वात्पृथक्करणेनैकाच्त्वात्प्रकृतिभावे रूपम् ॥

**तिरायतीति**—तिर्यञ्चमाचष्ट इति विग्रहे तिरसोऽनुपसर्गात्पृथक्करणाऽभावादेकाच्त्वाऽभावेन प्रकृतिभावेन प्रकृतिभावाऽप्राप्तौ टिलोपे रूपम् ।

**असिद्धवदत्रेति चिणोलुङ्न्यायेय प्रथमटिलोपोऽसिद्ध इति**—अपाचितरामित्यत्र चिणः परस्य तशब्दस्य लुकि पुनस्तरप्प्रत्ययस्य लुग् न भवति, प्रथमलुकोऽसिद्धत्वेन व्यवधानात्तद्वदित्यर्थः ॥

इति नामधातुप्रक्रिया ।

---

## अथ तिङन्ते आत्मनेपदप्राक्रिया ।

**कर्तरि कर्मव्यतिहारे**—अत्र कर्मपदेन क्रियाग्रहणं व्यतीहारपदस्य विनिमयः, परिवर्त्तनम्वाऽर्थः, तच्च स्ववस्तुदानपूर्वकपरवस्त्वाङ्गीकाररूपम् । कर्मव्यतिहारपदेन न केवलक्रियाविनिमयो गृह्यते अपि तु परस्परकरणपरिवर्तनमपि, संप्रहरन्ते राजान इति कैयटोदाहरणात् । 'अनुदात्तङित आत्मनेपदमि'ति सामान्यसूत्रेणाऽत्मनेपदसिद्धौ अस्य पृथगारम्भसामर्थ्यात्कर्तृग्रहणमेतत्सूत्रघटकमुत्तरार्थमिति भावः ॥

**नेर्विशः** । अत्रार्थवद्ग्रहणलक्षणप्रतिपदोक्तपरिभाषाभ्यां नेरुपसर्गस्य ग्रहणात् मधूनि विशन्ति भ्रमरा इत्यत्र नात्मनेपदापत्तिः । ननु अटा व्यवायाद्न्यविशतेत्यत्र नात्मनेपदमिति चेन्न । स्वाङ्गस्याऽव्यवधायकत्वात् । नचाऽङ्गभक्तस्याऽटो विकरणान्तं प्रत्यवयवत्वेऽपि धातुम्प्रत्यनवयवत्वेन तदवस्थ एव दोष इति वाच्यम् । (उपसर्गेनियमेऽड्व्यवाय उपसंख्यानमि) ति वार्त्तिकेनोपसर्गात्परधातुतो विहितकार्यस्योपसर्गधात्वोरन्तरालपतिताऽड्व्यवायेऽपि बोधनेनाऽदोषात् । ननु निरूपोपसर्गविशिष्टविशेरात्मनेपदविधाने इत्युक्त्वा मैथिली भर्त्तुरङ्के निविशती भयात्, इति कथं सङ्गतमिति चेन्न । अङ्गानि विशतीमिति पाठभेदेन तत्संगतेरित्यलम् ॥

ननु अपाञ्चतुष्पाच्छकुनिष्वित्यत्र । ( सुडपि हर्षादिष्वेवे ) ति वार्त्तिकम् । अत्र हर्षादिष्वित्यस्याऽभावे अपकिरति कुसुममित्यत्रसुडापत्तिः । तत्सत्त्वे तु आलेखनाभावात्सुडभावः, म्रियमाणो वृषभः पादैर्भुवमपकिरतीत्यत्र हर्षाद्यभावान्नासावित्यभिप्रायेणाह मूले-**हर्षादिष्विति किम् । अपकिरति कुसुममिति । नेष्यत इति** । अत एव भाष्ये ससुट्कान्येवोदाहरणानि दृश्यन्ते । गजोऽपकिरतीति । स्वभावाख्यानमत्र ॥

**णेरणाविति** । अत्र चत्वारि वाक्यानि प्रतीयन्ते । तथाहि, णेरित्येकं वाक्यम्, अणौ यत्कर्म णौ चेदिति द्वितीयम्, स कर्तेति तृतीयम्, अनाध्याने इति चतुर्थम्, आत्मनेपदस्याधिकारः द्वितीययोगे कर्मपदस्य [illegible] तृतीययोगे द्वितीययोगस्यानुवृ-

त्तिस्तत्र कर्मपदस्य कर्मकारकबोधकत्वम्, तथा च, ण्यन्तादात्मनेपदं स्यादणौ या क्रिया सैव ण्यन्तेनोच्येत अणौ यत्कर्मकारकं स चेण्णौ कर्ता स्यान्नत्वाध्यान इति तदर्थः । एत-दुदाहरणानि तु अपरिस्पन्दनसाधनसाध्यः कर्तृस्थभावकाः सपरिस्पन्दनसाधनसाध्याः कर्तृस्थक्रियाश्च, एतच्च तथाहीत्यादिना मूले एव स्पष्टत्वान्नोपपादितम् ॥

नतु पश्यन्तीत्यादिना निवृत्तप्रेपणक्रियाम्प्रतिपाद्याऽध्यारोपितप्रेपणक्रियाम्प्रतिपादय-ति—यद्वेति । हेतुत्वारोपादिति । प्रेपणांशत्यागात्प्रेपणान्तरारोपेणापि सौकर्यप्रतीते-रनुभवसिद्धत्वादत्रापि सौकर्यविवक्षाया एव हेतुत्वमिति भावः । अर्थः प्राग्वदिति । पक्षद्वयेऽप्युदाहरणीभूतान्त्यकक्षाद्वयस्य प्रेपणांशप्रतीत्यभावादिति भावः। आधिक्यादि-ति । अत्र पक्षे णौ चेत्यनेनाऽधिक्यमात्रस्य व्यवच्छेदो नतु न्यूनत्वस्यापि सः । अन्यथा तृतीयकक्षायामपि न स्यात् । प्रकृत्युपात्तप्रेपणांशत्यागेन न्यूनत्वापत्तेरिति भावः ॥

इत्यात्मनेपदप्रक्रिया ॥

## अथ तिङन्ते परस्मैपदप्रक्रिया ।

ननु 'अनुपराभ्यां कृञः' इत्यनेन कर्तरि परस्मैपदविधानात्कर्मकर्तर्यपि तत्प्रसक्तिरिति चेन्न । कार्यातिदेशशास्त्रातिदेशपक्षद्वयमध्ये कार्यातिदेशपक्षस्यैव प्राधान्यात्कर्मकर्तर्यात्मने-पदादिविधायकस्य 'कर्मवत्कर्मणे' त्यस्योक्तसूत्रापेक्षया परत्वादनेन तद्बाधेन तदप्रसक्तेः । नच कार्यातिदेशपक्षेऽप्यतिदिश्यमानकार्याणामुत्पत्तिदेशस्यैव देशत्वांगीकारात्, शास्त्रा-तिदेशपक्षे कर्मवत्कर्मणेत्यनेनात्मनेपदाद्यविधाने तद्विधायकं 'भावकर्मणोरि'ति शास्त्रस्य वातिदेशात्तस्य च अनुपराभ्यामित्यतः पूर्वत्वेनानेनैव तद्बाधाद्दोपस्तदवस्थ एवेति वाच्य-म् । 'कर्तरिशप्' 'शेपादि' ति सूत्रद्वयात्कर्तृपदानुवर्त्तनेन कर्तृरूपे कर्तर्येव परस्मैपदं नतु कर्मरूपे कर्तरीति व्याख्यानेनादोपादिति भावः । नच कर्तव यः करोति व्याख्याने पदार्थतावच्छेदकै-क्येन(१)घटो घट इत्यत्रेव शाब्दबोधो न स्यादिति वाच्यम् । एकस्य कर्तृशब्दस्य स्वतन्त्रपर-त्वादपरस्य व्यापाराश्रयपरत्वेन स्वतन्त्राऽभिन्नव्यापाराश्रय इत्यर्थं पदार्थतावच्छेदकस्य भेदेनादोपादित्यलम् ॥

इति परस्मैपदव्यवस्था ।

## अथ तिङन्ते भावकर्मप्रक्रिया

ननु उत्पत्त्यर्थकाद्भवतेर्णिजन्तात् 'एरचि' इत्यचि निष्पन्नस्य भावशब्दस्य विवरण-माह—भावनेति । भवतेरुत्पत्त्यर्थत्वं ण्यन्तस्य भवतेः शुद्धेन करोतिना समानार्थत्वं च दर्श-यति—उत्पादना क्रियेति । उत्पादना च फलोत्पत्त्यनुकूलव्यापारः । न च फलशब्दस्यो-

---

(१) (अभेदान्वयबोधश्च विरूपोपस्थितयोरेव) तिव्युत्पत्त्यनुरोधाद्विरुद्धधर्माभ्यामुप-स्थितनामार्थद्वयस्यैवाऽभेदान्वयलाभेव नीलो घट इत्यादौ विरुद्धधर्माभ्यां नीलत्वघटत्वाभ्या-मुपस्थितयोर्नीलघटपदार्थयोरभेदान्वयो भवति। घटो घट इत्यत्र तु घटत्वधर्मस्यैक्येन पदा-र्थयोर्विरुद्धधर्माभ्यामनुपस्थितत्वान्नाभेदान्वय इति भावः ।

त्पत्याश्रयबोधकत्वेन द्रव्यादिषु सत्त्वात्स्थीयत इत्यत्र स्थितेरुत्पत्यभावादनुपपन्नमिति वाच्यम् । कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थत्वरूपस्यैव फलत्वात् । कर्मणि प्रत्यये विशेषणविशेष्यभावव्यत्यासेऽपि फलव्यापारयोः फलत्वासम्भवनिरासाय कर्तृप्रत्ययसमभिव्याहार इति विशेषणम् । विशेष्यता च न केवलमुख्यविशेष्यतैव, किन्तु प्रकारत्वावच्छिन्नविशेष्यताऽपि गृह्यते । विशेष्यताशब्देनैतादृशविशेष्यताग्रहणादेव गत्यर्थकधातुप्रकृतिकणिजन्तस्थले संयोगस्य फलत्वोपपत्तिः । तद्धात्वर्थत्वं तद्धातुवाच्यत्वम् । चेतनाचेतनवृत्तिफूत्कारयत्नादीनां क्रियात्वधात्वर्थत्वयोर्बोधनायाऽनेकपर्यायशब्दोपादानम् । क्रियाया धातुवाच्यत्वादेव व्यापारार्थककृञा विवरणविव्रियमाणयोः समानार्थत्वस्य, कथं ज्ञायते क्रियावचनाः पचादयः यदेतेषां करोतिना सामानाधिकरण्यमित्यनेन 'भूवादि' सूत्रस्थभाष्ये स्पष्टप्रदर्शनम् । क्रियात्वञ्च धातुवाच्यत्वसमानाधिकरणो जातिविशेषः । भूवादिसूत्रमेव तत्परिचायकमिति बोध्यम् ।

सामानाधिकरण्याभावादिति । असत्त्वभूतक्रियायाः सत्त्वार्थकयुष्मदादिसामानाधिकरण्यासम्भवादिति भावः ॥

तिङ्वाच्यभावनाया असत्त्वरूपत्वेनेति । असत्त्वरूपत्वञ्च, लिङ्गाद्यनन्वयित्वं सर्वनामपरामर्शयोग्यत्वं वेति ॥

तदुक्तम्—

असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते । इति

औत्सर्गिकत्वेनेति । द्व्येकयोर्द्विवचनैकवचने एकवचमिति भाष्योक्तन्यासेनैकवचनमित्यस्यौत्सर्गिकत्वं बोध्यमिति प्राञ्चः । शेखरकृतस्तु एकक्रियेति 'रूपवादि' सूत्रस्थभाष्येण क्रियाया एकत्वमस्त्येव, तस्य प्रकृत्यर्थेऽन्वयादेकवचनं, स्वोत्तरतिङ्वाच्यकारकगतस्य द्वित्वादिकस्य तत्रारोपात्कर्तृकर्मतिङ्षु द्विवचनादेः सिद्धिः । द्वित्वादिकस्यापि प्रकृत्यर्थे एवान्वयः । यथा हतशायिकाः शय्यन्ते इत्यादौ हतशयनसदृशानि शयनानीत्यर्थ उपमाने बहुत्वोपादानसामर्थ्यादुपमेये तिङर्थक्रियारूपे उपमानगतबहुत्वारोपेण बहुवचनं तद्वत्तिङ्वाच्यकारकगताया एवारोपो नत्वन्यकारकगताया इत्यत्राऽर्थशक्तिस्वभाव एव हेतुरिति ।

तदुक्तं हरिणा—

एकत्वेऽपि क्रियाख्याते साधनाश्रयसंख्यया ।

भिद्यते न तु लिङ्गाख्यो भेदस्तत्र तदाश्रयः । इति ॥

ननु प्रथमपुरुषस्यापि शेषसमानाधिकरणत्वनियतत्वात्सोऽपि न स्यादिति चेन्न ! शेषग्रहणं त्यक्त्वा प्रथमस्योत्सर्गत्वकरणेन तदुपपत्तेः । भावाख्यातस्थले एकवचनमेवेति वदतो दीक्षितस्य (तव)मतेऽपि यत्रैकवचनञ्चान्यच्च प्राप्नोति तत्रैकवचनमेवेति नियमांगीकार एवेष्टसिद्धिः । अन्यथा द्वित्वे द्विवचनमेव बहुवचनमेवेति नियमेन द्विवचनबहुवचनयोरनियतत्वादेकत्वेऽप्यापत्तिः । किन्त्वेकवचनमेव तस्यौत्सर्गिकत्वेन संख्यानपेक्षणादिति दीक्षितोक्तिस्तु न समीचीना, वक्ष्यमाणप्रकारेण प्रथमपुरुषैकवचनोपपत्तेः । तथाहि, यथा कर्मण्येव द्वितीयेत्यादिरीत्या प्रत्ययनियमेऽव्ययेभ्यो विभक्तिसामान्याऽभावप्रसक्तौ सत्यामेक-

वचनमिति सूत्रस्याप्राप्तप्रापणार्थत्वेनाऽविशेषात्सर्वविभक्त्येकवचनविधायकत्वन्तथा प्रकृतेऽपि सर्वेषाम्पुरुषाणामनेकवचनानि प्राप्नुवन्ति । उक्तप्रकारेणैकवचनमित्यस्य नियमत्वे तु येषाम्प्रत्ययानामेकवचनञ्चान्यच्च प्राप्नोतीत्याकारकोक्तियोध्यत्वं तेष्वेकवचनमेवेति नियमे प्रथमपुरुषैकवचनमेव भवतीति भावः ॥

ननु आर्द्धधातुक इत्यादेर्विषयसप्तमीत्वाद्वधादेशस्यान्तरंगत्वेन चिण्वत्वं बाधित्वा वधादेश एव स्यादत आह—आशीर्लिङि वधादेशस्येति । अपवाद इति । वाक्यार्थबोधवेलायां बाधनाऽभावेन हन्तेरपि सीयुटा सम्बन्धेन तस्य निरवकाशत्वात्तस्यापवादत्वम् । भाष्ये तु वधिभावात्सीयुटि चिण्वत्त्वं विप्रतिषेधेनेत्युक्तम् । एवञ्चायुक्तमेवापवादत्ववर्णनमित्यलम् ॥

ननु चिण्वद्भावेन चिणि दृष्टकार्यस्य विधानादवधोदित्यादौ चिणि वधादेशस्य दृष्टत्वादत्रापि वधादेशो दुर्वार इत्याशङ्कते—नच स्यादिष्विति । समाधत्ते—अङ्गस्यैवातिदेशादिति । चिण्निमित्तकाङ्गसम्बन्धिकार्यस्यैव विधानादवधीदित्यादौ लक्ष्यानुसारिव्याख्यानाच्च चिण्निमित्तकवधादेश इति ॥

ननु ह्रस्वपदानुवृत्त्यैव विकल्पसिद्धौ 'चिण्णमुलोरि'त्यत्र दीर्घग्रहणमनावश्यकमित्यभिप्रेत्याह—प्रकृतो मितां ह्रस्व एव तु न विकल्पित इति ॥

दीर्घविधौ हि णिचो लोपो न स्थानिवदिति । 'न पदान्त' सूत्रेण दीर्घविधौ स्थानिवत्त्वनिषेधादिति । नच 'असिद्धवदत्रे'ति णिचोऽसिद्धत्वमिति वाच्यम् । समानाश्रयत्वाऽभावेनाऽऽभीयासिद्धत्वाऽप्राप्तेः । भाष्ये तु उक्तनिषेधसूत्रे दीर्घविधेः प्रतिदीव्न इत्युदाहरणदानात् त्रैपादिकदीर्घस्यैव ग्रहणेवोचितमेव तत्प्रत्याख्यानमित्यर्वाचामभिप्रायः ॥

नन्वेवं ण्यन्ताण्णौ दीर्घविकल्पानापत्तिर्व्यधानादत आह—णाविति जातिपरो निर्देश इति । दीर्घग्रहणं मास्त्विति । ह्रस्वविकल्पेनाऽपीष्टसिद्धिरिति भावः । वस्तुतस्तु 'चिण्णमुलोरि'तिसूत्रस्थं दीर्घग्रहणमावश्यकमेव, घटादिपठितहेडधिणि अहिडि अहीडीति रूपसिद्ध्यर्थं दीर्घग्रहणं, ह्रस्वविकल्पे तु अहेडीति स्यात् । एवं ण्यन्ताण्णिचि रूपसिद्ध्यर्थमपि दीर्घग्रहणमिति दिक् ॥

इति भावकर्मप्रक्रिया ।

---

## अथ तिङन्ते कर्मकर्तृप्रक्रिया ।

यदा सौकर्येति । सुखेन कर्तुं योग्यः सुकरस्तस्य भावस्सौकर्यम् । कर्तुर्व्यापारो न विवक्ष्यत इति—सौकर्यातिशयबोधनाय कर्मादिकारकव्यापारस्यैव प्रधानधात्वर्थत्वेन विवक्षणात्कारकान्तराणामपि स्वस्वव्यापाराश्रयत्वेन कर्तृत्वाक्षतेः । सकर्मका अपि प्रायेणाऽकर्मका इति—व्यापारव्यधिकरणफलाश्रयाभावेन तेषामकर्मकत्वम् । द्विकर्मकधातूनां कर्मणः कर्तृत्वात्प्रायेणेत्युक्तम् । तेन यगात्मनेपदचिण्चिण्वदिटः स्युरिति । ननु कार्यातिदेशेऽप्यतिदिश्यमानकार्याणामुत्पत्तिदेशस्यैव देशत्वाङ्गीकारात्परत्वाच्छप्परस्मैपदे एव ननु यगात्मनेपदे इति चेन्न । 'न दुहस्नुनमामि'त्यादिसामर्थ्यात्परस्यापि बाधेन तदप्राप्तेरिति भावः ॥

ननु शास्त्रातिदेशेऽपि लक्ष्यसिद्धौ कार्यातिदेशाङ्गीकरणं किमर्थमिति चेन्न । शास्त्रस्यापि कार्यार्थत्वेन मुख्यत्वात्कार्यातिदेशस्यैवाङ्गीकारादित्याह—कार्यातिदेशोऽयमिति ।

ननु सौकर्यातिशयबोधनार्थं कर्तृव्यापारविवक्षणे कर्मादेः कर्तृत्वेन धातोरकर्मकत्वेन ततः कर्तृभावयोर्लकारविधानेन तत्र भावे लकारविधाने कर्तुरनभिहितत्वातिदेशेन तस्य कर्मवद्भावेन द्वितीया दुर्वारैत्याशयेनाह—द्वितीया स्यादिति। नचैतदपेक्षया तृतीयायाः परत्वादेतदापत्तिप्रदर्शनस्यैवौचित्येन द्वितीयापत्तिप्रदर्शनमयुक्तमिति वाच्यम् । अतिदिश्यमानकार्यायां कार्यातिदेशस्यैव देशत्वमित्यर्वाचीनमते द्वितीयायाः परत्वेनादोपात् । भाष्यमते तृतीयापत्तिरेव, तस्याश्च 'न दुहस्नुनमां यक्चिणौ' 'कुषिरजोरि' त्याद्यारम्भसामर्थ्यात्परस्मैपदे विधीयमानशप्परस्मैपदबाधेऽपि प्रथमाबाधे मानाऽभावः समाधानम् । तथा च पूर्वोक्तापत्तिस्तदवस्थैवेति चेन्न । भावे प्रत्यये कृते कर्तुर्लकारेणानुपस्थित्याऽतिदेशाप्रवृत्तेः । ( व्यत्ययो बहुलं ) (लिङ्याशिष्यङि)ति संहितापाठेऽनुस्वारस्य परसवर्णेन जाते लकारे द्विलकाराल्ल इत्यनुवृत्त्या लकारवाच्यस्यैव कर्तुः कर्मवद्भाव इत्यर्थलाभेन यगादिकमेव नतु द्वितीयेति भावः । अत एव कृत्यक्तखलर्था न कर्मकर्तरि किन्तु भाव एवेति भावः । लकारेणैव कर्मकर्तुरुपस्थानेन कृदादिप्रसक्तिर्न, उक्तार्थानामप्रयोगात् । लविधेः पूर्वं तु सुतरां न तत्प्रसक्तिर्लकारोपस्थाप्यकर्तुरभावेन कर्मवत्त्वाऽभावादितिभावः ।

ननु तुल्यत्वं नाम सादृश्यं तस्य च भेदनिबन्धनत्वेन प्रकृते कर्मणः कर्तृत्वविवक्षायां कर्मस्थफलरूपक्रियाया एव कर्तृस्थत्वेन भेदाऽभावात्सूत्रमिदमसंगतमित्याशंकते—ननु पचिभिद्योरिति । वास्तविकभेदाऽभावेऽप्युपाधिकृतभेदोऽस्त्येवेत्यभिप्रेत्य समाधत्ते—कर्मत्वकर्तृत्वेति—यथा पीतघटो नीलघटभिन्न इत्यत्र विशेषणभेदाद्भेदस्तथैव कर्तृत्वसमानाधिकरणा कर्मत्वसमानाधिकरणा च क्रिया भिन्नैवेति भावः ॥

तुल्यत्वव्यवहार इति । प्रत्यासत्त्या समानधातौ कर्मस्थक्रियया तुल्यक्रियाश्रयणात् पचत्योदनं देवदत्त इत्यत्र कर्मणो राध्यत्योदन इत्यत्र कर्तृत्वेऽपि न कर्मवद्भाव इति भावः । कर्मणेति किमिति । एतदभावेऽसिस्थाल्योर्व्यापारसत्त्वात्क्रियया तुल्यक्रियत्वस्याक्षतत्वाद्दोषः । तत्सत्त्वे तु सामर्थ्याद्दृश्यमानकर्मनिष्ठविशेषप्रयोजककर्मस्थक्रियाया ग्रहणान्न साध्वसिरित्यादौ दोष इति भावः ॥

ननु करणत्वाद्यवस्थायां वस्तुतः सन्नप्यसिस्थाल्योर्व्यापारो, न धातूपात्तः, प्रकृतसूत्रे च 'धातोरेकाच' इत्यतो धातोरित्यनुवर्त्य धोतोर्वाच्यक्रियया तुल्यक्रिय इत्यर्थं न दोषोऽत आह—किञ्चेति । कर्मणेत्येतत्सामर्थ्येन दृश्यमानकर्मनिष्ठविशेषप्रयोजककर्मस्थक्रिया लक्ष्यत इति भावः ॥

गच्छति ग्राम इत्यादि । अत्र गम्यमानग्रामादिकर्मनिष्ठविशेषप्रयोजककर्मस्थक्रियाया अभावात्कर्तृस्थक्रियात्वमिति भावः ॥

सकर्मकाणां प्रतिषेध इति । सौकर्यविवक्षणाऽभावेपि प्राप्तकर्मवद्भावनिषेधार्थं वार्त्तिकमिदम् । पच्यते ओदन इत्यत्रात एव दोषो न ।

अन्योऽन्यं स्पृशत इति । अयम्भावः, कर्मपदेन तत्स्थक्रिया लक्ष्यते नतु तेन कर्मत्वोपयोगिनी तत्स्था क्रिया मानाभावात्, एवञ्चान्योऽन्यमित्यादावुभयोः शब्दभेदेन

कर्तृत्वकर्मत्वसत्त्वादेवैकस्मिन् संयोगानुकूलक्रिया संयोगो वा सैवाऽपरस्मिन्कर्तरीति कर्मस्थक्रियकर्तृसत्त्वात्प्राप्तिः । आश्रयभेदेन च तुल्यत्वम् । नच स्पर्शस्य कर्तृस्थत्वेन कथमेतत्प्रवृत्तिरिति वाच्यम् । तयोः कर्मणोरन्योऽन्यसंयोगकृतहर्षादिलक्षणविशेपदर्शनात्कर्मस्थत्वेन तत्प्रवृत्तेरिति भावः ॥

अजा ग्रामं नयतीति—गमनानुकूलव्यापाररूपेणाऽजानिष्ठफलेन नेतृव्यापारेण वा तत्र विशेपादर्शनेन कर्मस्थक्रियत्वाऽभावादिदं चिन्त्यम् । यदि ग्रामसंयोग एव तथेत्युच्यते तर्हि ग्रामं गच्छतीत्यादौ ग्रामेऽपि पुरुपसंयोगरूपविशेपदर्शनेन गम्यर्थस्यापि कर्मस्थत्वं स्यात् । अत एव अन्योऽन्यमाश्लिष्यत इत्येवोदाहृतम्भाष्ये इत्यलम् ॥

विध्यर्थमिदमिति । उपवासादितपः तापसन्तपति दुःखयतीत्यर्थः । एवञ्च तापसस्य कर्मत्वे तपेर्दुखजननमर्थः । तापसस्य कर्तृत्वे तु अर्जनमर्थः । तापसस्तपस्तप्यते अर्जयतीत्यर्थः । एवञ्च क्रियाभेदात्सकर्मकत्वाचाऽप्राप्ते विधिरिति भावः । एवकारस्तु व्यर्थ एवेति वृत्त्यनुसारिण इति । भाष्ये तु (सकर्मकाणां प्रतिपेधो वक्तव्यः) इत्यत्र प्रत्याख्यानाय एवकारसामर्थ्यान्नियमार्थत्वमुक्तं तपेरेव सकर्मकस्य नान्यस्येति दिक् ।

इति कर्मकर्तृप्रक्रिया समाप्ता ॥

इति मैथिलवंशोद्भवस्य ठक्कुरोपनामकश्रीकनकलालशर्मणः कृतौ फक्किकारत्नमञ्जूपायामुत्तरार्द्धे तिङन्तप्रकरणं समाप्तम् ॥

---

# अथोत्तरार्द्धे कृदन्तप्रकरणम् ।

प्रणम्य तावच्चरणारविन्दं श्रीविश्वनाथस्य ततो गुरोश्च ।
कृतेर्निजायाः क्रियते शुभायाः कृदन्तभागः कृतिना मयाऽस्याः ॥१॥

ननु 'कृदतिङि' त्यनेन तिङ्भिन्नप्रत्ययस्य कृत्संज्ञाविधानेन कृताञ्च तिङ्ज्ञानाधीनज्ञानेन तिङ्निरूपणोत्तरमेव कृन्निरूपणस्यौचित्यात्तिङं निरूप्य कृतं निरूपयितुमारभते धातोरिति । नच 'स्पृशोऽनुदके' 'ऋत्विक् दधृगि' त्यादिशास्त्रेण प्रागेव तिङ्निरूपणात्क्विन्नादिकृतान्निरूपितत्वात्पुनरिह तेपान्निरूपणमयुक्तमिति वाच्यम् । तत्र तेपां प्रसङ्गतो निरूपणेऽपि प्राधान्येनाऽत्रैव कृतां निरूपणस्यौचित्येनोक्ताशङ्कानुदयादित्यलम् ॥

प्राग्लादेशाद्धात्वधिकार इति पक्षस्यायुक्तत्वं ध्वनयितुमाह—आतृतीयसमाप्तेरिति । तृतीयाध्यायसमाप्तिपर्यन्तमित्यर्थः । लादेशात्प्राग्धात्वधिकारे तु 'तिङ्शित्सार्वधातुकमि'त्यत्र धात्वधिकाराभावाच्छित्प्रत्ययमात्रस्य सार्वधातुकसंज्ञाविधानेन श्नसोऽप्युक्तसंज्ञापत्तौ तस्य च 'सार्वधातुकमपिदि'ति ङित्वे हरीनित्यादौ 'घेर्ङिती' ति गुणो दुर्वारः स्यादिति भावः । विधेयानिर्देशात्स्वरितत्वाच्चाऽधिकारसूत्रमिदमित्याह—अधिकारोयमिति । एतदधिकारसूत्रसत्त्वे एव सोपसर्गाणामङ्गत्वव्याप्तिर्भवति । अयम्भावः, एतत्सूत्राऽभावे 'वर्त्तमाने लडि'त्यादेर्वर्तमानाद्यर्थे प्रत्यासत्त्या तादृशार्थप्रतिपादकेभ्यो लडादयः स्युरित्यर्थे सोपसर्गाणामपि तादृशार्थप्रतिपादकत्वेन तेपामङ्गत्वावगादयःयद-

स्थापत्तेरिति । नच तृतीयाध्यायसमाप्तिपर्यन्तं 'धातोरेकाजि'ति सूत्रस्थधातोरित्यस्य सम्बन्धेन धातोरेव लडाद्यापत्त्या नतु सोपसर्गाणामङ्गत्वप्रसक्तिरिति वाच्यम् । द्वितीयस्य धातोरित्यस्याऽधिकारसूत्रस्याऽभावे 'तिङ्शिदि'त्यस्य 'आर्द्धधातुकमि' त्यस्य च धातोर्ये तिङः शितश्च ते सार्वधातुकाभिन्नास्तेभ्योभिन्नाश्चार्द्धधातुकाऽभिन्ना इत्यर्थापत्त्या क्विबन्तलूप्रभृतीनामपि धातुत्वेन लूभ्यां पूभ्यामित्यादौ भ्याम आर्द्धधातुकत्वस्य सत्त्वादिडापत्तिः । द्वितीयधातोरिति सत्त्वेन उक्तसूत्रयोर्धातोर्धातोरित्येवमानुपूर्वीकशब्दोच्चारणेन विहितानान्ते संज्ञे इत्यर्थे न भ्याम आर्द्धधातुकत्वप्रसक्तिरिति भावः ॥

भावे औपसर्गिकमेकवचनं क्लीबत्वञ्चेति—भावे प्रत्ययविधानात्तत्र च लिङ्गसंख्याऽभावेन सामान्ये नपुंसकमिति नपुंसकत्वमुत्सर्गतश्चैकवचनं भवति । यत्र लिङ्गत्रयमध्ये कस्यापि लिङ्गस्य विवक्षा न तत्र नपुंसकलिङ्गमेव भवति, यत्र च कस्याश्चिदपि संख्याया न विवक्षा तत्रैकवचनमेव भवतीति भावः ॥

वृत्तिकारस्तु कर्मकर्तरि चायमिष्यत इत्याहेति—(केलिमर उपसंख्यानमि)-तिवार्त्तिकविहितकेलिमरप्रत्ययः कर्मण्यर्थे भवति नत्वन्यस्मिन्नर्थे इति सिद्धान्तः, तत्रोक्तप्रत्ययस्य कर्मणि कर्मकर्तरिचेत्युभयस्मिन्नर्थे विधानमङ्गीक्रियते वृत्तिकृतेति दीक्षित उक्तवान् । परमेतन्मतमयुक्तमित्याह—तद्भाष्यविरुद्धमिति । तत्र हि भिदेलिमा इत्यस्य भेत्तव्या इति विवरणं प्रदर्शयद्भाष्यकृन्नये कर्मण्येवोक्तप्रत्ययो लभ्यते नतु कर्मकर्तर्यपीत्यतो भाष्यकृन्मताद्वृत्तिकृन्मतं विरुद्धमिति तन्मतमुपेक्ष्यमिति भावः ॥

विहितविशेषणं किम् । यका व्यधानेऽपि यथास्यात् । प्रयाप्यमाणं पश्येति । विहितविशेषणकरणे प्रपूर्वकयातेर्णिचि पुकि ण्यन्तस्य धातुत्वेन वर्तमाने कर्मणि लटि तत्स्थाने शानचि तस्य शित्त्वात्सार्वधातुकत्वे यकि णिलोपे मुकि शानचो ण्यन्ताद्विहितत्वेन तन्नकारस्य णेर्विभाषेति णत्वे च रूपं सिद्ध्यति । विहितविशेषणाकरणे तु ण्यन्तात्परस्योपसर्गस्थनिमित्तोत्तरकृत्स्थनकारस्य णत्वं वेतिसूत्रार्थे शानचो यका व्यवायेन ण्यन्तात्परत्वाभावाण्णत्वाऽप्राप्त्या रूपं न सिद्ध्यति । नच अड्व्यवायेऽपीति सूत्रेणैव णत्वसिद्धौ विहितविशेषणमनावश्यकमेवेतिवाच्यम् । णेर्विभाषेत्यत्र ण्यन्तकृतोरव्यवधानस्यापेक्षणादड्ग्रहणेन वारणाऽसम्भवेन विहितविशेषणस्यास्यावश्यकत्वादिति भावः ॥

ननु 'इजादेः सनुमः' इत्यस्य प्रसङ्गनीयमित्यत्र 'कृत्यचः' इत्यनेन प्राप्तणत्वव्यावृत्तये विहितविशेषाङ्गीकरेऽपि न नियमार्थत्वं नुमो नकारेण व्यवधानात्कृत्यच इत्यस्याऽप्राप्त्या प्रेन्वनमित्यत्र विध्यर्थत्वादत आह—नुम्ग्रहणमनुस्वारोपलक्षणार्थमिति । 'अट् कुप्वाङ् नुमि'त्यत्रैव प्रकृतेऽपि नुमाऽनुस्वारस्य लक्षितत्वान्न शङ्काकलङ्कलेशोऽपीति भावः ॥

ननु ण्यन्तस्य प्रकृत्यन्तरत्वेन प्रकृतिग्रहणेनाऽग्राह्यत्वान्निषेधानापत्त्या प्रभापनीयमित्यादौ णत्वं दुर्वारमेवेत्यत आह—ण्यन्तभादीनामुपसंख्यानमिति । केचित्तु 'ह्रेरचङी'ति सूत्रेऽचङीति पर्युदासेन (प्रकृतिग्रहणे ण्यधिकस्याऽपि ग्रहणमि)ति ज्ञापनात्सिद्धमिदमित्याहुस्तन्न, ज्ञापनस्य कुत्वमात्रविषयपरत्वेन भाष्यादौ सिद्धान्तितत्वादित्यलम् ॥

ननु प्रख्यानीयमित्यत्र, अट्कुप्वाङ्नुमित्यनेन णत्वं दुर्वारमित्यत आह—ख्यात्रः

शस्य यो वेत्युक्तमिति। चक्षिङः ख्याञ् इत्यनेन न ख्याञादेशः किन्तु क्शाञादेश एव, तस्य शकारस्य णत्वप्रकरणोपरस्थितेन शस्य यो वेतिसूत्रेण यत्वे रूपं सिद्ध्यति, एवञ्च अट्कुप्वाङ्नुमित्येतद्दृष्ट्या यत्वस्यासिद्धत्वाच्छकारेणाऽतिरिक्तेन व्यवधानान्न णत्वप्राप्तिरिति भावः॥

ननु 'अचो यदि' त्यत्राऽज्ग्रहणं हलन्ताद्यतोऽभावाय तस्य च ऋवर्णान्तादिवद्धलन्तादपि ण्यता बाधेनोपपत्तौ व्यर्थमेव तदित्याह—अज्ग्रहणं शक्यमकर्त्तुमिति। केचित्तु अजन्तभूतपूर्वादपिधातोर्यत्प्रत्ययार्थमज्ग्रहणं तेन दित्स्यं धित्स्यमित्यत्र यति कृते 'यतोऽनाव' इत्युदात्तत्वसिद्धिः। अन्यथा यति कृते 'तित्स्वरितमि'ति स्वरितत्वापत्तिरित्याहुस्तन्न, (१)आर्धधातुकविवक्षायामकारलोपेऽज्ग्रहणस्योक्तफलकत्वसम्भवेन तस्मिन्परे तु तस्याऽकिञ्चित्करत्वात्। लोपस्य परनिमित्तकत्वानङ्गीकारे तु गणयतीत्यादावुपधावृद्धिप्रसक्तिः॥

ननु जन्यमिति रूपस्य यता ण्यता वोभयथा सम्भवाद्धलोर्ण्यदिति ण्यतैव रूपसिद्धौ तकिशसिचतीतिवार्त्तिके जनेर्ग्रहणं व्यर्थमित्यत आह—जनेर्यद्विधिः स्वरार्थ इति। यतोऽनाव इत्याद्युदात्तस्वरार्थ इत्यर्थः॥

ननु ण्यद्यतोरसरूपत्वेन वाऽसरूपोऽस्त्रियामित्यनेन यता ण्यतो वैकल्पिकबाधेन पक्षे ण्यत्प्रत्ययो दुर्वार एवेत्यत आह—नानुबन्धकृतमसारूप्यमिति। अनेकान्तपक्षेऽनुबन्धानामनवयवात्तत्कृताऽसारूप्यस्य न ग्रहणम्। एकान्तपक्षेऽपि ददातिदधात्योर्विभाषेति विभाषाग्रहणज्ञापकादनुबन्धकृताऽसारूप्यस्यानाश्रयणादुक्तपक्षद्वये न ण्यतः प्रसक्तिरितिभावः॥

ननु धातूनां हलन्ताजन्तभेदेन द्वैविध्यात्तत्र हलन्ताण्ण्यतो वक्ष्यमाणत्वात्परिशेषादजन्तादेव यतो विधानेन तव्यदादिष्वेव तद्ग्रहणादिष्टसिद्धौ पृथग्योगो नावश्यक इत्यभिप्रेत्याह—योगविभागोऽप्येवम्, तव्यदादिष्वेव यतोऽपि सुपठत्वादिति।

ननु 'पोरदुपधादि' त्यनेनाऽकारोपधपवर्गान्तधातोर्यद्विधानेन आङ्पूर्वकाल्लभेर्यादिप्रत्ययविवक्षायामेव नुमि तदाऽकारोपधत्वाभावान्न यत्किन्तु ण्यदेवेत्याह—नुमि कृतेऽदुपधत्वाभावाण्ण्यदेवेति। ण्यति कृते आलम्भ्य इत्यत्र समासान्तोदात्तत्वं बाधित्वा कृदुत्तरपदप्रकृतिस्वरेणेष्टस्य स्वरितान्तत्वस्य सिद्धिः। यति प्रत्यये तु 'यतोनाव' इत्यनेनाऽऽद्युदात्तत्वादनिष्टस्योत्तरपदाद्युदात्तत्वस्यापत्तिरिति भावः।

ननु यमेः पवर्गान्तत्वेन पोरदुपधादित्यनेनैव सिद्धौ (गदमदे)ति सूत्रे तद्ग्रहणं व्यर्थमित्यत आह—यमेर्नियमार्थमिति। यमेश्चेदनुपसर्गादेवेतिनियमाकारः' तेनोपसर्गविशिष्टस्य तु प्रयाम्यमित्येव तत्रापि ( न तत्र भवेद्विनियम्यमि)ति वार्त्तिकप्रयोगदर्शनात् विनीत्युपसर्गद्वयातिरिक्तोपसर्गविशिष्टस्य माभूदिति संकोचः।

शतेन वर्या कन्येति। अत्र शतशब्दोऽनियतपरस्तेन कन्याया वरणे वरयितॄणां नि-

---

(१) आर्धधातुकविवक्षायामकारलोपे तदानीं हलन्तत्वात् ण्यतः प्रसक्तिः। आर्धधातुकपरे लोपस्तु प्रत्यये सत्येव लोपः, लोपे सत्येव हलन्तत्वसम्भवः, इति प्रत्ययोत्पत्तिकालेऽजन्तत्वस्यैव सत्वाद्यदेवेति केचिदित्याद्विना प्रतिपादितमसङ्गतमेवेति।

यमो नास्तीत्यर्थः । अयम्भावः, सूत्रेऽनिरोधग्रहणसद्भावे सामर्थ्यादनिरोधरूपार्थकादेव वृङो यति वर्येति सिद्धम् । अनिरोधग्रहणाऽभावे तु विनिगमकाऽभावेन वृङ्वृञोरुभयोरपि ग्रहणापत्त्या ततो यदापत्तिरित्येतद्ध्वनयन्नाह—वृत्यान्येति । ननु 'पतिस्तुशास्वृ' इत्यत्र वृञ्ग्रहणे सामर्थ्यान्नास्य तत्राग्रहणमिति चेन्न । अत्रत्यवृञ्ग्रहणस्य पुंसि चरितार्थत्वात् । तत्र सूत्रेऽवद्यादीनि निर्विभक्तिकानि नतु द्वन्द्वः, तेन वर्येति स्त्रियामेव विधीयते । अस्त्रियां तु वृङः 'ऋहलोर्ण्यत्' वार्या ऋत्विजः । सूत्रे द्वन्द्वाभिप्रायेण सुग्रीवो मम वर्योऽसावित्यादयः प्रयोगा बोध्या इत्यलम् ॥

वदः सुपि क्यप् च । ननु लः कर्मणीत्यनेन यथा सकर्मकेभ्यः कर्मणि कर्तरि लकारविधानादकर्मकेभ्यो भावे कर्तरि च, तथा 'तयोरेव कृत्यक्तखलर्थाः' इत्यनेनापि सकर्मकेभ्यः कर्मणि कर्तरि कृत्यप्रत्ययविधानादकर्मकेभ्य एव भावे तद्विधानमिति सिद्धान्तात्सकर्मकधातुभ्यो भावे कृत्प्रत्ययविधानं दुर्लभमित्यत आह—भाव इत्यपकृष्यत इति ।

ननु भुवो भावे इत्यत्राऽनुपसर्गे इत्यनुवर्त्य निरुपसर्गस्य भवतेरकर्मकत्वात् तयोरेवेति सूत्रेण भाव एव कृत्यप्रत्ययसिद्धौ भावग्रहणं व्यर्थमिति चेन्न, तस्योत्तरार्थत्वेन सार्थक्यस्य भाष्येऽभिहितत्वात् । एतद्भाष्यमतानुयायिमतं प्रदर्शयति—कर्मणि प्रत्ययावित्येके इति ।

ननु सूत्रे सामान्यरूपेण वृशब्दोपादानाद्वृञ्वृङो ग्रहणं स्यादत आह—वृञ इति वृञो ग्रहणं न वृङ इति । ईडवन्द इति सूत्रज्ञापकान्न वृङो ग्रहणमिति तदर्थः । तत्र हि ईडवन्द साहचर्यादात्मनेपदिनो वृङ एव ग्रहणम्, अत्र वृञो ग्रहणे तु तत्र वृग्रहणं व्यर्थं स्यादिति भावः,

पुनः क्यबुक्तिः परस्यापिण्यतो बाधनार्थेति । 'ओरावश्यके' इति विहितस्य ण्यतोऽवकाशः आवश्यकविवक्षायां लाव्यमिति, क्यपोऽवकाशः स्तुत्य इति, अवश्यस्तुत्य इत्यादौ द्वयोः प्राप्तौ विप्रतिषेधसूत्रबलेन परत्वाण्ण्यत् स्यादतस्तद्व्यावृत्त्यर्थं पुनः क्यबुक्तिरिति भावः ।

इचेति ह्रस्वः सुपठ इति । इत्थं हि दीर्घपठतः सूत्रकारस्याऽभिप्रायः, इ इ इति प्रश्लेषाद्द्वितीय इकारो 'ये विभाषे'त्यात्वबाधनाय, अन्यथा येइति विषयसप्तमी तेन यकारादौ प्रत्यये बुद्धिस्थ एव प्राप्तस्याऽऽन्तरङ्गत्वेन क्यपा सह विधानादिकारस्य बहिरङ्गत्वेनात्वं दुर्वारं स्यादिति । दीर्घस्य प्रत्याख्यानं कुर्वतो भाष्यकर्तुस्त्वयम्भावः, क्यप्सन्नियोगशिष्टत्वादित्वमन्तरङ्गम्, ये इति परसप्तम्याश्रयणादात्वं बहिरङ्गम्, तथा च युक्त एवाऽऽत्वस्येत्वेन बाधः, न च ह्रस्वादेशे 'षत्वतुकोरि'ति गुणस्यासिद्धत्वे तुगिति वाच्यम्, पदान्तपदाद्योरेवैकादेशस्याऽसिद्धत्वात्, एतदनङ्गीकारे वृक्षेच्छत्रमित्यत्र नित्यतुगापत्तिः, इष्टस्तु वैकल्पिक इतिप्राञ्चः । शेखरकृतस्तु ये विभाषेत्यत्र ये इति विषयसप्तमीत्वेऽपि जनादिसाहचर्येण यादिप्रत्ययोत्पत्तिपूर्वकाले नान्तस्यैवात्वविधानेन क्यबुत्पत्तेः प्रागेवेत्वेनाऽत्र तदप्राप्त्या नस्येत्वे आद्गुणेन रूपसिद्धेः, एतत्क्लेशवारणायैव दीर्घोच्चारणमित्याहुः ॥

ननु 'भृञोऽसंज्ञाया'मित्यत्राऽसंज्ञाग्रहणसत्त्वेन तत्रैव क्यपो विधानाद्भार्या वधूरित्यत्र संज्ञायामेतदप्राप्तावपि संज्ञायां क्यप् विधीयते 'संज्ञायां समजनिषद' इत्यनेन क्यप्

दुर्वार इत्याशङ्कते—अथ कथं भार्या वधूरिति । ननु असंज्ञाग्रहणसामर्थ्यात्तत्र सूत्रान्तरेणाऽपि क्यप् न स्यादत आह—संज्ञापर्युदासस्तु पुंसि चरितार्थ इति । उक्तापत्तिवारयति—विभर्तेर्भृ इति । (तदनुबन्धकग्रहणे नातदनुबन्धकस्ये)ति परिभाषया डुभृञ्धातोः क्यब्विधौ ग्रहणेन विभर्तेर्ण्यता रूपसिद्धिरितिभावः ।

ननु "चजोः" इति सूत्रे निष्ठायामनिट इति पठित्वा निष्ठायामनिट् धातोश्चजोः कुत्वमित्यर्थे गर्जधातोर्निष्ठायां सेट्त्वेन गर्ज्यमित्यादौ 'न क्वादेरि'ति सूत्रोदाहरणे कुत्वभावं सम्पाद्य वार्त्तिककारेण प्रत्याख्यातन्तत्सूत्रम् । अर्जितर्जिप्रभृतीनां निष्ठायां सेट्त्वेन कुत्वाभावः । ग्रुचुग्लुचुप्रभृतीनां क्वादिगणपठितत्वेऽपि 'ऊदितोवे' तिक्त्वायामिड्विकल्पत्वेन 'यस्य विभाषे' ति निष्ठायामनिट्त्वात्कुत्वम्भवत्येव सूत्रकृन्मते तु स्यादिति परस्परविरोधेऽपि उत्तरोत्तरमुनिवाक्यस्य प्रामाण्याद्वार्त्तिककृन्मतमेव ज्याय इत्याह—यथोत्तरं मुनीनां प्रामाण्यादिति प्राञ्चः । नागेशास्तु वार्त्तिकस्य सूत्रदूषणाय प्रवृत्तत्वाद्भाष्यकृता च वार्त्तिकमते शोक इत्यस्यासिद्धिमाशंक्य सूत्रकृन्मतेऽपि ण्यति कुत्ववारणाय नियमार्थमावश्यकेन ग्रुचेर्घञीति वचनेन समाधानाद्वार्त्तिकमतस्यैवाऽभ्यनुज्ञानाच्चेत्याहुः ॥

ननु 'प्रपातिसर्गे' ति सूत्रे चकारेण लोटोऽनुकर्षणात्तेन कृत्यप्रत्ययाऽबाधाय कृत्यग्रहणं, (वासरूप) विधेर्नित्यत्वे विकल्पबाधेन पक्षे कृत्यप्रत्ययसिद्धौ सूत्रे पुनस्तद्ग्रहणेन सामर्थ्यादुक्तविधेरनित्यत्वज्ञापनेन (क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ती) तिसिद्धिरित्यभिप्रायेणाह—इह लोटा बाधेत्यारभ्य नेति सिद्धमित्यन्तमिति । वस्तुतस्तु वासरूपविधेरनित्यत्वे (अर्हेकृत्यतृचश्चे)ति सूत्रस्यैव ज्ञापकत्वमिति लिङा बाधा माभूदित्यादिना मूले एव स्पष्टमिति भावः । मूले क्वचिन्नेत्यस्य क्त्वाप्रत्ययेन तुमुनो नित्यबाधाऽभावेन आसित्वा भुंक्ते आस्यते भोक्तुमिति च भवतीति फलम् ॥

आगमस्य दीर्घत्वसामर्थ्यादभ्यासह्रस्वो हलादिः शेषश्चनेति । नच दीर्घाऽऽगमोच्चारणस्य सवर्णदीर्घबाधकत्वेनोपक्षयात्सामर्थ्याभावेन मूलोक्तमसङ्गतमिति वाच्यम्, (अनन्तरस्ये) ति न्यायेन हलादिः शेषस्यैव बाधात्, वस्तुतस्तु दीर्घप्रवृत्तिकाल एव वैयर्थ्योपस्थित्या तद्बाधस्यैव न्याय्यत्वम्, हलादिः शेषबाधनं तु अभ्यासस्याऽनचीति भाष्योक्तवचनेन साध्यम् । अभ्यासस्य यदुच्यते तदज्निमित्ताऽभ्यासभिन्नस्येत्यर्थः । अत एव लोलुव इत्यादौ गुणः । यद्यप्यत्र वचने वेति भाष्ये नास्ति तथापि रात्रिंचर इत्यादिप्रयोगदर्शनादाश्रितमिति ।

खशोऽन्यत्र नेष्य इति हरदत्त इति । अत्रारुचिबीजन्तु भाष्यानानुकूल्यम् 'टिड्ढाणञि' तिसूत्रे प्रत्यासत्त्या टिदाद्यवयवकारस्यैव ग्रहणं समुचितं भाष्यप्रामाण्यात् । न च टित्त्वसामर्थ्यादतिरिक्ताऽकारस्यापि ग्रहणमिति वाच्यम् । तथासति, धयेत्यत्राऽपिङीबापत्तेर्दुर्वारत्वात् । नच टिदाद्यवयवाकारस्यैव ग्रहणे स्तनन्धयीत्यत्रापि ङीब् न स्यादिति वाच्यम् । गौरादित्वेन तदुपपत्तेः । नच ङीपि स्वरे विशेष इति वाच्यम् । ङीप्यपि उदात्तनिवृत्तिस्वरप्राप्त्या स्वरे विशेषाऽभावादित्यलम् ।

ब्रह्मज्य इति । ब्रह्मरूपोपपदाज्जिनातेर्डे डित्वसामर्थ्यादभस्यापि टेर्लोपे रूपम् । नच क्प्रत्यये आकारलोपेनाऽपि रूपसिद्धौ डविधानं व्यर्थमिति वाच्यम् । तथा सति स-

म्प्रसारणे इयङादेशे च ब्रह्मजिय इत्यापत्तेः। नच कप्रत्ययेऽपि 'एरनेकाच' इति यणि रूपसिद्धौ डविधानं व्यर्थमेवेति वाच्यम्। अङ्गस्यैकाच्त्वेन ज्याधातोरेव प्रत्ययविधानेन विशिष्टादविधानेन च तदप्राप्तेः। नच कर्मण्यधिकारे अकर्मकाज्ज्याधातोः कथं डविधानमिति वाच्यम्। कविधौ सर्वत्रेति वचनसामर्थ्यात् ब्रह्म प्राप्तुं जिनातीत्यर्थाच्चाकर्मकादपि तत्तस्माड्डविधानोपपत्तेः। वस्तुतस्तु अकर्मकेष्वपि सुपीत्यस्य सम्बन्धेन सुप्युपपदे धातोः प्रत्ययविधानेनाऽदोषादितिभावः॥

आह्व इति। नचाऽत्र केऽपि आलोपं बाधित्वा सम्प्रसारणे ततो (वार्णादि) ति न्यायेन पूर्वरूपत्वं बाधित्वा लोपे तस्याभियासिद्धत्वेनोवङोऽप्राप्तौ यणि आह्व इति सिद्धौ डविधानं व्यर्थमिति वाच्यम्। आभीयासिद्धत्वानित्यत्वे वार्णादीति न्यायानित्यत्वे वाऽस्य ज्ञापकत्वात्। तेन जुहुवतुरिति सिद्धमिति भावः॥

अच्वौ किम् आढ्यीकुर्वन्त्यनेनेति। ननु अत्र ख्युनोऽभावेऽपि 'करणाधिकरणयोश्चे'त्यनेन ल्युट् स्यादत आह—प्रतिषेधसामर्थ्यादिति। आढ्यीकरणमिति रूपस्य ल्युट्ख्युनोस्तुल्यत्वम्। नच ख्युनि मुम्ह्रस्वौ स्यातामिति वाच्यम्। 'ऊर्यादिच्विडाचश्चेति निपातसंज्ञकत्वेन च्व्यन्तस्याऽव्ययत्वेन मुम्विधायकेऽनव्ययस्येति पर्युदासेन तदप्राप्तेः। नच ख्युनि 'उपपदमतिङि'ति नित्यसमासलाभो न ल्युटीति वाच्यम्। तत्रापि गतिसमाससम्भवेन तस्यापि नित्यसमासत्वात्। नच ङीट्टाब्भ्याम्विशेष इति वाच्यम्। (नञ्स्नञी)ति वार्त्तिकेन ख्युन्यपि ङीपो विधानात्। नच स्वरे विशेष इति वाच्यम्। ल्युट्ख्युनोर्लिट्नित्स्वराभ्यां द्वञ उदात्तत्वाऽविशेषादित्यलम्॥

भाष्यविरोधादुपेक्ष्यमिति। उक्तं हि भाष्ये सुपीति वर्तमाने पुनःसुब्ग्रहणं किमर्थम्, अनुपसर्ग इत्येव तदभूत्। इदं सुप्मात्रे यथा स्यात्, उदासारिण्यः, प्रत्यासारिण्य इति॥

भाष्यकारवचनाच्छ्रीशब्दस्य ह्रस्वो मुममोरभावश्चेति। अयम्भावः यथा प्रष्ठादिशब्दानां पुँयोगात्स्त्रियां वृत्तिः प्रष्ठी गणिकेति तथेह श्रीशब्दः परित्यक्तस्वलिङ्गः क्लीबः सन् कुले वर्त्तते। तत्र 'ह्रस्वो नपुंसक'ेति ह्रस्वः। नच क्लीबत्वे नुमापत्तिरिति वाच्यम्। अपवादेनाऽमा तद्बाधात्। स्वमोर्नपुंसकादित्यमो लुक् स्यादिति वाच्यम्। अम्विधानसामर्थ्येनैव तद्बाधादिति प्राञ्चः। शेखरकृतस्तु, अत्र 'स्वमोरि'ति लुग्, बाध्यसामान्यचिन्तया 'सुपो धात्वि'ति लुग्वत् अस्यापि अम्विधिसामर्थ्येन बाधात्। किञ्च बहिरङ्गतयाऽपि नाऽमो लुक्। त्रिपाद्यां तद्प्रवृत्तेः। तस्माच्छ्रियं मन्य इत्येव भाष्यसम्मतमित्याहुः॥

चतुर्विधोऽत्र नियम इति। अत्र सूत्रे श्रुतत्वात्पूर्वं ब्रह्मादय उद्देश्यास्ततोऽनन्तरं प्रकृतित्वाद्धन्तिः, ततः परिशेषाद्भूत इति क्विबिति सूत्रार्थः, तत्र विनिगमनाविरहेणाऽविशेषाच्चतुर्ष्वपि एवकारसम्बन्धः। तत्र ब्रह्मादिष्वेव भूतार्थाद्धन्तेरिति प्रकृतिनियमे हन्तेरुपपदान्तरसम्बन्धवृत्तिफलो धातुनियमः, ततश्च भूत इत्याश्रयणेन कालान्तरेऽपि भवति पुरुषं हन्ति हनिष्यति वेत्यर्थे पुरुषहेति। ब्रह्मादिषु भूतार्थादेव हन्तेरिति प्रत्ययनियमे वर्तमानभविष्यत्कालयोः पूर्वप्रयोगसिद्धिः। ब्रह्मादिषु भूतार्थाद्धन्तेरेवेत्युपपदनियमे भूत इत्याश्रयणेन कालान्तरे धात्वन्तरादपि भवत्येव वृत्रं जयति जेष्यति वा वृत्रजित्। न वृत्रं जि-

तवानिति भूते प्रयोगः । ब्रह्मादिषु भूतार्थाद्धन्तेः क्विबेवेतिकालनियमे पितृव्यं हतवान् पितृव्यघातीति भूतेऽपि प्रत्ययान्तरविशिष्टः प्रयोगः । ब्रह्मघातीति प्रयोगाभावो नियमफलं बोध्यम् । द्विविधो नियम इति भाष्यमिति । तथाच भाष्यमुभयतोऽयं नियमः ब्रह्मादिष्वेव क्विबेवेति च । युक्तश्चैतत् श्रुत्योपस्थितोपपदप्रत्यययोरुपरोधापेक्षया प्रकरणलक्षणजघन्यप्रमाणोपस्थितधातुकालयोरेवोपरोधो न्याय्यः । एकश्चैतद्भाष्यविरोधात्पूर्वोक्तमयुक्तमित्यलम् ॥

ननु घ्रपधातोराकारेत्संज्ञकत्वेन 'विभाषाभावादिकर्मणोरि'ति विकल्पे प्राप्ते तदंशे नित्यार्थो विधिः स्यात् ततश्च भावादिकर्मभ्यामन्यत्र वैयात्याऽभावेऽपि 'आदितश्चे'तिनिषेध एव स्यादत आह—भावादिकर्मणोस्तु वैयात्ये धृषिर्नास्तीति । अनभिधानादिति भावः । अत्र प्रमाणमाह—अत एव नियमार्थमिति । तेन भावादिकर्मभ्यामन्यत्र वैयात्याभावेऽपि न 'आदितश्चे'ति निषेधः । हरदत्त इति–अवैयात्ये भावादिकर्मणोरनभिधानाद्वैयात्ये च नियमादादित्वस्य साफल्यमस्त्येवेत्यभिप्रेत्याह-माधवस्तु भावादिकर्मणोरवैयात्ये विकल्पमाहेति ॥

ननु 'द्वे चे'त्यनेन द्वित्वे कृतेऽपि प्रत्यासत्त्या पाष्ठद्वित्व एवाभ्याससंज्ञाप्रवृत्त्याऽऽष्टमिके तदप्रवृत्त्या स न स्यादत आह—द्विग्रहणादभ्याससंज्ञेति ॥

इति पूर्वकृदन्तप्रकरणम् ।

---

## अथोत्तरकृदन्तप्रकरणम् ।

ननु उणादयो बहुलमित्यत्रत्यबहुग्रहणस्याऽपरिपूर्णोणादिपरिपूर्णार्थकस्य फलं प्रदर्शयति–केचिदविहिता अपीति । केचिदनुक्ता अपि धातवः प्रत्ययाश्चोणादिषु ऊह्याः तर्कणिया इत्यर्थः । तथाहि, शकुलेति प्रयोगदर्शनात् हृपेरुलजितिसूत्राद्विहित उलच्प्रत्ययः शकिधातोरपि भवतीति । किञ्च कुत्राप्यविहितयोः फिडफिड्डप्रत्यययोरर्तिः प्रकृतिरूह्यते तयोः कित्वञ्च प्रकल्प्यते । तथा पण्ढ इत्यत्र सत्वाभावश्चोह्यते ।

ननु द्वन्द्वान्ते श्रूयमाणपदस्य प्रत्येकमभिसम्बन्धस्य प्रसिद्धत्वेन शकधृषेति सूत्रस्थार्थग्रहणस्य तत्सूत्रस्थपदेष्वन्वयः स्यादित्यशंक्य समाधत्ते—अर्थग्रहणमस्तिनैव सम्बध्यत इति । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेतिन्यायेनाऽनन्तरेणास्तिनैवार्थग्रहणस्य सम्बन्धो नतु शकादिभिरिति भावः ।

पर्यायोपादानमर्थोपलक्षणार्थमिति—ननु कालशब्दोपादानादेव समयवेलाशब्दाभ्यामपि तुमुन्सिद्धौ पर्यायोपादानं व्यर्थमिति चेन्न । तस्याऽर्थोपलक्षणार्थत्वेन सार्थक्यात् । तथा च कालसमयवेलार्थेपूपपदेषु तुमुन्नित्यर्थेऽनेहाशब्दादपि तुमुन्सिद्धः ।

ननु सृस्थिर इति सूत्रेऽण्यन्तस्य सरतेरुपादानादतीसारो व्याधिरिति प्रयोगो नोपपद्येतेत्यत आह—अन्तर्भावितण्यर्थोऽत्र सरतिरिति-अतीसार इत्यत्रोपसर्गाकारस्य 'उपसर्गस्य घञ्यमनुष्ये बहुलमि'त्यनेन दीर्घः ।

ननु श्रमेरुदात्तोपदेशत्वान्मान्तत्वाच्च 'नोदात्तोपदेशस्य मान्तस्याऽनाचमेरि'ति वृद्धि-

निषेधे विश्रम इति प्रयोगे न स्यादत आह—विश्राम इति त्वपाणिनीयमिति—श्रमेर्णिजन्तादच् विधाने तु विश्राम इति प्रयोगःसाधुरेव भवितुमर्हति, अत एव धुर्यान्विश्रामयेति स इति रघुकाव्यपद्यसङ्गतिः । नच णिच्यपि वृद्धिनिषेधः स्यादितिवाच्यम् । नोदात्तोपदेशेत्यत्र कृतीत्यस्यानुवर्तनेन णिचि वृद्धिनिषेधाप्राप्तेः । 'मितां ह्रस्व' इति ह्रस्वोऽपि नाशङ्क्यः । वेत्यनुवर्तनाद्व्यवस्थितविभाषाश्रयणेन ह्रस्वाभावात् । एवं चोक्तरीत्या प्रयोगस्य साधुत्वेऽप्यर्थभेदः स्यादेव । वस्तुतस्तु—निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिति विवक्षायां न दोष इति भावः ।

ननु 'श्रिणीभुवोऽनुपसर्गे' इति सूत्रेऽनुपसर्गपदसद्भावादनुपसर्गाद्भुवो घञो विधानादुपसर्गात्ततो घञोऽविधानात्प्रभाव इति प्रयोगो न स्यादित्यभिप्रेत्य शंकते—कथं प्रभावो राज्ञ इति । समाधत्ते—प्रकृष्टो भाव इति । प्रादिसमास इति । अनुपसर्गाद्भुवो घञ्विधानेन भाव इति संसाध्य पश्चात्प्रशब्देन सह प्रादिसमासे प्रभाव इति प्रयोगोपपत्तिरिति भावः ।

ननु श्रिणीभुव इति सूत्रेण नयतेर्घञि नाय इत्यस्य साधुत्वे नय इति न स्यात् तथा च वक्ष्यमाणप्रयोगो विरुध्येतेत्याह—कथंराज्ञो नय इति । समाधत्ते—बाहुलकादिति । सूत्रे बहुलग्रहणानुवृत्त्या घञो वैकल्पिकत्वेनोक्तप्रयोगसिद्धिरिति भावः ।



इति ठक्कुरोपनामकश्रीकनकलालशर्मणः कृतौ फक्किकारत्नमञ्जूषायां कारकादिकृदन्तान्तो द्वितीयः खण्डः समाप्तः ॥

---

चतुर्थं संस्करणम् )



( विद्याविलास यन्त्रालये मुद्रितम् )

सर्वविधपुस्तकप्राप्तिस्थानम्—

श्रीहरिकृष्णनिबन्धभवनम्

॥ श्रीः ॥

# प्रौढमनोरमा

महामहोपाध्याय–श्रीभट्टोजीदीक्षित–विरचिता ।



महामहोपाध्याय-श्रीहरिदीक्षितविरचित–लघुशब्दरत्नव्याख्यासमेता
महामहोपाध्यायश्रीभैरवमिश्रविरचित–शब्दरत्नव्याख्यया, लवपुरीय-
प्राच्यमहाविद्यालयप्रधानाध्यापकवेदान्त–व्याकरणाचार्य–साहित्य–
मीमांसातीर्थमहामहोपाध्यायश्रीमाधवशास्त्रिभाण्डारीविरचित–
प्रभानामकटिप्पण्या, आयुर्वेद–व्याकरणाचार्य–
साहित्यतीर्थ–धर्मशास्त्रशास्त्रिपदवीकश्रीयुतपण्डितजग-
न्नाथशास्त्रिकृतयाऽव्ययीभावप्रकरणस्थ–शब्द-
रत्नप्रदीपकनामकटिप्पण्या
च समलङ्कृता ।

---

विद्वद्वृन्द !

आप लोगों को यह सूचित करते अत्यन्त हर्ष होता है कि उपरोक्त मनोरमा शब्दरत्न तथा भैरवी व्याख्याके साथ वेदान्त–व्याकरणाचार्य–साहित्य–मीमांसातीर्थ म० म० श्रीयुतपं०माधवशास्त्री भाण्डारी विरचित प्रभाटिप्पणी तथा अनेकशास्त्र के विद्वान् श्रीयुत पं० जगन्नाथशास्त्रीजी कृत अव्ययीभावप्रकरण पर शब्दरत्न प्रदीपक नामक टिप्पणी से अलङ्कृत होने से यह संस्करण इतना सुन्दर तथा परीक्षोपयोगि हुआ कि सीर्फ अल्प समय में ही प्रथम संस्करण हाथो हाथ बिकगया, इस परिवर्धित द्वितीय संस्करण में व्याकरणशास्त्र के परम विद्वान् पं० सदाशिवशास्त्रिकृत "विभा" नामकी टिप्पणी भी नवीन दी गई है। ग्रन्थ अत्यन्त उत्तम नवीन, अक्षरों से ग्लेज़ चिकने मोटे कागज पर छपा है । मूल्य भी अल्प केवल ४) है। विद्यार्थियों को कमीशन काट कर ३।) में दिया जायगा।

---

सर्वविधपुस्तकप्राप्तिस्थानम्—

श्रीहरिकृष्णनिबन्धभवनम्

बनारस सिटी ।

